तु न स्त्रियाम्, मे. गञ्जा खनौ सुरागेहे स्याद् भाण्डागाररीढयोः। गञ्ज', वि. गञ्जो भाण्डागारे रीढाखन्योर्गञ्जा सुरालये, हे. खनौ सुरागृहे गञ्जा, त्रि गञ्जो भाण्डारे, ह.

**गड**—गडो मीनान्तराययोः, मे., वि., हे.

**गडु**—गडुः पृष्ठगुडे कुब्जे, मे., वि , हे.

**गण**—गणः प्रमथसङ्घौघे चण्डासैन्यप्रभेदयो', मे. गण. समूहे प्रमथे संख्या-सैन्यप्रभेदयोः, वि. गण प्रमथसङ्घयो । समूहे सैन्यभेदे च, हे. सङ्घाते प्रमथे गण', अ.

**गणाधिपति**—स्याद्गणाधिपतिः पुंसि शङ्करेऽपि गजानने, मे. गणाधिपति-राख्यातः शङ्करेऽपि गजानने, वि स्याद्गणाधिपतिर्विघ्ननायके पार्वतीपतौ, हे.

**गणक**—गणिका यूथीवेश्येभीतर्कारीषु ना तु दैवज्ञे, मे., गणिका यूथिका-वेश्यातर्कारीकरिणीषु च। गणकोऽपि च दैवज्ञे, वि वेश्यायूथ्योश्च गणिका, त्रि गणको ग्रहवेदिनि। गणिकेभ्या यूथिकाया तर्कार्यां पण्ययोषिति, हे. हस्तिन्या गणिका, ह.

**गणेरु**—गणेरु. कर्णिकारद्रौ करिणीवेश्ययो स्त्रियाम्, मे. v. कणेरु.

**गण्ड**—गण्ड. स्यात् पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे, मे गण्ड कपोले पिटके योगभेदे च गण्डके। गण्ड प्रवीरे चिह्ने स्याद् अश्वभूषणबुद्बुदे, वि गण्डस्तु वीरे पिटक-चिह्नयो'। कपोले गण्डके योगे वाजिभूषणबुद्बुदे, हे गण्डः कपोले पिटके श्रेष्ठगण्डकयोः पुमान्, त्रि

**गण्डक**—गण्डक' पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयो'। अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे, मे. गण्डकः खड्गिनि स्यात सख्याविद्याप्रभेदयोः। अवच्छेदे-ऽन्तराये च गण्डकी सरिदन्तरे, वि गण्डको विघ्ने विद्याया सख्यावच्छेदखड्गिषु। गण्डकी तु सरिद्भेदे, हे, सङ्ख्याभेदे च गण्डकः, त्रि.

**गण्डशैल**—गण्डशैलो ललाटे स्याच्च्युतस्थूलोपले गिरे', मे., वि. गण्डशैलो-ऽद्रिच्युतस्थूलाश्मभालयो', हे.

**गण्डूष**—गण्डूषो मुखपूर्तीभपुष्करप्रसृतोन्मिते, मे., गण्डूषो मुखपूर्तौ स्यात् करिहस्ताङ्गुलावपि। प्रसृतोन्मिते, वि. गण्डूषो मुखपूरणे। गजास्ये च कराङ्गल्या प्रसृत्या प्रमितेऽपि च, हे.

**गत**—गतं विज्ञानयातयोः, मे. गतन्तु याताविगते, वि.

**गति**—गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः। नाडीव्रणसरण्यां च,

मे. गतिर्वृहद्व्रणे ज्ञाते यात्रोपायदशाध्वसु, हे. गतिर्मार्गे दशायाञ्च ज्ञाने यात्राभ्युपाययोः। नाडीव्रणसरण्याञ्च, वि. गतिर्यात्रादृशोपायाः, त्रि. v दशा.

**गद**—गदो भ्रातरि विष्णोः स्याद् आमये नाऽयुधे गदा, मे. गदो भ्रातरि विष्णोः स्याद् आमयेऽप्यायुधे गदा, वि. गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे, हे. अथामये गदः। विष्णोर्भ्रातरि चास्त्रे स्त्री, त्रि

**गदयित्नु**—गदयित्नु पुमान् कामे जल्पाके कामुकेऽपि च, मे गदयित्नुः स्मृतः कामे जल्पाके कार्मुकेऽपि च, वि गदयित्नुः शरासने। जल्पाके पुष्पचापे च, हे.

**गन्ध**—गन्धः प्रतिवेश्यामोदलेशसम्बन्धगन्धकेषु, मे गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो', वि. गन्धः सम्बन्धलेशयो.। गन्धकामोदगर्वेषु, हे गन्धो गर्वे बलेऽपि च, त्रि. गन्धो लेशेऽपि, ह.

**गन्धन**—गन्धनमुत्साहे स्यात् प्रकाशने सूचनेऽपि हिंसायाम्, मे. गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने, वि गन्धनन्तु प्रकाशने। सूचनोत्साहहिंसासु, हे. उत्साहने च हिंसायां सूचने चापि गन्धनम्, अ. उत्साहनसूचनयो प्रकाशने गन्धन प्रोक्तम्, ह.

**गन्धफली**—गन्धफल्यपि गुन्द्राया चम्पकस्य च कोरके, मे गन्धफली प्रियङ्गौ स्यात् कोरके चम्पकस्य च, वि. गन्धफली तु प्रियङ्गौ चम्पकस्य च कोरके, हे.

**गन्धमादन**—स्याद्गन्धमादनो भृङ्गे गन्धके वानरान्तरे। स्त्री सुराया नगे न स्त्री, मे. गन्धमादनमित्याहुर्गन्धके वानरान्तरे। अद्रिभेदे च भृङ्गे च सुरायां गन्धमादनी, वि. गन्धमादनः कप्यद्रिभिदोरलौ च गन्धके। गन्धमादनी सुरायाम्, हे.

**गन्धर्व(र्वं)**—गन्धर्वः पशुभेदे स्यात् पुस्कोकिलतुरङ्गयो'। अन्तराभवसत्त्वे च गायने खेचरेऽपि च, मे. गन्धर्वो मृगभेदे स्यात् पुस्कोकिलतुरङ्गयोः। अन्तराभवसत्त्वे च गायने खेचरेऽपि च, वि. गन्धर्वस्तु नभश्चरे। पुस्कोकिले गायने च मृगभेदे तुरङ्गमे। अन्तराभवदेहे च, हे. अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने, अ. गन्धर्वो देवजातिः स्याद् गन्धर्वो हि तुरङ्गमः। गन्धर्वश्च स्मृतो गीतो गन्धर्वो मृगपुङ्गवः, अने.

**गन्धवती**—अथ गन्धवती पृथ्वीपुरीभिद्व्यासमातृषु। सुरायाञ्च, मे गन्धवती सुराभूम्योः पुरीयोजनगन्धयोः, वि. गन्धवती सुराभूम्योः पृथ्वीयोजनगन्धयोः, हे.

**गन्धवह**—स्याद्गन्धवहा नासायां पुलिङ्गो मातरिश्वनि, म. गन्धवहा तु नासाया वायौ गन्धवहो मनः, वि. गन्धवहो मृगेऽनिले। गन्धवहा तु नासायाम्, हे.

**गन्धार**—गन्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे, हे. v. गान्धार.

**गन्धोली**—गन्धोली भद्राशटचोश्च योषिति, मे. गन्धोली वरटाभद्राशटीषु कथिता बुधैः, वि. गन्धोली वरटाशटचोर्भद्रायाम्, हे.

**गभस्ति**—गभस्तिः किरणे सूर्ये स्वाहाया च विलोक्यते, वि. गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि, हे. गभस्तिः किरणे सूर्ये ना स्वाहायान्तु योषिति, मे.

**गम**—गमो नाऽक्षविवर्ते स्याद् अपर्यालोचितेऽध्वनि, मे. गमो द्यूतप्रभेदे स्याद् अपर्यालोचितेऽध्वनि, वि. गमोऽध्वद्यूतभेदयो । सदृक्पाठे, हे

**गय**—गयः स्यात् पशुराजर्ष्योर्भेदे तीर्थे पुनर्गया, मे

**गर**—गरी खराया करणे क्लीव नोपविषे विषे, मे गरो व्याधावुपविषे विषे च करणे गरम्, वि. गरस्तूपविषे विषे । रोगे गर स्यात् करणे, हे.

**गरल**—गरल तृणपूले च विषे माने नपुसकम्, मे. गरलन्तु विषे माने गरल तृणपूलके, वि. गरलं पन्नगविषे तृणपूलकमानयो , हे.

**गरुत्मत्**—गरुत्मारच पक्षिमात्रे खगाधिपे, मे गरुत्मान् विहगे तार्क्ष्ये, वि. गरुत्मास्तु विहगे पन्नगाशने, हे पक्षितार्क्ष्यौ गरुत्मन्तौ, अ.

**गर्ग**—(गर्गो मुनिविशेषे स्याद् वृषे किञ्चुलुकेऽपि च, हे.)

**गर्गर**—गर्गरो मीनभेदे स्त्री मन्थन्याम्, मे. गर्गरो मीनभेदे स्यात् मन्थन्यामपि गर्गरी, वि. गर्गरो मीने स्याद्गर्गरी तु मन्थनी, हे

**गर्जन**—गर्जनं निनदे कोपे, मे गर्जनं स्तनिते क्रुधि, हे गर्जनं निस्वने कोपे, वि.

**गर्जित**—गर्जित वारिवाहादिध्वनौ ना मत्तकुञ्जरे, मे गर्जितो मत्तमातङ्गे गर्जित जलदध्वनौ, वि. गर्जितो मत्तकुञ्जरे। गर्जितं जलदध्वाने, हे गर्जितं स्तनिते नेभे, त्रि.

**गर्त**—गर्तस्त्रिगर्तभेदे स्याद् अवटे च कुकुन्दरे, मे., वि. गर्तोऽवटे कुकुन्दरे। त्रिगर्तांशे, हे.

**गर्दभ**—गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तु-रोगविशेषयोः, मे. गर्दभो गन्धभेदे स्याद् गर्दभं कैरवे खरे। गर्दभो गर्दभी क्षुद्र-रोगजन्तुविशेषयो., वि. गर्दभो रासभे गन्धे गर्दभी जन्तुरुग्भिदोः। गर्दभन्तु सितकुमुदे, हे. गर्दभ श्वेतकुमुदे खरे पुसि, त्रि.

**गर्भ**—गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके, मे., वि. गर्भः कुक्षौ शिशौ सन्धौ भ्रूणे पनसकण्टके। मध्यमे चापवरके, हे. कुक्षिभ्रूणाऽर्भका गर्भाः, अ.

**गर्मुत्**—गर्मुत् स्त्री स्वर्णलतयो, मे गर्मुत् सुवर्णलतयो, वि शैले तृणविशेपेऽर्के त्रिपु गर्मुदिति ध्वनि, अने

**गर्व**—गर्वोऽभिमानेऽवलेपे, मे

**गल**—गल सर्जरसे कण्ठे, मे, वि गल कण्ठे सर्जरसे, हे

**गवाक्ष**—गवाक्षी शक्रवारुण्या गवाक्षो जालके कपौ, वि, मे गवाक्षो जालके कपौ। गवाक्षी त्विन्द्रवारुण्याम्, हे

**गवादनी**—गवादनीन्द्रवारुण्या गवा घासादनाश्रये, मे, वि गवादनीन्द्रवारुणी। घासस्थान गवादीनाम्, हे

**गव्य**—गव्य नपुसके ज्याया रागद्रव्यऽप्यथ स्त्रियाम्। गोसमूहे त्रिलिङ्गन्तु गोदुग्धादौ च गोहिते, मे गव्य च गोहिते तथा क्षीरादिके गवाम्। रागद्रव्ये च गव्या तु गोकुले कथिता बुधै, वि गव्य क्षीरादिके ज्याया रागवस्तुनि गोहिते। *गव्या गोवृन्दगव्यत्यो, हे गव्य गोहितदुग्धादौ ज्याया गव्या तु गोकुले, त्रि*

**गहन**—गहन कलिले त्रिपु। नपुसक गह्वरे स्याद् दु खकाननयोरपि, मे गहन गहने दु खे विपिने कलिलेऽपि च, वि गहन वनदु खयो। गह्वरे कलिले चापि, हे गहन गह्वरे दु खे वने, त्रि

**गह्वर**—अथ गह्वरम्। गुहागहनदम्भेपु निकुञ्जे तु पुमानयम्, मे गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि, वि गह्वरो विलदम्भयो। कुञ्जे, हे गुहादम्भौ गह्वरे, अ गह्वरे द्वे गुहाकुञ्जे, त्रि दम्भेऽपि गह्वरम्, ह

**गाङ्ग**—गाङ्गस्तु गङ्गासम्भूते त्रिपु भीष्मे गुहे पुमान्, मे गाङ्गस्तु गङ्गासम्भूते भीष्मे शक्तिधरेऽपि च, वि v गाङ्गेय

**गाङ्गेय**—गाङ्गेय स्यात् पुमान् भीष्मे क्लीव स्वर्णकसेरुणो, मे गाङ्गेयो जाह्नवीसुते। कसेरुस्वर्णमुस्तेपु गाङ्गयमिति कथ्यते, वि गाङ्गेय स्वर्णमुस्तयो। कसेरुण्यथ गाङ्गेयो गाङ्गवत् स्कन्दभीष्मयो, हे कशेरुहेम्नोर्गाङ्गेयम्, अ भीष्मे ना हेम्नि गाङ्गेयम्, त्रि

**गाढमुष्टि**—गाढमुष्टि कृपाणे ना कृपणे त्वभिधेयवत्, मे स्याद् गाढमुष्टि कृपणे कृपाणादिपु चेष्यते, वि गाढमुष्टिस्तु कृपणे कृपाणप्रभृतावपि, हे

**गाण्डी(ण्डि)व**—*गाण्डीवो गाण्डिवश्चास्त्री कार्मुकेऽर्जुनकार्मुके*, मे गाण्डीव गाण्डिव जिष्णो कोदण्डे कार्मुकेऽपि च, वि गाण्डीवगाण्डिवौ चापमात्रे पार्थधनुष्यपि, हे

**गातु**—गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिपु रोषणे, मे गातु पुस्कोकिले भृङ्गे गन्धर्वे रोपणेऽपि च, वि, हे

**गात्र**—गात्रं गजाग्रजङ्घादौ क्लीवमङ्गे कलेवरे, मे. गात्रमङ्गे कलेवरे। स्तम्बेरमाग्रजङ्घाया विभागेऽपि समीरितम्, वि. गात्रमङ्गशरीरयोः। गजाग्रदेशे, हे

**गाथा**—गाथा श्लोके संस्कृतान्यभाषाया गेयवृत्तयोः, मे. गाथा वाग्भेदवृत्तयोः, वि., हे.

**गाध**—गाधः स्थाने च लिप्सायाम्, मे., वि. गाधः स्यात् स्थानलिप्सयोः, हे.

**गान्धार**—गान्धारः पुंसि सिन्दूरे रागदेशप्रभेदयोः, मे. गान्धारः सिन्दूरे रागदेशयोः, वि. स्वरे रणे च गान्धारः, त्रि.

**गान्धिक**—गान्धिको लेखकेऽपि स्यात् सुगन्धिव्यवहारिणि, मे. गान्धिकं लेखकं प्राहुः सुगन्धिव्यवहारिणि, वि गान्धिको लेखके गन्धवाणिजे, हे. गान्धिको लेखकेऽपि स्यात्, त्रि

**गायत्री**—गायत्री त्रिपदादेवीच्छन्दोभित्खदिरेषु च, मे. गायत्री कथिता च्छन्दःप्रभेदे खदिरेऽपि च, वि. गायत्री खदिरे छन्दोविशेषे, हे गायत्री खदिरे स्त्री स्यात् छन्दस्यपि षडक्षरे, त्रि.

**गारुड**—अथो गारुडं क्ष्वेडमन्त्रे मरकतेऽपि च, मे गारुडं स्यान्मरकते विषशस्त्रेऽपि गारुडम्, वि. गारुडं तु मरकते विषशास्त्रे, हे.

**गाल**—गालः स्कन्धमहीरुहो, वि

**गालव**—गालवस्तु मुनौ लोध्रे, मे गालवो मुनिलोध्रयो., वि., हे., त्रि.

**गिर्**—गी स्त्री भाषासरस्वत्यो, मे. वचो वाक्यञ्च गीर्मता, अने. v. वाच्.

**गिरि**—गिरिर्ना नेत्ररुग्भिदि। अद्रौ गिरियके योपिद् गीर्णे पूज्ये पुनस्त्रिषु, मे गिरिर्गीर्णे गिरियके क्रीडाकन्दुकशैलयोः। नेत्रामयविशेषेऽपि पूज्ये तु गिरिरन्यवत्, वि. गिरि. पूज्येऽक्षिरुजि कन्दुके। शैले गिरियके गीर्णावपि, हे.

**गिरिज**—गिरिजं त्वभ्रकेऽपि स्यात् शिलाजतुनि शैलजे। लोहेऽपि गिरिजा गौरीमातुलुङ्ग्योश्च योषिति, मे. गिरिजं चाभ्रके स्यात शिलाजतुसुगन्धयोः। लोहेऽपि गिरिजा गौरीमातुलिङ्ग्योरुदीरिता, वि. गिरिजमभ्रके। शिलाजतुनि लोहे च गिरिजा मातुलुङ्ग्युमा, हे.

**गिरिसार**—गिरिसारः पुमान् लोहे वङ्गे मलयपर्वते, मे. गिरिसारो भवेल्लोहे लिङ्गे मलयपर्वते, वि. गिरिसारः पुनर्लोहे लिङ्गे मलयपर्वते, हे.

**गिरीश**—गिरीशोऽद्रिपतौ वाचस्पतिशङ्करयोः पुमान्, मे गिरीशो वाक्पतौ रुद्रे गिरीशोऽद्रिपतावपि, वि. गिरीशो वाक्पतौ हरे। अद्रिराजे, हे

**गीत**—गीतं शब्दितगानयोः, मे., हे., त्रि. गीतन्तु शब्दिते गाने, वि.

**गीति**—गीतिश्छन्दसि गाने स्त्री, मे. गीतिश्छन्दसि गाने च, वि., हे.

**गुच्छ(ञ्छ)**—स्याद् गुच्छ स्तवके स्तम्बे हारभेदकलापयो मे, वि गुञ्छो गुञ्छो हारकलापयो, हे गुच्छ स्तवकहारयो, अ

**गुञ्जा**—गुञ्जा तु काकचिञ्चाया पटहे च कलध्वनौ, मे गुञ्जा तु कृष्णलाया स्यात् पटहे मधुरध्वनौ हे गुञ्जाऽपि पटहे प्रोक्ता काकचिञ्च्या कलध्वनौ, वि गुञ्जे पटहकृष्णले, त्रि

**गुड**—गुड स्याद् गोलके हस्तिसन्नाहेक्षुविकारयो । गुडा स्नुह्याञ्च कथिता गुडिकायाञ्च योषिति, मे गुड स्याद गोलके हस्तिसन्नाहेक्षुविकारयो । गुडा स्नुहीगुडिकयो, वि गुड कुञ्जरसन्नाहे गोलकेक्षुविकारयो । गुडा तु गुडिका स्नुह्यो, हे गुडो गोलेक्षुपाकयो, अ

**गुण**—गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्यादिसत्त्वादि-सन्ध्याद्यावृत्तिरज्जुषु। शुक्लादावपि बट्याञ्च मे गुणो ज्यासूदतन्तुषु। रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये। रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे, हे मौर्व्या द्रव्यश्रिते सत्त्वशौर्यसन्ध्यादिके गुण, अ गुण स्याद्रज्जुसूदयो त्रि सत्त्वादौ रूपादौ सर्वादौ तन्तुषु प्रयोगज्ञा । गुणशब्द शिञ्जिन्या प्रयोजयन्त्य-प्रधानेऽपि, ह गुणोऽप्रधाने रूपादौ मौर्व्या सूदे वृकोदरे। शुद्धे सत्त्वादिसन्ध्यादि-विद्यादिहरितादिषु, वि

**गुणनिका**—भवेदगुणनिका नृत्ये शून्याङ्के पाठनिश्चितौ, मे वि गुणनिका तु शून्याङ्के नर्तने पाठनिश्चये हे शून्याङ्केऽपि गुणनिका, हा

**गुण्डक**—गुण्डको मलिने धूलौ कलोक्तिस्नेहपात्रयो मे वि गुण्डक पुन । कलोक्तौ मलिने धूलौ स्नेहपात्रे, हे

**गुत्स**—गुत्स स्यात स्तवके स्तम्बे हारभिद्ग्रन्थिपर्णयो, मे गुत्स स्तम्बे हारभेदे स्तवके ग्रन्थिपर्णके वि गुत्स स्तम्बगुलुञ्छयो । हारभेदे ग्रन्थिपर्णे, हे गुत्स स्तवकहारयो, त्रि

**गुन्द्र**—गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके, मे गुन्द्रस्तेजनके गुन्द्रा प्रियङ्गौ भद्रमुस्तके। कैवर्तीमुस्तके चापि, वि गुन्द्रस्तु तेजने। गुन्द्रा प्रियङ्गौ कैवर्तीमुस्तके भद्रमुस्तके, हे गुन्द्रस्तेजनके गुन्द्रा त्रिलिङ्गया भद्रमुस्तके, त्रि

**गुप्त**—गुप्त स्याद् रक्षिते गूढे, मे गुप्त गूढे त्राते, हे गुप्त रक्षितगूढयो, वि, त्रि

**गुप्ति**—गुप्ति स्थ्यवकरस्थाने कारागारे च रक्षणे, मे गुप्ति कारागृहे प्रोक्ता भूगर्ते रक्षणे यमे, वि गुप्तिर्यमे भूगर्तरक्षयो । कारायाम्, हे गुप्ति क्षितिव्युदासेऽपि, अ

गुम्फ—गुम्फ स्याद् गुम्फने वाहोरलङ्कारे च कीर्त्यते, वि गुम्फो दोर्भूषणे दृब्धौ, हे गुम्फस्तु गुम्फने वाहोरलङ्कारे च कीर्त्यते, मे

गुरु—गुरुस्त्रिलिङ्गया महति दुर्जरालघुनोरपि । पुमान् निषेकादिकारे पित्रादौ सुरमन्त्रिणि, गे गुर्निषेकादिकारे पित्रादौ सुरमन्त्रिणि । दुर्जरालघुनो प्रोक्तो गुरुर्महति वाच्यवत्, वि गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके । अलघौ दुर्जरे चापि, हे गुरू गीष्पतिपित्राद्यौ, अ गुरुस्त्रिलिङ्गया महति दुर्जरालघुनोरपि, त्रि गुरु पिता गुरुर्ज्येष्ठो गुरु सुरपुरोहित । दुर्भरोऽपि गुरु प्रोक्तो गुरु शिष्याभिषेचक , अने

गुल—गुल स्यादैक्षवे पुमान् । गुली तु गुटिकारोगभिदो स्नुह्या गुला स्मृता, मे

गुल्म—गुल्म सेनाघट्टभिदो सैन्यरक्षणरुग्भिदो । स्तम्बे स्त्रियामामलक्येलावनीवस्त्रवेश्मसु, मे गुल्म स्तम्बे प्लीह्नि घट्टसैन्ययो सैन्यरक्षणे । गुल्मी स्यादामलक्येलावनिकावस्त्रवेश्मसु, वि गुल्म सैन्योपरक्षणे । रुक्सैन्यघट्टभेदेषु स्तम्भे गुल्मी पटौकसि । आमलक्येलयोर्वन्याम्, हे गुल्मा रुक्स्तम्बसेनाश्च, अ गुल्म स्तम्बे घट्टभेदे, त्रि

गुह—गुह षाण्मातुरे गुहा । सिंहपुच्छ्याञ्च गर्ते च पर्वतादेश्च गह्वरे, मे गुह स्कन्दे गुहा पुन । गह्वरे सिंहपुच्छ्या च, हे गुहा तु गह्वरे सिंहपुच्छ्या स्कन्दे गुहो मत , वि

गुह्य—गुह्य रहस्युपस्थे च गुह्य कमठदम्भयो , मे , वि गुह्य कमठदम्भयो । गुह्यमुपस्थे रहस्ये, हे रहस्योपस्थयोर्गुह्यम्, अ

गूढ—गूढ रहसि गुह्ये च न द्वयो सवृते त्रिषु, मे गूढ रह सवृतयो , हे गूढ रहसि गुह्ये च सवृते पुनरन्यवत्, वि

गृञ्जन—गृञ्जनम् । विषदग्धपशोर्मांसे क्लीब पुंसि रसोनके, मे गृञ्जनस्तु रसोनके । विषदिग्धपशोर्मांसे गृञ्जन च प्रकीर्तितम्, वि गृञ्जन विषदिग्धस्य पशोर्मांसे रसोनके, हे विषदिग्धपशोर्मांसे गृञ्जन ना रसोनके, त्रि

गृध्र—गृध्र खगान्तरे पुंसि वाच्यलिङ्गेऽर्थलुब्धके, मे गृध्र खगान्तरे प्रोक्त वाच्यवच्चार्थलुब्धके, वि गृध्रो गृध्नौ खगान्तरे, हे गृध्र स्याल्लोभिपक्षिणो , त्रि

गृष्टि—अथ गृष्टि सकृत्सूतगवीवदरयो स्त्रियाम्, मे गृष्टिस्तु सकृत्सूतगवी भवेत् । वराहक्रान्ता च, हे गृष्टि धेन्वोपचीभिदो , त्रि

गृह—गृह गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि, मे गृहा पत्न्या गृहे स्मृता, वि गृहा दारेषु सद्मनि, हे दारेषु च गृहा , अ

**गृहपति**—भवेद् गृहपति पुसि गृहस्थेऽपि च मन्त्रिणि, मे गृहपतिर्गृहस्थे स्याद् ग्रत्याधाने च मन्त्रिणि, वि गृहपतिर्गृही मन्त्री, हे गृही मन्त्री गृहपति , त्रि

**गृह्य**—गृह्य गुदे ग्रन्थिभेदे क्लीबे शाखापुरे स्त्रियाम्। गृहासक्तमृगादौ ना त्रिपु चास्वैरिपक्षयो , मे गृह्य पुरीषमार्गेऽपि भवेदस्वैरपक्षयो । गृह्या च शाखानगरे गृह्यश्छेकेऽप्युदीरित , वि गृह्यन्तु मलवर्त्मनि। गृह्योऽस्वैरिणि पक्षे च गृहासक्तमृगाण्डजे। गृह्या तु शाखानगरे हे गृह्यमस्वैरिपक्षयो , त्रि

**गृह्यक**—गृह्यको निघ्नके च्छेके, मे गृह्यकश्छेकनिघ्नयो वि, त्रि

**गेय**—गेय स्याद् गातव्ये गायने त्रिपु, मे गेयो गातव्ये गायनेऽपि च, वि गेयौ गातव्यगायनौ, हे गातव्यगायनौ गेयौ, त्रि

**गेष्णु**—गेष्णुर्ना गायने नटे, मे गेष्णुर्नटे गायके च, हे गेष्णुर्नटे गायने च, वि

**गैरिक**—गैरिक धातुरुक्मयो , मे गैरिक कनके धातौ, वि ग्रथ गैरिकम्। स्वर्णे धातौ, हे स्वर्णेऽपि गैरिकम्, ग्र

**गो**—गौ स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयीदृग्बाणदिग्वाग्भूप्स्वप्सु भूम्नि च, मे गौ स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृत । ग्रर्जुनोनेत्रदिग्बाणभूवाग्वारिपु गौर्मता, वि गौरुदके दृशि। स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि, हे स्वर्गेपुपशुवाग्वज्रादिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रिया पुसि गौ , ग्र स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौ पुमान्। स्त्री बाणरोहिणीदृग्दिग्वाग्भूमिप्स्वप्सु भूम्नि च, त्रि दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिपु। भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृत , ह बाणे वाचि पशौ भूमौ दिशि रश्मौ जलेऽक्षिणि। स्वर्गे मातरि वज्रेऽग्नौ सुखे सत्ये च गोध्वनि , ग्रने

**गोकण्टक**—गोकण्टको गोक्षुरके स्यपुटे च गवा खुरे, मे, वि गोकण्टको, गोक्षुरके गोखुरे स्यपुटीकृते, हे

**गोकर्ण**—गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे। ग्रगुष्ठानामिकोन्माने गोकर्णी मूर्विकौपधौ, मे गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमयान्तरे। ग्रगुष्ठानामिकोन्माने गोकर्णी मूर्विकौपधौ, वि गोकर्ण प्रमयान्तरे। ग्रगुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयो । गोकर्णी तु मूर्विकायाम्, हे ग्रगुष्ठानामिकोन्माने गोकर्णोऽहौ मृगेऽपि च, त्रि

**गोकिल**—गोकिलो मुपले हले, हा गोकिल । मुपले लाङ्गले चापि, हे गोकिलो मुसले हले, वि , मे

**गोकुलिक**—स्याद् गोकुलिको वलिरे पङ्कस्थगव्युपेक्षके, मे. गोकुलिकः केकरे स्यात् पङ्कस्थगव्युपेक्षके, वि., हे.

**गोग्रन्थि**—गोग्रन्थिर्ना करीषे स्याद्गोष्ठे गोजिह्विकौपधौ, मे., वि.

**गोजागरि**—गोजागरिकमित्याहुर्मङ्गले कण्टकारके, वि. गोजागरिक मङ्गले पुंसि स्यात् कण्टकारके, मे. स्याद् गोजागरिक भक्ष्यकारके मङ्गलेऽपि च, हे.

**गोडुम्ब**—गोडुम्बः शीर्णवृन्ते च गवादन्यान्तु योपिति, मे. गोडुम्बः शीर्ण-वृन्ते स्याद् गवादन्या फलेऽपि च, वि.

**गोण्ड**—गोण्ड. पामरजातौ च वृद्धनाभौ च तद्वति, मे. गोण्डः पामरजातौ च वृद्धनाभौ च वाच्यवत्, वि गोण्ड स्याद् वृद्धनाभिके। पामरजातौ च, हे.

**गोत्र**—गोत्रा भूगव्ययोर्गोत्र शैले गोत्र कुलाख्ययो । सम्भावनीयवोधे च काननक्षेत्रवर्त्मसु, मे. गोत्र नाम्नि कुले क्षेत्रे कानने चित्तवर्त्मनो । सम्भावनीय-बोधेऽपि गोत्र क्षौणीधरे मत । गोसमूहभुवोर्गोत्रा, वि. गोत्र नाम्नि कुले पुंसि शैले भूगव्ययो स्त्रियाम्, त्रि गोत्रं नामान्वयो गोत्रो गोत्रश्च धरणीधर.। गोत्रा वसुन्धरा ज्ञेया गोत्रञ्च प्रवर स्मृतम्, अ्रने गोत्र क्षेत्रेऽन्वये च्छत्रे सम्भाव्यबोध-वर्त्मनो । वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवाङ्गणे, हे. गोत्रन्तु नाम्नि च, अ्र. गोत्र नाम्नि तथान्वये, ह

**गोदन्त**—गोदन्तो हरिताले स्याद् दंशिते हरितेऽपि च, वि. गोदन्तो हरिताले स्यात् सन्नद्धे दंशितेऽपि च, हे. गोदन्तो हरितालेऽपि, ह.

**गोधा**—गोधा तलनिहाकयो, मे. गोधा तले निहाकायाम्, वि. गोधा प्राणिविशेषे स्यात् ज्याघातस्य च वारणे, हे गोधा तले निहाकायाम्, त्रि.

**गोधूम**—गोधूमो नागरङ्गे स्यादोपधिव्रीहिभेदयो, मे गोधूमो नागरङ्गे स्याद् भेपजव्रीहिभेदयो, वि. गोधूमो भेपजे नागरङ्गव्रीहिप्रभेदयो, हे.

**गोनर्द**—गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे, मे.

**गोप**—गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामस्याधिकृते पुंसि शारिवाख्यौपधौ स्त्रियाम्, मे. गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे। गोपी गोपालमहिलाशारिवारक्तिकासु च, वि. गोपो भूपालवल्लवौ। ग्रामौघगोष्ठाधि-कृतौ गोपी गोपालसुन्दरी। शारिवा रक्तिका, हे. गोधुग्गोष्ठपती गोपौ, अ्र.

**गोपति**—गोपतिः शिवषण्डयोः। नृपभास्करयो. पुंसि, मे. गोपतिः शङ्करे षण्डे पार्थिवेऽपि विकर्तने, वि गोपतिः शङ्करे षण्डे नृपतौ त्रिदशाधिपे। सहस्र-किरणे चापि, हे. षण्डः सूर्यश्च गोपतिः, त्रि.

**गोपाल**—गोपालो नृपगोपेशे, मे. गोपालो गोपभूपयोः, वि., हे. गोपो भूपश्च गोपालौ, त्रि.

**गोपुर**—गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च, मे. गोपुरन्तु पुरद्वारि द्वारमात्रे च मुस्तके, वि. गोपुरं पुनः। मुस्तके द्वारि पूर्द्वारे, हे. द्वारमात्रेऽपि गोपुरम्, ग्र. पूर्द्वारि द्वारि गोपुरम्, त्रि.

**गोप्य**—गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्, मे. गोप्यो दासीसुते गोप्यो रक्षणीयेऽभिधेयवत्, वि. गोप्यौ दासेरगोप्तव्यौ, हे. गोप्यौ गोप्तव्य-चेटकौ, त्रि.

**गोमिन्**—गोमी शृगाले पुंसि स्यात् त्रिषु गोमत्युपासके, मे. गोमी तूपासके फेरौ, वि. गोमी फेरौ गोमत्युपासके, हे.

**गोमुख**—गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने। पुंसि मातलिपुत्रे च महादेवगणान्तरे, मे. गोमुखं वाद्यभेदे स्याल्लेपने कुटिलौकसि, हे. गोमुखं कुटिला-गारे वाद्यभाण्डे च लेपने, वि. गोमुखं लेपने वाद्यभाण्डे, त्रि. गोमुखमुपलेपने, हृ.

**गोमेदक**—गोमेदकः पीतमणौ काकोले पत्रकेऽपि च, मे., वि. गोमेदकः पीतरत्ने काकोले पत्रकेऽपि च, हे. गोमेदकञ्च काकोले, हा.

**गोरक्ष**—गोरक्षो नागरङ्गे स्याद् गवां च परिरक्षके, वि., मे. गोरक्षौ गोप-नारङ्गौ, हे.

**गोरक्षजम्बू**—गोरक्षजम्बूर्गोधूमे तथा गोरक्षतण्डुले, वि. गोरक्षजम्बूर्गोधूमे धान्ये गोरक्षतण्डुले, हे.

**गोरङ्कु**—गोरङ्कुर्नग्नबन्दिनोः। खगे च, हे. गोरङ्कुः पक्षिजातौ च सर्व-भग्नकबन्दिनोः, वि. खगे नग्ने च गोरङ्कुः, त्रि. गोरङ्कुः स्यात् पुमान् पक्षिभेदे नग्नकबन्दिनोः, मे.

**गोलक**—गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे, मे. गोलको विधवा-पुत्रे जाराच्च मणिके गुडे, वि. गोलकस्तु जारतो विधवासुते। अलिञ्जरे गुडे पिण्डे, हे. गोलकौ मणिजारजौ, त्रि.

**गोल**—गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चालिञ्जरे बालखेलने, मे. गोला सखीवर्तुलयोर्गोलं मद्यानुसारतः। पत्राञ्जने कुनटया च गोदावर्या च मण्डले, वि. गोलः स्यात् सर्ववर्तुले। गोला पत्राञ्जने गोदावर्यां सख्यामलिञ्जरे। मण्डले च कुनटयां च बालक्रीडनकाष्ठके, हे. मण्डले मणिके गोल गोला गोदावरी सखी, त्रि.

**गोकुलिक**—स्याद् गोकुलिको वलिरे पङ्कस्थगव्युपेक्षके, मे. गोकुलिकः केकरे स्यात् पङ्कस्थगव्युपेक्षके, वि., हे.

**गोग्रन्थि**—गोग्रन्थिर्ना करीषे स्याद्गोष्ठे गोजिह्विकौषधौ, मे., वि.

**गोजागरि**—गोजागरिकमित्याहुर्मङ्गले कण्टकारके, वि. गोजागरिकं मङ्गले पुंसि स्यात् कण्टकारके, मे. स्याद् गोजागरिकं भक्ष्यकारके मङ्गलेऽपि च, हे.

**गोडुम्ब**—गोडुम्बः शीर्णवृन्ते च गवादन्यान्तु योषिति, मे. गोडुम्ब· शीर्णवृन्ते स्याद् गवादन्या फलेऽपि च, वि

**गोण्ड**—गोण्ड पामरजातौ च वृद्धनाभौ च तद्वति, मे. गोण्डः पामरजातौ च वृद्धनाभौ च वाच्यवत्, वि गोण्ड स्याद् वृद्धनाभिके। पामरजातौ च, हे

**गोत्र**—गोत्रा भूगव्ययोर्गोत्र शैले गोत्र कुलाख्ययोः। सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु, मे. गोत्र नाम्नि कुले क्षेत्रे कानने चित्तवर्त्मनो'। सम्भावनीयबोधेऽपि गोत्र क्षौणीधरे मत। गोसमूहभुवोर्गोत्रा, वि गोत्र नाम्नि कुले पुंसि शैले भूगव्ययो स्त्रियाम्, त्रि गोत्र नामान्वयो गोत्रो गोत्रश्च धरणीधर.। गोत्रा वसुन्धरा ज्ञेया गोत्रञ्च प्रवर स्मृतम्, अने. गोत्र क्षेत्रेऽन्वये च्छत्रे सम्भाव्यबोधवर्त्मनो। वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवाङ्गणे, हे गोत्रन्तु नाम्नि च, अ. गोत्र नाम्नि तथान्वये, ह

**गोदन्त**—गोदन्तो हरिताले स्याद् दशिते हरितेऽपि च, वि. गोदन्तो हरिताले स्यात् सन्नद्धे दशितेऽपि च, हे गोदन्तो हरितालेऽपि, ह

**गोधा**—गोधा तलनिहाकयो, मे. गोधा तले निहाकायाम्, वि. गोधा प्राणिविशेषे स्यात् ज्याघातस्य च वारणे, हे गोधा तले निहाकायाम्, त्रि.

**गोधूम**—गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयो, मे गोधूमो नागरङ्गे स्याद् भेषजव्रीहिभेदयो, वि. गोधूमो भेषजे नागरङ्गव्रीहिप्रभेदयो', हे.

**गोनर्द**—गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे, मे.

**गोप**—गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामस्याधिकृते पुंसि शारिवाख्यौषधौ स्त्रियाम्, मे. गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे। गोपी गोपालमहिलाशारिवारक्तिकासु च, वि गोपो भूपालवल्लवौ। ग्रामौघगोष्ठाधिकृतौ गोपी गोपालसुन्दरी। शारिवा रक्तिका, हे. गोधुग्गोष्ठपती गोपौ, अ.

**गोपति**—गोपतिः शिवषण्डयो.। नृपभास्करयो. पुंसि, मे. गोपतिः शङ्करे षण्डे पार्थिवेऽपि विकर्तने, वि. गोपति· शङ्करे षण्डे नृपतौ त्रिदशाधिपे। सहस्रकिरणे चापि, हे षण्डः सूर्यश्च गोपतिः, त्रि.

**गोपाल**—गोपालो नृपगोपेशे, मे. गोपालो गोपभूपयोः, वि., हे. गोपो भूपश्च गोपालौ, त्रि.

**गोपुर**—गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च, मे. गोपुरन्तु पुरद्वारि द्वारमात्रे च मुस्तके, वि. गोपुर पुनः। मुस्तके द्वारि पूर्द्वारे, हे. द्वारमात्रेऽपि गोपुरम्, अ. पूर्द्वारि द्वारि गोपुरम्, त्रि.

**गोप्य**—गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्, मे. गोप्यो दासीसुते गोप्यो रक्षणीयेऽभिधेयवत्, वि. गोप्यौ दासेरगोप्तव्यौ, हे. गोप्यौ गोप्तव्य-चेटकौ, त्रि.

**गोमिन्**—गोमी शृगाले पुंसि स्यात् त्रिषु गोमत्युपासके, मे गोमी तूपासके फेरौ, वि. गोमी फेरौ गोमत्युपासके, हे.

**गोमुख**—गोमुख कुटिलागारे वाद्यभाण्डे च लेपने। पुंसि मातलिपुत्रे च महादेवगणान्तरे, मे. गोमुखं वाद्यभेदे स्याल्लेपने कुटिलौकसि, हे. गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने, वि. गोमुख लेपने वाद्यभाण्डे, त्रि गोमुखमुपलेपने, ह.

**गोमेदक**—गोमेदक पीतमणौ काकोले पत्रकेऽपि च, मे., वि. गोमेदक पीतरत्ने काकोले पत्रकेऽपि च, हे. गोमेदकञ्च काकोले, हा.

**गोरक्ष**—गोरक्षो नागरङ्गे स्याद् गवा च परिरक्षके, वि., मे. गोरक्षौ गोप-नारङ्गौ, हे.

**गोरक्षजम्बू**—गोरक्षजम्बूर्गोधूमे तथा गोरक्षतण्डुले, वि. गोरक्षजम्बूर्गोधूमे धान्ये गोरक्षतण्डुले, हे.

**गोरङ्कु**—गोरङ्कुर्नग्नवन्दिनो.। खगे च, हे. गोरङ्कुः पक्षिजातौ च भवे-न्नग्नकवन्दिनोः, वि. खगे नग्ने च गोरङ्कुः, त्रि. गोरङ्कुः स्यात् पुमान् पक्षिभेदे नग्नकवन्दिनोः, मे.

**गोलक**—गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे, मे. गोलको विधवा-पुत्रे जाराच्च मणिके गुडे, वि. गोलकस्तु जारतो विधवासुते। अलिञ्जरे गुडे पिण्डे, हे. गोलकौ मणिजारजौ, त्रि.

**गोल**—गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चालिञ्जरे बालखेलने, मे. गोला सखीवर्तुलयोर्गोलं लक्ष्यानुसारतः। पत्राञ्जने कुनटया च गोदावर्यां च मण्डले, वि. गोलः स्यात् सर्ववर्तुले। गोला पत्राञ्जने गोदावर्यां सख्यामलिञ्जरे। मण्डले च कुनटयां च बालक्रीडनकाष्ठके, हे. मण्डले मणिके गोलं गोला गोदावरी सखी, त्रि.

**गोलोमी**—गोलोमी श्वेतदूर्वाया स्याद् वचाभूतकेशयो, मे गोलोमी श्वेत-दूर्वाया षड्ग्रन्थावारयोषितो, वि गोलोमी वारयोपाया षड्ग्रन्थासितदूर्वयो, हे

**गोविन्द**—गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ, मे, वि गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ, हे, गोष्ठाध्यक्षेऽपि गोविन्द, अ गोविन्दौ हरि-गोसह्वयौ, अने

**गोष्ठ**—गोष्ठ गोस्थानके गोष्ठी सभासलापयो स्त्रियाम् मे गोष्ठ गोस्थान केऽपि च। गोष्ठी सभाया सलापे, वि गोष्ठ गोस्थानके गोष्ठी सलापे परिषद्यपि, हे

**गोष्पद**—गोष्पद गोपदश्वभ्रे गवाञ्च गतिगोचरे मे गोष्पद गोखुरश्वभ्रे गवा च गतिगोचरे, हे गोष्पद सेविते माने, अ

**गोस**—गोसो गन्धरसोपसो, वि गोसो वोलोपसो, मे गोसो वोल-विभातयो, हे

**गोस्तन**—गोस्तनो हारभेदे ना द्राक्षाया गोस्तनी स्त्रियाम्, मे *गोस्तनो* हारभेदे स्यात् द्राक्षाया गोस्तनीति च, वि गोस्तनो हारभेदे स्याद् गोस्तनी हारहारिका हे

**गौतम**—गौतमो ना मुनौ बुद्धे रोचनीदुर्गयो स्त्रियाम्, मे गौतम शाक्य सिंहे च मुनिभेदेऽथ गौतमी। रोचन्यामम्बिकाया च, वि गौतमो गणभृद्भेदे शाक्यसिंहर्षिभेदयो। गौतम्युमाया रोचन्याम्, हे

**गौर**—गौर पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयो पद्मकेसरे। गौरी त्वसञ्जातरज कन्याशङ्करभार्ययो। रोचनीरजनी-पिङ्गाप्रियगुवसुधासु च। आपगाया विशेषेऽपि यादसापतियोषिति, मे गौर श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि। विशदे गौरन्तु श्वेतसर्षपे पद्मकेसरे। गौर्यु-मानग्निकोर्वीषु प्रियङ्गौ वरुणस्त्रियाम्। रजन्या रोचनीनद्यो, हे गौरोऽरुणे सिते पीते, अ नग्नकन्योमयोर्गौरी गौर स्यादुज्ज्वलेऽपि च, त्रि गौर पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्। गौरी तु विशदे पद्मकेसरे सितसर्षपे। गौर शशिनि गौरी तु नग्नकन्योमयो स्मृता। रोचनीरजनीपिङ्गाप्रियगुवसुधासु च। नदी-भेदेऽपि गौरी स्यात् वरुणस्य च योषिति, वि गौरी शिवप्रिया प्रोक्ता गौरी गोरोचना मता। *गौरी स्यादप्रसूता स्त्री गौरी शुद्धोभयान्वया*, अने

**गौरिल**—गौरिलस्तु पुमान् लौहचूर्णे स्याद् गौरसर्षपे, मे गौरिलो लोह-चूर्णे स्याद् गौरिलो गौरसर्षपे, वि स्याद् गौरिलस्तु सिद्धार्थे लौहचूर्णे, हे

**ग्रथित**—ग्रथितो हतदृब्धयो । आक्रान्ते च, हे ग्रथित गुम्फिताक्रान्तहिंसितेपु समीरितम्, वि ग्रथित गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्, मे

**ग्रन्थ**—ग्रन्थो ग्रन्थनाधनयो स्याच्छास्त्राक्षरसख्ययो , मे ग्रन्थो धने स्यात् सन्दर्भे द्वात्रिंशद्वर्णनिर्मितौ, वि ग्रन्थो गुम्फे धने शास्त्रे द्वात्रिंशद्वर्णनिर्मितौ, हे शास्त्रद्रविणयोर्ग्रन्थ , अ ग्रन्थो द्वात्रिंशदक्षरी। घनञ्च ग्रन्थना चापि, त्रि लिपिसख्याया शास्त्रे द्रव्ये च ग्रन्थशब्दमिच्छन्ति, ह

**ग्रन्थि**—ग्रन्थिस्तु ग्रन्थिपर्णे ना वन्धे रुग्भेदपर्वणो , मे ग्रन्थि पर्वणि कौटिल्ये ग्रन्थिपर्णे गदान्तरे, वि ग्रन्थिस्तु ग्रन्थिपर्णे स्याद् गाथारुग्भेदयोरपि, हे

**ग्रन्थिक**—ग्रन्थिक पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयो । करीरे पुसि दैवज्ञे सहदेवाख्यपाण्डवे, मे ग्रन्थिक पिप्पलीमूले ग्रन्थिको गुग्गुलद्रुमे। माद्रेये च करीरे च दैवज्ञे च प्रकीर्तितम्, वि ग्रन्थिक पिप्पलीमूले ग्रन्थिपर्णकभेपजे। ग्रन्थिको गुग्गुलौ दैवज्ञे, माद्रेयकरीरयो , हे ग्रन्थिको पार्थदैवज्ञौ ग्रन्थिपर्णे च न द्वयो , त्रि

**ग्रन्थिल**—ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान्। सग्रन्थौ त्रिपु, मे ग्रन्थिलो ग्रन्थिसहिते करीरद्रौ विकङ्कते, वि ग्रन्थिलो ग्रन्थिसहिते विकङ्कतकरीरयो , हे

**ग्रस्त**—ग्रस्त जग्धे लुप्तपदोदिते, हे ग्रस्त ग्रासीकृतेऽपि स्यात् लुप्तवर्णपदोदिते, वि , मे ग्रस्त वाग्भेदभुक्तयो , त्रि

**ग्रह**—ग्रहोऽनुग्रहनिर्बन्धग्रहणेपु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयो , मे , वि ग्रहो ग्रहणनिर्बन्धानुग्रहेपु रणोद्यमे। उपरागे पूतनादौ आदित्यादौ विधुन्तुदे, हे निर्बन्धोपरागार्कादयो ग्रहा , अ ग्रहशब्द सूर्यादिपु भूतादिप्वभिनिवेशे च, ह

**ग्रहण**—ग्रहण स्वीकारादरकरोपरागोपलब्धिवन्दिपु मे ग्रहण तूपलब्धौ स्यादादरे ग्रहण करे। ग्रहोपरागस्वीकारवन्दिपु ग्रहण मतम्, वि ग्रहण स्वीकृते वन्द्या धीगुणे हस्त आदरे। ग्रहोपरागे प्रत्याये, हे ग्रहण स्वीकृतौ हस्ते, त्रि

**ग्रहराज**—ग्रहराजो रवौ चन्द्रे, मे ग्रहराजो रवौ चन्द्रेऽपि, वि ग्रहराज शशिन्यर्के, हे

**ग्राम**—ग्राम स्वरे सवसथे, मे ग्राम स्वरे सवसथे वृन्दे शब्दादिपूर्वक , वि ग्रामो वृन्दे शब्दादिपूर्वक । षड्जादौ सवसथे च, हे शब्दादिपूर्वो वृन्देऽपि ग्राम , अ ग्राम सवसथे स्वरे, नि सङ्घातेऽपि ग्रामो भूतेन्द्रियशब्दकरणानाम्, ह

**ग्रामणी**—स्याद् ग्रामणी प्रधानेऽधिपतौ त्रिपु नापिते पुसि, मे ग्रामणीर्भोगिके पत्यौ प्रधाने नापितेऽपि च। ग्रामणी-र्नीलिकायाञ्च ग्रामेयीपण्ययोपितो ,

वि ग्रामणी क्षुरर्मादिनि। प्रधाने भोगिके पत्यौ ग्रामणी पण्ययोषिति। ग्रामेय्या नीलिकायाञ्च, हे ग्रामणीर्नापिते पुसि श्रेष्ठे ग्रामाधिपे त्रिपु, श्र

**ग्राममद्गुरिका**—ग्राममद्गुरिका ग्रामयुद्धे शृङ्गीझषे स्त्रियाम्, मे ग्राममद्गुरिका शृङ्गचा ग्रामयुद्धे च कीर्त्यते, वि ग्राममद्गुरिका युद्धशृङ्गयो, हे शृङ्गचा च ग्रामयुद्धे च ग्राममद्गुरिका स्त्रियाम्, त्रि

**ग्रामीण**—ग्रामीणा नीलिकाया स्त्री ग्रामोद्भूतेऽभिधेयवत्, मे

**ग्रामीन**—ग्रामीन शुनि काके पुसि त्रिपु सम्भूते ग्रामे, मे ग्रामीनो ग्रामसम्भृते ग्रामीन शुनि वायसे, वि

**ग्राम्य**—ग्राम्य स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिपु, मे ग्राम्यो जनेऽन्यवद् ग्राम्यमश्लीलरतबन्धयो, वि ग्राम्यो ग्रामभवे जने। ग्राम्य रतवन्धेऽश्लीले, हे

**ग्रावन्**—ग्रावा तु प्रस्तरे पृथ्वीधरे पुसि, मे ग्रावा प्रस्तरे जलदे गिरौ, वि ग्रावाऽश्मनि गिरौ, हे ग्रावाणौ शैलपाषाणौ, श्र ग्रावा शैले, ह

**ग्राह**—ग्राहो ग्रहेऽवहारे च, मे, वि ग्राहो ग्रहे जलचरे, हे

**ग्राहक**—ग्राहको घातिविहगे व्याधानाञ्च ग्रहीतरि, वि, मे ग्राहको ग्रहीतरि स्याद् व्याधाना घातिपक्षिणि, हे

**ग्रीवा**—स्यात् तु ग्रीवा कन्धराया तच्छिरायाञ्च योषिति, मे ग्रीवाऽपि कन्धराया स्यात् तच्छिरायामपीष्यते, वि ग्रीवे शिरोधितच्छिरे, हे

**ग्रीष्म**—ग्रीष्म उष्मर्तुभेदयो, मे

**ग्लौ**—ग्लौर्धरण्या निशापतौ, मे

**घ**—घो घण्टाया घर्घरे ना स्त्रियान्तु काञ्चिघातयो, मे खङ्गी शिवोत्तमो मेधा दक्षिणाङ्गुलिमूलग। घनो घनस्वरश्चैव घकारो डादिम स्मृत, मा

**घट**—घट समाधिभेदेभशिर कूटकुटेपु च। घटा घटनगोष्ठीभघटनासु च योषिति, मे घटा घटने गजसहतौ। गोष्ठचा घटस्त्विभशिर कूटे समाधिकुम्भयो, हे घट समाधिभेदेभशिर कूटकुटेपु च। घटा घटनगोष्ठीभघटनासु च दृश्यते, वि घटा गोष्ठचाम्, ह

**घट्ट(ट)ना**—घट्टना चलनावृत्त्यो, हे घटना चलनावृत्त्यो, मे

**घन**—घन स्यात् कास्यतालादिवाद्यमध्यमनृत्ययो। ना मुस्तान्दोघदाढर्चेपु विस्तारे लोहमुद्गरे। त्रिपु सान्द्रे दृढे च, मे घन स्यात् कास्यतालादिवाद्यमध्यमनृत्ययो। घन सान्द्रे दृढे दाढर्चे विस्तारे लोहमुद्गरे। मेघमुस्तकयोश्चापि, वि घन सान्द्रे दृढे दाढर्चे विस्तारे मुद्गरेऽम्बुदे। सङ्घे मुस्ते घन मध्यनृत्यवाद्य-

प्रकारयो हे घनो मेघे मूर्तिगुणे त्रिपु मर्ते निरन्तरे, अ अथाम्बुदमुस्तयो। घन पुसि घन वाद्यम्, त्रि घनो मेघो घन सान्द्र कास्यतालादिक घनम्। घन सङ्घो घन नित्य घन स्याल्लोहमुद्गर, अने

**घनरस**—भवेद्घनरस सान्द्रे निर्यासे मोरटेऽम्बुनि। कर्पूर पीलुपर्ण्याञ्च सम्यक् सिद्धरसेऽपि च, मे भवेद्घनरस सान्द्रे निर्यासे मोरटेऽप्सु च। कर्पूरे पीलुपर्ण्या च सम्यक्सिद्धरसेऽपि च, वि घनरसोऽप्सु कर्पूरे सान्द्रे सिद्धरसे द्रवे। मोरटे पीलुपर्ण्या च, हे

**घनसार**—घनसारस्तु कर्परे दक्षिणावर्तपारदे, मे, वि, हे

**घनाघन**—घनाघनो वर्पुकाब्दे मत्तघातुककुञ्जरे। शक्रे च, मे घनाघनो घातुकमत्तदन्तिनोर्निरन्तरे वासववर्पुकाब्दयो, वि घनाघनो निरन्तरे। वासवे घातुके मत्तगजे वर्पुकवारिदे, हे घनाघन शक्रवर्पुकाम्बुदयो, ह शक्रो घातुक-मत्तेभो वर्पुकाब्दो घनाघन, अ शक्रऽपि वर्पुके मेघे मत्तनागे घनाघन, अने

**घर्घर**—घर्घरो ना चलद्वारिध्वानोलूकनदान्तरे। स्त्री क्षुद्रघण्टचा वीणाया भेदे स्वरान्तरेऽपि च, मे घर्घरस्तु चलद्वारिध्वाने घूके नदान्तरे, वि घर्घरस्तु नदान्तरे। चलद्वारिध्वनौ घूके, हे

**घर्घरिका**—अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयो मे स्मृता घर्घरिका क्षुद्रघण्टिकाभृष्टधान्ययो। वाद्यप्रभेदवादित्रदण्डयोरापगान्तरे, वि घर्घरिका भृष्टधान्यकिङ्किण्या सरिदन्तरे। वादित्रस्य च दण्डेऽपि हे

**घर्म**—घर्म स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि, वि अथ घर्मो निदाघवत्। स्वेदाम्भस्यातपे ग्रीष्मोष्मणो, हे उष्णेऽपि घर्म, अ घर्म स्वेदातपोष्मसु, त्रि घर्म स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि, मे

**घस्र**—घस्रस्तु दिवसे हिंस्रे, मे घस्रो दिवसहिंस्रयो, वि घस्रो वासर-हिंस्रयो, हे

**घात**—घात काण्डप्रहारयो, मे, वि

**घृणा**—घृणा जुगुप्साकृपयो, मे, वि घृणा तु स्याज्जुगुप्साया करुणायाम्, हे जुगुप्साकरुणे घृणे अ दौर्मनस्य घृणा प्रोक्ता घृणा च करुणा मता, अने घृणा जुगुप्सायामपि, ह

**घृणि**—घृणि पुन। अशुज्वालातरङ्गेषु, हे

**घृत**—घृतमाज्ये जले क्लीव प्रदीप्ते त्वभिधेयवत, मे घृतमाज्याम्बुदीप्तेषु, हे अप्सु च घृतामृते, अ घृतमाज्ये प्रदीप्ते च सलिले च घृत मतम्, वि

**घृष्टि**—घृष्टि स्त्री घर्षणस्पर्द्धाविष्णुक्रान्तासु ना किरौ, मे घृष्टि स्पर्द्धा-

घर्षणयोर्विष्णुक्रान्तावराहयो, हे घृष्टि स्याद् घर्षणे विष्णुक्रान्तास्पर्द्धाकिरिष्वपि, वि शकरे पुसि घृष्टि स्यात् स्पर्धाघर्षणयो स्त्रियाम्, त्रि

**घोर**—घोर स्यादभिसारक, अने घोर भीमे हरे घोर, वि घोरो भीमे हरेऽपि च, मे घोरो हरे दारुणे च, हे

**घोण्टा**—घोण्टा तु बदरीपूगवृक्षयोरपि योपिति, मे घोण्टा पूगबदरयो, हे घोण्टा तु बदरे पूगे, वि, त्रि

**घोष**—घोष आभीरपल्ल्या स्याद्गोपालाध्वनि घोषके। कास्ये चाम्बुद नादे ना घोषा मधुरिकौषधौ, मे घोषस्तु घोषके ध्वाने गोपालाभीरपल्लिपु। घोषा तु शतपुष्पाया घोष कास्येऽम्बुदध्वनौ, वि घोष कास्ये स्वने गोपघोषकाभीरपल्लिपु। घोषा तु शतपुष्पायाम्, हे घोष शब्दाभीरनिवासयो, त्रि

**घोषयित्नु**—घोषयित्नुस्तु विप्रकोकिलयो पुमान्, मे घोषयित्नुर्द्विजे पिके, वि घोषयित्नु पिके विप्रे, हे

**घ्राण**—घ्राण क्लीव नासिकाया घ्राते स्याद् वाच्यलिङ्गकम्, मे घ्राण घ्राते च नासायाम्, वि घ्राणन्तु घ्रातघोणयो, हे नासिकाघ्रातयोर्घ्राणम्, त्रि

**ङ**—ङ पुमान् विपये ख्यात स्पृहाया विपयस्य च, मे सज्ञा को रुद्रकान्तिश्च दक्षाङ्गुल्यग्रसस्थित। क्लीववक्तृश्च भद्रेशो ङकारश्चानुनासिक, मा

**च**—चान्वाचयसमाहारेतरेतरसमुच्चये, अ चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये। पक्षान्तरे तथा पादपूरणेऽप्यवधारणे, मे, वि चान्योन्यार्थसमाहारान्वाचयेपु समुच्चये, हे च पादपूरणे पक्षान्तरे हेतौ विनिश्चये, त्रि चश्चण्डेशे पुमानुक्त कच्छपे चन्द्रचौरयो, मे हली कूर्मेश्वरो लक्ष्मीर्वामबाह्वादिगस्तथा। चित्रधारा चञ्चलश्च चकार सस्मृतो बुधै, मा

**चक्र**—चक्र कोके पुमान् क्लीव व्रजे सैन्यरथाङ्गयो। राष्ट्रे दम्भान्तरे कुम्भकरोपकरणास्त्रयो। जलावर्तेऽपि, मे चक्रो गणे चक्रवाके चक्र सैन्यरथाङ्गयो। ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि। अम्भसामपि चावर्ते, वि चक्र प्रहरणे गणे। कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयो। जलावर्ते दम्भ चक्र कोके, हे चक्र राष्ट्रेऽपि, अ चक्र कोके व्रजे पुसि क्लीव सैन्यरथाङ्गयो। ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते, त्रि चक्र पक्षिविशेपश्च रथाङ्ग चक्रमायुधम्। चक्र राज्यञ्च सङ्घश्च चक्र व्यावर्तन मतम्, अने

**चक्रधर**—अथ चक्रधरोऽजेऽही ना त्रिपु ग्रामजालिनि, मे चक्रधरो हरौ सर्पे वाच्यवद्ग्रामजालिनि, वि चक्रधरो विष्णुसर्पचक्रिपु ग्रामजालिनि, हे सर्पे विष्णौ चक्रधर, त्रि

**चक्रवाट**—चक्रवाटः क्रियारोहे पर्यन्ते च शिखातरौ, मे., वि. चक्रवाटस्तु पर्यन्ते क्रियारोहे शिखातरौ, हे.

**चक्रवाड**—चक्रवाडोऽद्रिभेदे स्यात् चक्रवाडन्तु मण्डले, वि., मे चक्रवाडं गणे चक्रवाडोऽद्रौ चक्रवालवत्, हे.

**चक्रवाल**—चक्रवालोऽद्रिभेदे स्यात् चक्रवालन्तु मण्डले, वि., मे. v. चक्रवाड.

**चक्राङ्ग**—चक्राङ्गी कटुरोहिण्यां चक्राङ्गो मानसकौसि, मे., वि. चक्राङ्ग श्वेतगरुति चक्राङ्गी कटुरोहिणी, हे.

**चक्राट**—चक्राटो विपवैद्येऽपि धूर्तदीनारयोरपि, मे., वि. चक्राटो धूर्तदीनारविपवैद्ये, हे.

**चक्रिन्**—चक्री जालिकभित्कोककुलालाजाहिसूचके, मे. चक्री कुलालवैकुण्ठकोकाहिग्रामजालिपु, वि. चक्री कोके कुलालेऽह्रौ वैकुण्ठे चक्रवर्तिनि, हे. चक्रिणो विष्णुभुजगकुलालग्रामयाजिन', त्रि.

**चक्षुष्य**—चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे। कुलत्थिकासुभगयो. स्त्रियामक्षिहितेऽन्यवत्, मे. चक्षुष्य केतके पुण्डरीकवृक्षे रसाञ्जने। कुलत्थिकासुभगयोश्चक्षुष्याऽक्षिहितेऽन्यवत्, वि. चक्षुष्य' सुभगे पुण्डरीकवृक्षे रसाञ्जने। कनकेऽक्षिहिते चापि चक्षुष्या तु कुलत्थिका, हे चक्षुष्यं सुभगे चक्षुर्हिते स्त्री केतकेऽपि च, त्रि.

**चङ्कुर**—चङ्कुरः स्यन्दने वृक्षे, मे., हे चङ्कुरो रथवृक्षयो', वि

**चङ्ग**—चङ्गस्तु शोभने दक्षे, मे. चङ्ग. शोभनदक्षयो', वि.

**चञ्चल**—चञ्चलोऽनिलकामिनोः। चञ्चला तु तडिल्लक्ष्म्यो, हे. चञ्चला तु तडिल्लक्ष्म्योश्चञ्चल' कामुकेऽनिले, वि., मे.

**चञ्चा**—चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुपे, मे. चञ्चो नलादिनिर्माणे चञ्चा तु तृणपूरुपे, वि.

**चञ्चु**—चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके, मे. चञ्चुः पञ्चाङ्गुले त्रोट्यां गोनाडीकेऽपि पठ्यते, वि. चञ्चुः पञ्चाङ्गुले त्रोट्याम्, हे.

**चटक**—चटक. कलविङ्के स्याच्चटका तन्स्त्र्यपत्ययोः, वि.

**चटु**—चटुश्चाटौ पिचण्डे च व्रतिनामासने पुमान्, मे. चटु चाटुपिचण्डयोः। व्रत्यासने, हे. देहांशे वर्णने चटुः, त्रि. चटुश्चाटौ पिचण्डे च व्रतिनामासनान्तरे, वि.

**चण्ड**—चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः। चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोपितोः। चण्डा धनहरीगन्धपुष्प्योंम्प्रिष्वतिकोपने, मे. चण्डो दैत्यान्तरे

तीव्रे चण्डो दासे यमस्य च। चण्डा धनहरीशङ्खपुष्प्योश्चण्डोऽतिकोपने। चण्डी कात्यायनीहिंस्राकोपनस्त्रीषु सम्मता, वि. चण्डस्तु यमदासेऽतिकोपने। तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति। चण्डा धनहरीशङ्खपुष्प्योः, हे. चण्डौषधिः खरश्चण्डः, त्रि.

**चण्डालिका**—चण्डालिका किन्नरायामुमायामौषधीभिदि, मे., वि. चण्डालिकौषधीभिदि। कन्दरायामुमायाञ्च, हे.

**चण्डि(न्द्रि)ल**—चन्द्रिल. पुसि वास्तूकशाके भर्गे च नापिते, मे. चण्डिलो नापिते स्याते हरवास्तुकशाकयो', वि चण्डिलो नापिते वास्तुके रुद्रे, हे

**चतुःषष्टि**—चतु षष्टिः कलासख्याभेदयोर्बह्वृचि स्त्रियाम्, मे चतु षष्टिर्बह्वृचेऽपि चतु षष्टि. कलास्वपि, वि.

**चतुर**—चतुरश्चातुरकवत् चक्रगण्डौ नियन्तरि। एतौ स्यातामुभौ नेत्रगोचरे चाटुकारिणि, वि चतुरो नेत्रगोचरे। चटुकारे चक्रगण्डौ अपि चातुरको यथा, हे. v चातुर-क.

**चतुष्क**—चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च, हे., मे.

**चतुष्पथ**—चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना, मे. चतुष्पथश्चतुर्मार्गे सङ्गमेऽपि द्विजेऽपि च, वि. चतुष्पथश्चतुमार्गसङ्गमे ब्राह्मणेऽपि च, हे.

**चतुष्पद**—चतुष्पदी तु पद्ये ना पशौ च करणान्तरे, मे. चतुष्पदः स्त्रीकरणे गवाश्वादिपशुष्वपि, वि. चतुष्पदो गवादिषु। स्त्रीणां करणभेदे च, हे.

**चत्वर**—चत्वर स्थण्डिलेऽङ्गने, मे, वि. चत्वरं स्यात् पथाश्लेषे स्थण्डिलाङ्गनयोरपि, हे. चत्वरं प्राङ्गणेऽपि च, ह.

**चत्वाल**—चत्वालो होमकुण्डे स्यात् पुसि दर्भेऽपि दृश्यते, मे. चत्वालो होमकुण्डे स्याद् गर्भे च, वि. चत्वालो यज्ञकुण्डकगर्भयोः, हे.

**चन**—चन विस्मये साकल्ये, मे.

**चन्दन**—चन्दनी तु नदीभिदि। चन्दनोऽस्त्री मलयजे कुङ्कुमे च नपुंसकम्, मे. चन्दन मलयोद्भवे। चन्दन. कपिभेदे स्यान्नदीभेदे तु चन्दनी, वि. चन्दनो वानरभिदि श्रीखण्डे चन्दनी नदी, हे.

**चन्दिर**—चन्दिरोऽनेकपे चन्द्रे, मे., वि. चन्दिरश्चन्द्रहस्तिनो., हे.

**चन्द्र**—चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु, मे. चन्द्रः सुधांशुकर्पूरकाम्पिल्लस्वर्णवारिषु, वि. चन्द्रोऽम्बुकाम्ययोः। स्वर्णे सुधांशौ कर्पूरे काम्पिल्ले मेचकेऽपि च, हे. स्वर्णेऽपि भूरिचन्द्रौ द्वौ, अ. चन्द्रः शशिनि कर्पूरे, त्रि. शशाङ्कस्वर्णयोश्चन्द्रः, अने.

**चन्द्रकान्त**—चन्द्रकान्तस्तु पुंसि स्यान्मणिभेदे च कैरवे, मे चन्द्रकान्तोऽश्मभेदे स्यात् चन्द्रकान्त च कैरवे, वि चन्द्रकान्तो रत्नभेदे चन्द्रकान्तन्तु कैरवे, हे

**चन्द्रहास**—चन्द्रहासो दशग्रीवकरवालेऽसिमात्रके, मे, वि चन्द्रहासोऽसिमात्रके। दशग्रीवकृपाणे च, हे

**चन्द्रिल**— v चण्डिल

**चन्द्रोदय**—चन्द्रोदयो विताने स्यात् तथा चन्द्रोदयौषधौ, वि चन्द्रोदयौ शश्युदयोल्लोचौ चन्द्रोदयौषधे, हे

**चपल**—चपल पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुश्चलीपिप्पलीषु च। नपुंसकन्तु शीघ्रे स्याद् वाच्यवत् तरले खले, मे चपलश्चोरके खले। क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे। मीने च चपला तु स्यात् पिप्पल्या विद्युति श्रियाम्। पुश्चल्या, हे चपल पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुश्चलीपिप्पलीषु च। चपल क्षणिके शीघ्रे चपलश्चिकुरे खले, वि चपल पारदेऽपि च। चपला पिप्पलीलक्ष्मीपुश्चलीविद्युत स्मृता, त्रि

**चमर**—चमर चामरे स्त्री तु मञ्जरीमृगभेदयो मे चमर चामरे प्राहुर्मञ्जरीमृगभेदयो। चमरी, वि चमरश्चामरे दैत्ये चमरी तु मृगान्तरे, हे

**चमस**—चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्, मे

**चमू**—चमू सेनाविशेषे च सेनामात्रे च योषिति, मे v पृतना

**चय**—चय समूहे प्राकारमूलबन्धे समाहृतौ, मे, वि चय प्राकारपीठभू। समूहोऽपि, हे

**चर**—चरोऽक्षद्यूतभेदे च भौमे चारे त्रसे चले, मे चरो द्यूतप्रभेदे स्यात् चारजङ्गमयोश्चले वि चर स्याज्जङ्गमे स्पशे। चले द्यूतप्रभेदे च, हे

**चरण**—चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च। भ्रमणे भक्षणे चापि नपुंसक उदाहृत, मे चरण बह्वृचादौ स्यान्मूले गोत्रे पदेऽपि च। चरण भ्रमणेऽत्तौ च, वि चरणो मूलगोत्रयो। बह्वृचादौ च पादे च चरण भ्रमणेऽदने, हे वेदांशे बह्वृचादौ च ब्रध्ने पादेऽपि चास्त्रियाम्। चरण, त्रि

**चराचर**—चराचर वाच्यलिङ्गमिङ्गे जगति न द्वयो, मे चराचर स्याज्जगति वाच्यवज् जङ्गमेङ्गयो, वि चराचर जङ्गमे स्याद् इङ्गविष्टपयोरपि, हे

**चरु**—अथ चरु पुमान् हव्यान्नभाण्डयो, मे चरुर्भाण्डे च हव्याने, वि चरुर्हव्याने भाण्डे च, हे

**चर्चरीक**—चर्चरीको महाकाले केशविन्यासशाकयो, मे, वि

**चर्चा**—चर्चा चिन्तास्यासकयोश्चर्चिकायान्तु योषिति, मे चर्चा स्यासक-

चिन्तयोः। चर्चिकायाञ्च, वि. चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि, हे. अथ स्थासकतर्कयोः। चर्चिकायाञ्च चर्चा स्यात्, त्रि. चिन्तायामपि चर्चा, ह

**चर्पट**—चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च, मे., वि. अथ चर्पटश्चपेटे स्फारविपुले पर्पटे, हे.

**चर्मन्**—चर्म कृत्तौ च फलके, मे. चर्म त्वचि स्फुरे, हे. चर्म स्याद्वल्कलत्वचोः, वि.

**चर्मकार**—चर्मकारः पादुकृति स्त्रियां चर्मकपौषधौ, मे. चर्मकारः स्मृतः पादूकृति चर्मकपौषधे। चर्मकारी च कथिता, वि. चर्मकारः पादूकृति चर्मकार्यो-षधीभिदि, ह

**चर्मण्वती**—चर्मणुती नदीभेदे कदलीपादपे स्त्रियाम्, मे. चर्मणुती नदीभेदे कदलीपादपेऽपि च, वि. चर्मणुती नदीभिदि। कदल्याम्, हे. चर्मणुत्यौ नदीरम्भे, त्रि

**चर्मिन्**—चर्मी फलकपाणौ स्याद् भूर्जे भृङ्गरिटावपि, मे, वि चर्मी भूर्जे फलकिभृङ्गिणोः, हे. भूर्जे फलकपाणौ च चर्मी, त्रि

**चल**—चला लक्ष्म्या पुमान् कम्पे कम्पने त्वभिधेयवत्, मे. चलः कम्प्रे चला श्रियि, वि.

**चलुक**—चलुकः प्रसृतौ भाण्डभेदे चुलुकवत् पुमान्, मे चलुकः प्रसृतौ भाण्ड-प्रभेदे चुलुको यथा, हे v. चुलुक.

**चलन**—चलन भ्रमणे कम्पे कम्प्रे तु वाचलिङ्गकम्। चलनी वस्त्रघर्घर्यां चारिभेदेऽपि च क्वचित्, मे. चलन कम्पनं कम्पे कम्प्रे चलनकम्पनौ। चलनी वस्त्रघर्घर्यां चारिभेदेऽपि च क्वचित्, वि. चलनः पादकम्पयोः। चलने कम्पं चलनी वारिभिद्वस्त्रघर्घरी, हे. कम्प्रे ना चलनं कम्पे चलनी वस्त्रघर्घरी, त्रि.

**चव्य**—चव्यन्तु चविके क्लीव वचायामपि योषिति, मे. चव्यं तु चविके चव्या शतपर्वोग्रगन्धयोः, वि चव्या स्यात् चविकाशतपर्वणोः, हे.

**चषक**—चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः, मे. चषको मद्ये सरके मद्य-भाजने, हे. चषकन्तु सुरापात्रे मद्यमद्यप्रभेदयोः, वि. चषकं सरकेऽपि च, त्रि.

**चातुर**—चातुरो नेत्रगोचरे। चाटुकारिनियन्त्रोश्च त्रिषु दाक्ष्ये तु चातुरी। चक्रगण्डौ च पुंसि स्यात्, मे.

**चातुरक**—अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत्। गोचरे लोचनस्यापि चाटुकारे नियन्तरि, मे. v. चतुर.

**चामर**—चामरं चामरापि च। दण्डे च वालव्यजने, मे.

**चामरपुष्प**—भवेच्चामरपुष्पस्तु पूगे काशाम्रकेतके, मे. भवेत् चामरपुष्पस्तु चूते केतककाशयो:, वि.

**चाम्पेय**—चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे, मे., वि. चाम्पेयो हेम्नि किञ्जल्के चम्पके नागकेसरे, हे.

**चार**—चार. पियालवृक्षे स्याद् गतौ बन्धापसर्पयो:, मे., वि. चारो बन्धापसर्पयो:। गतौ पियालवृक्षे च, हे. चारो बन्धापसर्पयो:, त्रि.

**चारक**—चारक: पालकेऽश्वादे: स्यात् सञ्चालकबन्धयो:, मे. चारक पालकेऽश्वादे: स्यात् सञ्चारकबन्धयो:, वि. चारकोऽश्वादिपाले स्याद्बन्धे सञ्चारकेऽपि च, हे. चारको भोजके बन्धे, त्रि.

**चारु**—चारुर्बृहस्पतौ पुंसि शोभनेऽप्यभिधेयवत्, मे.

**चार्वी(र्वी)**—चार्वी तु शोभनाबुद्धशोर्ज्योत्स्नाधनदभार्ययो:, मे. चार्वी तु शोभनाबुद्धयो:, वि.

**चास**—चास इक्षुपक्षिभिदो: पुमान्, मे. चास इक्षुपक्षिभिदो, हे.

**चिकुर**—चिकुरस्तरलागयो:। पक्षिवृक्षभिदो: केशे गृहबभ्रौ सरीसृपे, मे चिकुरश्चञ्चले केशे गृहबभ्रुभुजङ्गयो.। पक्षिद्रुभेदयो: शैले, वि चिकुरोऽह्नौ गृहबभ्रौ केशे चञ्चलशैलयो:। पक्षिवृक्षभिदोश्चापि, हे. चिकुरौ वृक्षभित्कचौ, त्रि. चिकुरौ केशचञ्चलौ, अने.

**चित**—चितं छन्ने त्रिषु चिता चित्यामा संहतौ स्त्रियाम्, मे. चिताचिती। मृतार्थदारषु चये, हे चितश्छन्ने चुल्लिकाया चित्यासंहतिचित्ययो, वि.

**चिति**—चितिश्चित्यावृन्दयो स्त्री, मे, हे. चिति: समूहे चित्यायाम्, वि. v. चिता.

**चित्य**—चित्यं मृतकचैत्ये स्यात् चित्या मृतचितौ स्त्रियाम्, मे. चित्यं मृतकचैत्ये स्यात् चित्या मृतचितावपि, वि. चित्यं मृतकचैत्ये स्यात् चित्या मृतचितावपि, हे.

**चित्र**—चित्रं स्यादद्भुतालेख्यतिलकेषु विहायसि। चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। ऋक्षाप्सरोऽहिभेदेषु कर्बुरे चाभिधेयवत्, वि. चित्रं खे तिलकेऽद्भुते। आलेख्ये कर्बुरे चित्रा त्वाखुपर्णीसुभद्रयो:। गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयो:, हे. चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययो: क्लीबं कर्बुराद्भुतयोरपि। तद्युक्तयोस्त्वन्यलिङ्गम्, मे आलेख्याश्चर्ययोश्चित्रम्, अ. कर्बुरे तिलक चित्रं सुभद्रातारयो: स्त्रियाम्, त्रि.

**चित्रक**—चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाटिषु, मे. चित्रक: स्यात्

तरुव्याघ्रभेदयोर्भेपजान्तरे, वि. चित्रकस्तु चित्रकारे, द्रुमौपधिविशेपयोः, हे. चित्रकं चित्रके क्लीवं व्याघ्रैरण्डौ च चित्रकौ, त्रि. चित्रकं तिलकं प्रोक्तं चित्रकः श्वापदो मतः। चित्रको मूलजातिश्च चित्रकोऽप्यन्तको मतः, अने.

**चित्रगुप्त**—चित्रगुप्तस्तु पुंसि स्याद्यमे तस्य च लेखके, मे. चित्रगुप्तः कृतान्ते स्याल्लेखके चास्य सम्मत., वि. चित्रगुप्तस्तु कृतान्ते तस्य लेखके, हे.

**चित्रभानु**—चित्रभानुः पुमान् वैश्वानरे चाहस्कारेऽपि च, मे. चित्रभानुः खगेऽनले, वि. चित्रभानुस्तु हुताशनदिनेशयोः, हे. सूर्यवह्नी चित्रभानू, अ.

**चित्ररथ**—अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान्, मे. चित्ररथः स्याद् गन्धर्वे रवौ विद्याधरान्तरे, वि. चित्ररथो विद्याधरे गन्धर्वसूर्ययोः, हे.

**चित्राटीर**—चित्राटीरो विधौ भालमङ्कित येन तत्र च। घण्टाकर्णोपहाराय हतच्छागास्रबिन्दुपु, मे. चित्राटीरो विधौ भालमङ्कित येन तत्र च। घण्टाकर्णोपहाराय हतच्छागास्रबिन्दुभि, वि चित्राटीरो घण्टाकर्णबलिच्छागास्रबिन्दुभिः। अङ्कितभाले चन्द्रे च, हे.

**चिपिट**—चिपिटः खाद्यभेदे ना त्रिषु पिट्टितविस्तृते, मे. चिपिटः पुन। पृथुकेऽपि च तते, हे चिपिट. खाद्यभेदेऽपि चिपिटो विस्तृतेऽन्यवत्, वि.

**चिरजीविन्**—चिरजीवी द्विकाजयोः, मे, वि चिरजीवी तु वायसे। अजे च, हे.

**चिर(रि)ण्टी**—चिरिण्टी तु सुवासिन्या स्याद् द्वितीयवय स्त्रियाम्, मे. चिरण्टी तु सुवासिन्या स्याद् द्वितीयवय स्त्रियाम्, वि. चिरण्टी तु सुवासिनी। तरुणी च, हे.

**चिलिमीलिका**—चिलिमीलिका तु कण्ठीभेदे खद्योतविद्युतोः मे. चिलिमीलिका खद्योते कण्ठीभेदे तडित्यपि, हे कण्ठालङ्कारखद्योतविद्युत्सु चिलिमीलिका, त्रि. स्याच्चिलिमीलिका कण्ठीभेदे खद्योतविद्युतोः, वि.

**चिल्ल**—चिल्ल. पुमान् क्लिन्ननेत्रे क्लिन्नाक्षेऽप्यभिधेयवत्। आततायिनि संप्रोक्त. चिल्ली स्यात् क्षुद्रवास्तुके, मे. चिल्लः खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने। क्लिन्नाक्षिण, हे. चुल्लचिल्लौ मतौ क्लिन्ने नेत्रे क्लिन्नाक्षिण पिल्लवत्। आततायिनि भवेच्चिल्लश्चिल्ली स्याद् गौडवास्तुके, वि.

**चिह्न**—चिह्नं लक्ष्मपताकयोः, मे., त्रि. चिह्नं ध्वजे पताकाया, वि. चिह्नमङ्के पताकायाम्, हे.

**चीन**—चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे, मे. चीनो मृगान्तरे तन्तुव्रीहिदेशांशुकान्तरे, वि. चीनो देशणतन्तुपु। व्रीहौ वस्त्रे, हे. चीनो वस्त्रव्रीहिभेदे, त्रि.

**चीर**—चीर तु गोस्तने वस्त्रे चूडाया सीसकेऽपि च। चीरी कच्छाटिकाझिल्ल्यो, वि चीरी झिल्ल्या नपुंसकम्। गोस्तने वस्त्रभेदे च रेखाखेलनभेदयो, मे चीर वाससि चूडाया गोस्तने सीसपत्रके। चीरी कच्छाटिकाझिल्ल्यो, हे

**चीरक**—चीरकोऽधिक्रियालेखे पतङ्ग्या चीरिका मता, वि

**चीर्णपर्ण**—चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान्, मे चीर्णपर्णस्तु निम्बे स्यात् खर्जूरीभूरुहेऽपि च, वि चीर्णपर्ण खर्जूरनिम्बयो, हे चीर्णपर्णस्तु खर्जूरपिचुमर्दयो, त्रि

**चीवर**—चीवर वल्कले वस्त्रे, अने

**चुक्र**—चुक्र वृक्षाम्ले चाङ्गेर्यां स्त्रीपुस्यम्लेऽम्लवेतसे, मे चुक्रस्त्वम्लेऽम्लवेतसे। चुक्री चाङ्गेरिकाया स्यात् वृक्षाम्ले चुक्रमिष्यते, वि चुक्रश्चाम्लेऽम्लवेतसे। वृक्षाम्ले चुक्री चाङ्गेर्याम्, हे

**चुम्बक**—चुम्बकश्चुम्बनपरे धूर्तायस्कान्तयोरपि। बहुग्रन्थैकदेशज्ञे घटस्योर्ध्वविलम्बने, मे चुम्बक स्याद्बहुगुरुधर्तायस्कान्तकामुके, वि चुम्बक कामुके धूर्ते बहुगुर्वश्मभेदयो, हे

**चुलुक**—चुलुक प्रसृतौ भाण्डे भेदे चलुकवन्मत, वि v चलुक

**चुल्ल**—चुल्ली चितायामुद्धाने, मे चुल्ली चितायामुद्धाने क्वचिद् वाच्येऽप्युदीरिता, वि चुल्ली तूद्धाने च, हे v चिल्ल

**चुल्लकी**—चुल्लकी शिशुमारेऽपि कुण्डीभेदे कुलान्तरे, मे, वि चुल्लकी कुण्डिकाभेदे शिशुमारे कुलान्तरे, हे

**चूडा**—चूडा वडभौ शिखाया बाहूभूषणे, मे चूडा शिखाया वलभौ चूडा बाहुविभूषणे, वि चूडा शिखाग्रयो। बाहुभूपावलभ्योश्च, हे चूडा शिखिशिरस्यपि, ह

**चूडामणि**—चूडामणि शिरोरत्ने काकचिञ्चाफले पुमान्, मे चूडामणि शिरोरत्ने काकचिञ्चाफलेऽपि, च, वि चूडामणि काकचिञ्चाफले मूर्धमणावपि, हे

**चूडाल**—चूडाला तूच्चटाया स्त्री चूडावति च वाच्यवत्, मे चूडाला तूच्चटाया स्याच् चूडावति तु वाच्यवत्, वि चूडालश्चूडया युक्ते चूडालाऽपि च चत्रला, हे

**चूतक**—चूतक कूपकेऽप्याम्रे, मे, वि चूतक कूप आम्रे च, हे

**चूर्ण**—अथ चूर्णी कपर्दके। चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु, मे चूर्णानि वासयुक्तिषु। चूर्ण क्षोदे क्षारभेदे, हे चूर्ण गन्धयुतावपि, त्रि चूर्ण क्षोदे क्षारभेदे चूर्णानि वासयुक्तिषु, वि

चूलिका—चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्, मे चूलिका नाटका-ङ्गके। करिण कर्णमूले च, हे चूलिका नाटकस्याङ्गे कर्णमूले च दन्तिनाम्, वि नाटकाङ्गेषु चूलिका, त्रि

चेत्—चेत् कुत्सितप्रशसयो । पक्षान्तरेऽप्यसावल्ये, मे

चेतन—चेतना सविदि स्त्रियाम्। वाच्यवत् प्राणयुक्ते, मे चेतना सविदि प्रोक्ता वाच्यवत् प्राणिनि स्मृता, वि चेतन स्यात् सहृदयप्राणिनोश्चेतना तु धी, हे

चेल—चेलो नीचेऽन्यवच्चेलमशुके गर्हितेऽन्यवत्, वि चेल गर्हितवस्त्रयो, हे चेलोऽधमे त्रिषु। नपुसकन्तु वसने, मे चेल वस्त्रेऽधमे त्रिषु, म

चेष्टित—चेष्टित गतिचेष्टयो मे

चैत्य—चैत्यमायतने बुद्धबिम्बे नोद्देशपादपे, मे चैत्यमायतने बुद्धबिम्बे चोद्देशपादपे, वि चैत्य जिनौकस्तद्विम्ब चैत्यो जिनसभातर । उद्देशवृक्ष, हे चैत्यमायतने बुद्धविम्बोद्देशकवृक्षयो त्रि चैत्य बुद्धान्तकेऽप्युक्त देवतायतनेऽपि च ह

च्युप—च्युप पवनयुद्धयो, वि

छ—छाच्छादने स्त्रिया ख्याता निर्मलेऽप्यवदिष्यते, मे एकनेनश्च मुषली वामकूर्परगो द्युति । त्रिविन्दुकस्तथा चारी च्छकार श्लेष्मकाभिध, मा

छगल—छगल नीलवस्त्रे ना च्छागे स्त्री वृद्धदारके, मे छगलश्छागे च्छगली च्छागमातरि। वृद्धदारकभैषज्ये च्छगल नीलवाससि, वि छगलश्छागे च्छगली वृद्धदारकभेषजे। छगल तु नीलवस्त्रे, हे

छत्र—छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयो । नपुसकञ्चातपत्रे, म छत्रमातपवारणे। छत्रा मधुरिकाया स्यात् कुस्तुम्बुरुशिलीन्ध्रयो, वि छत्र स्यादातपत्राणे च्छत्रा मधुरिकौषधौ। धान्याके च शिलीन्ध्रे च, हे

छत्रभङ्ग—छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयो मे, वि छत्रभङ्गो नृपक्षये। स्वातन्त्र्ये विधवात्वे च हे वैधव्ये नृपनाशे च च्छत्रभङ्ग प्रकीर्तित, त्रि

छद—छद पलाशे गरुति ग्रन्थिपर्णतमालयो, मे वि छद पत्रे पतत्र च ग्रन्थिपर्णतमालयो हे पलाशे गरुति च्छद त्रि

छदन—छदन च दले पक्षे पिधाने, मे छदन पक्षपत्रयो, वि छदन पर्णे गरुति, हे

छद्मन्—छद्म व्याजापदेशयो, मे छद्म शाठचापदेशयो, वि छद्म शाठचे-ऽपदेशेऽप्यतिकर्मणि, हे

छन्द—छन्दो वशेऽप्यभिप्राये, मे, वि छन्दो वशेऽभिप्राये च, हे अभिप्राय वशौ च्छन्दौ, अ

छन्दस्—छन्द पद्ये च वेदे च स्वैराचाराभिलापयो, मे, वि छन्द पद्येच्छयो श्रुतौ, हे छन्द पद्येऽभिलापे च, अ छन्द पद्यश्रुतीच्छासु त्रि

छन्न—छन्नन्तु रहसि क्लीव छादिते वाच्यलिङ्गवत्, मे छन्न रहश्छादितयो, वि, हे

छर्दन—छर्दन वमने क्लीव निम्बालम्बुषयो पुमान्, मे छर्दनोऽलम्बुषे निम्बे छर्दन वमनान्तरे, वि छर्दनोऽलम्बुषे निम्बे छर्दन वमनेऽपि च, हे अया-लम्बुषे पुमान् । निम्बेऽपि छर्दन वान्ते, त्रि छर्दनोऽलम्बुषे निम्बे, हा

छल—छल स्खलितशाठचयो, मे छल तु स्खलिते व्याजे, वि छल छद्म-स्खलितयो, हे, त्रि

छल्ली—छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे, मे, वि छल्ली सन्तान-वीरुधो । वल्कले पुष्पभेदे च, हे

**छवि**—छवि शोभारुचोर्योषित्, मे छवि शोभारुचोर्मता, वि छविस्तु रुचि शोभायाम्, हे

**छाया**—छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितो । पालनोत्कोचयो कान्तिसच्छोभापक्तिषु स्त्रियाम्, मे छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितो । पालनोत्कोचयो कान्तिसच्छोभापक्तिषु स्मृता, वि छाया पक्तौ प्रतिमाया अर्क-योषित्यनातपे । उत्कोचे पालने कान्तौ शोभाया च तमस्यपि, हे छाया सूर्यप्रिया कान्ति प्रतिबिम्बमनातप , अ कान्त्यनातपयोश्छाया, अने

**छित्वर**—छित्वर छेदनद्रव्ये छित्वरो धूर्तवैरिणो , वि छित्वरो वैरिधूर्तयो । छित्वर छेदनद्रव्ये, हे

**छिदिर**—छिदिर पावके रज्जौ करवाले परश्वधे, मे , वि छिदिरोऽग्नौ परश्वधे । करवाले च रज्जौ च, हे

**छिदुर**—छिदुरश्छेदनद्रव्ये धूर्ते वैरिणि च त्रिषु, मे

**छिद्र**—छिद्र दूषणरन्ध्रयो , मे छिद्र विवररन्ध्रवत् । गर्ते दोषे, हे v विवर

**छिन्न**—छिन्न कृत्ते त्रिलिङ्ग स्याद् गुडूच्यामपि योषिति, मे छिन्न भिन्ने तु वाच्यवत् । छिन्नाऽमृताया पुश्चल्याम्, वि छिन्ना स्यादमृतेत्वरी । छिन्न भिन्ने, हे

**छुप**—छुप क्षुपस्पर्शनयो , मे , वि

**छेक**—छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रिषु, मे छेको विदग्धे विश्वस्त-मृगनीडजयोरपि, हे छेको विदग्धे च्छेकश्च विश्वस्तमृगपक्षिणो , वि छेक पडङ्घिपत्रयो , हा गृहासक्ते पक्षिमृगे च्छेको नागरिके त्रिषु, त्रि

**छेदन**—छेदन भिदि । कर्तने, मे छेदन कर्तने भेदे, वि छेदन कर्तने भिदि, हे

**ज**—जो ना मृत्युञ्जये जन्या तातमात्रे जनार्दने, मे स्थिरो जयन्तो जपज शली च चतुरानन । मणिबन्धगतो वामे जकारो जनकोत्तम , मा

**जकुट**—जकुट वार्ताकुपुष्पे जकुटो मलये शुनि, मे जकुटस्तु वार्ताकुकुसुमे शुनि । मलये, हे जकुटो मलये ख्यातो वार्ताकुकुसुमे शुनि, वि

**जगत्**—जगत् स्यात् पिष्टपे क्लीव वायौ ना जङ्गमे त्रिषु । जगती भुवने क्षमाया छन्दोभेदे जनेऽपि च, मे जगदाख्या स्मृता वाते विष्टपे जङ्गमेऽपि च । जगती भुवने क्षमाया छन्दोभेदे जनेऽपि च, वि ना वाते पिष्टपे जगत्, त्रि जग-ल्लोकेऽङ्गवायुषु, हे जगती च्छन्दसि क्षितौ । जम्बूवप्रे जने लोके, हे जगती जगति च्छन्दोविशेषेऽपि क्षितावपि । जगदिङ्गेऽपि, अ जगती राजप्रधानलोकेऽपि, ह

**जगल**—जगलो मदनद्रुमे। भेदके पिष्टमद्ये च पुंसि धूर्तेऽभिधेयवत्, मे जगल पिष्टमद्ये च भेदके मदनद्रुमे। कितवे, वि जगलो मदनद्रुमे। भेदके कितवे पिष्टमद्ये, हे

**जघन**—जघन च स्त्रिया श्रोणिपुरोभागे कटावपि, मे जघन च स्त्रिया श्रोणिपुरोभागे कटीरके, वि जघन कटौ। स्त्रिया श्रोणिपुरोभागे, हे

**जघन्य**—जघन्य मेहने क्लीव चरमे गर्हितेऽन्यवत्, मे जघन्य चरमे शिश्ने जघन्य गर्हितेऽन्यवत्, वि जघन्य शिश्ने गर्ह्येऽल्पे, हे जघन्योऽन्त्येऽधमेऽपि च, अ

**जघन्यज**—जघन्यज कनीयसि। वृषले, मे जघन्यजोऽनुजे शूद्रे, वि, त्रि जघन्यजोऽनुजन्मनि। शूद्रे च, हे

**जङ्गल**—जङ्गल निर्जनस्थाने त्रिलिङ्गचा पिशितेऽस्त्रियाम्, मे जङ्गलो जलनिर्मुक्तदेशे मासे च जङ्गलम्, वि जङ्गलो निर्जने देशे पिशितेऽपि, हे जङ्गलो निर्जने देशे त्रिलिङ्ग पिशितेऽस्त्रियाम्, त्रि

**जटा**—जटा लग्नकचे मूले मास्या प्लक्षे पुनर्जटी, मे जटा केशविकारे मासिमूलयो, हे जटा लग्नकचे मूले प्लक्षमासिकयोर्जटी, वि मूले लग्नकचे जटा, अ

**जटाटङ्क**—जटाटङ्को हरेऽपि च, हा

**जटायु**—जटायु पुंसि सम्पाते कनीयसि च गुग्गुलौ, मे जटायुर्गुग्गुलतरौ जटायुर्विहगान्तरे, वि जटायुर्गुग्गुलौ खगे, हे

**जटायुस्**—जटायु पुंसि सम्पाते कनीयसि च गुग्गुलौ, मे

**जटिल**—जटिला पिप्पलीमास्योर्जटायुक्ते तु वाच्यवत्, मे जटिलस्तु जटा-युक्ते जटिला मासिकौषधौ, वि जटिलो जटी। जटिला तु मासिकायाम्, हे

**जठर**—जठरो न स्त्रिया कुक्षौ वृद्धकर्कटयोस्त्रिपु, मे कुक्षौ वृद्धे च जठरम्, वि जठर कुक्षिवृद्धयो। कठिने च, हे जठर कठिनेऽपि स्यात्, अ

**जड**—जडा स्त्रियाम्। शूकशिम्ब्या हिमग्रस्तमूकाप्रज्ञेषु तु त्रिपु, मे जडो मूर्खो हिमग्रस्ते शूकशिम्ब्या जडा मता, वि जडो मूर्खे हिमाघाते जडा स्याच्छूकशिम्बिका, हे

**जतुक**—जतुकाऽजिनपत्राया जतुक हिङ्गुलाक्षयो, मे, वि. जतुक हिङ्गुला-क्षयो। जतुका चर्मचटका, हे लाक्षाऽपि जतुका प्रोक्ता, हा

**जन**—जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वो-रुत्पत्तावौषधीभिदि, मे जनो लोके जगद्भेदे पृथग्जने। जनी स्नुषावनितयो,

हे जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता, वि

**जनक**—जनक पितृभूपयो, हे जनक पितृराजर्ष्यो, वि जनक पितृभभुजो, मे

**जनन**—जननी तु दयामात्रोर्जनन वंशजन्मनो, मे

**जनपद**—भवेज्जनपदो जानपदोऽपि जनदेशयो, मे भवेज्जनपदो देशे जने जानपदोऽपि च, वि जनपद स्यात् पुनर्जनदेशयो, हे देशे जने जनपद, त्रि

**जनि**—v जन

**जन्य**—जन्य हट्टे परीवादे सग्रामे च नपुसकम्। जन्या मातृवयस्यायां जन्य स्याज्जनके पुमान्। त्रिपूत्पाद्यजनिश्रोश्च नवोढाज्ञातिभृत्ययो। वरस्निग्धे, मे जन्य हट्टे परीवादे सयुगे जनके पुन। जन्य स्यात् जननीये च जन्या मातृसखीमुदो। जन्यो वरवधूज्ञातिप्रियभृत्यहितेऽपि च, वि जन्य स्याज्जनवादेऽपि अ युद्धे हट्टे च जन्य स्यात्, त्रि जन्यो जामातृवत्सले। जनके जननीये च नवोढाऽनुचरादिषु। जन्य कोलीने युध्यट्टे जन्यो मातृसखीमुदो, हे

**जन्यु**—अथ जन्यु स्यात् पुसि प्राण्यग्निधातृषु, मे जन्यु प्राण्यग्निधातृषु वि जन्यु स्याज्जन्तुमात्रे च पावके परमेष्ठिनि हे

**जम्बाल**—जम्बाल शैवले पङ्के मे जम्बाल शैवले पङ्के वि जम्बाल कर्दमे शैवलेऽपि च हे जम्बालौ पङ्कशैवलौ, त्रि

**जम्बीर**—जम्बीर प्रस्थपुष्पे स्यात् पुसि दन्तशठद्रुमे मे जम्बीर प्रस्थपुष्पाख्यशाके दन्तशठेऽपि च वि जम्बीर प्रस्थपुष्पाख्यशाके दन्तशठद्रुमे, हे

**जम्बुक**—जम्बुक फेरवे नीचे पश्चिमाशापतावपि, मे जम्बुक श्वापदे नीचे प्रतीचीदिक्पतावपि, वि जम्बुको वरुणे फेरौ, हे जम्बुकौ क्रोष्टुवरुणौ अ

**जम्बू**—जम्बू स्यात् पादपान्तरे। तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम मे जम्बू सुमेरुसरिति द्वीपद्रुमविशेषयो, वि जम्बूर्मेरुतरङ्गिण्या द्वीपवृक्षविशेषयो हे

**जम्बूल**—जम्बूलस्तु पुमान् जम्बूविटपे क्रकचच्छदे, मे जम्बूलो जम्बूविटपे जम्बूल क्रकचच्छदे, वि जम्बूल क्रकचच्छदे। जम्बूद्रुमे, हे

**जम्भ**—जम्भो दैत्यान्तरे दन्ते जम्बीरे भक्षणेऽपि च, वि, मे जम्भ स्याद्दानवान्तरे। दन्तभोजनयोरंशे हनौ जम्बीरतूणयो, हे अथ दानवे। जम्बीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते, त्रि

**जम्भल**—जम्भल पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च, मे जम्भलो देवताभेदे जम्बीरेऽपि च जम्भल । जम्बीरे देवताभेदे, हे जम्बीरे देवभेदेऽपि जम्भल, त्रि

**जय**—जयो जयन्ते विजये जया दुर्गाग्निमन्थयो । जयन्तीतिथिभेदोमास-खीपथ्यासु च स्मृता, वि जयो जयन्ते विजये जयोमा तत्सखी तिथि । पथ्या जयन्त्यग्निमन्थ, हे जया जयन्तीतिथिभित्पथ्योमातत्सखीपु च। अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे, मे

**जयन**—जयन स्यात् तुरङ्गादिसन्नाहे विजयेऽपि च मे वि जयन विजयेऽश्वादिसन्नाहे, हे.

**जयन्त**—जयन्ती वृक्षभिद्गौर्योरिन्द्रपुत्रीपताकयो । पुमान ऐन्द्रौ हरे भीम, मे जयन्तावैन्द्रिगिरिशौ जयन्त्यमापताकयो । जीवन्त्यामिन्द्रपुत्र्या च, हृ जयन्त शङ्करेऽपि स्यात् जयन्त पाकशासनौ। जयन्ती पादपे गौर्यामिन्द्रपुत्रीपताकयो, वि जयन्ती नगरी प्रोक्ता जयन्ती चटकानुजा। जयन्त्यौपधिभेद स्यात् जयन्ती शक्रसम्भवा अने

**जरठ**—जरठ कर्कशे पाण्डौ जरठ कठिनेऽन्यवत् वि जरठ कर्कशे जीर्णे हे जरठ कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत्, मे जरठ कठिने प्रोक्त प्राज्ञै परिणतेऽपि च, ह

**जरण**—जरण जीरकेऽजाजिहिङ्गुसौवर्चलेऽपि च, मे जरण जीरकाजाजिहिङ्गु-सौवर्चलष्वपि वि जरणो रुचके हिङ्गौ जीरके कृष्णजीरके, हे

**जरायु**—जरायुरपि तत्पक्षिराजे (=जटायौ) गर्भाशये पुमान्, मे

**जर्जर**—जर्जर शैवले शक्रध्वजे त्रिपु जरातुरे, मे जर्जर स्याद् वासवध्वज-जीर्णयो, हे जर्जरो वाच्यवत् जीर्णे जर्जर वासवध्वजे, वि

**जर्जरीक**—जर्जरीक बहुच्छिद्रे जरातुरेऽपि वाच्यवत, मे जर्जरीक बहुच्छिद्रे जर्जरीक जरातुरे, वि जर्जरीक जरातुरे। बहुच्छिद्रेऽपि, हे

**जर्ण**—जर्णश्चन्द्रे च वृक्षे च, मे, वि जर्णो जीर्णद्रुमेन्दुपु, हे

**जल**—जल गोकलने नीरे ह्रीवेरेऽप्यन्यवत् जडे, मे जल गोकलने नीरे ह्रीवेरे च जडेऽयवत् वि जल गोकलने जडे। ह्रीवेरेऽम्बुनि, हे

**जलकरङ्क**—अथो जलकरङ्क स्यान्नालिकेरफलेऽम्बुजे। शङ्खे जल लतायाञ्च वारिवाहे च कीर्तित, मे जलकरङ्क स्यान्मेघे नारिकेरतरो फले। शङ्खे, हे अथो जलकरङ्क स्यान्नारिकेलफलेऽम्बुदे। शङ्खे जललताया च, वि कम्बौ जलकरङ्क स्यान्नारिकेलफलेऽपि च, त्रि

**जलकूपी**—जलकूपी कूपगर्ते पुष्करिण्याञ्च योषिति, मे. जलकूपी कूपगर्ते पुष्करिण्याञ्च कथ्यते, वि., जलकूप्यन्धुगर्भके। सरस्याम्, हे.

**जलगुल्म**—जलगुल्मो जलावर्ते कच्छपे जलचत्वरे, वि., मे., हा. जलगुल्मो जलावर्तेऽम्बुचत्वरे कमठे, हे.

**जलज**—जलजं कमले शङ्खे, मे., हे. जलजं शङ्खपद्मयोः, वि , त्रि.

**जलतापक**—जलतापक इल्लिशकाकाचीझषयोश्च पुंसि स्यात्, मे. कथ्यते जलतापकः। काकाचीराजसफरमत्स्ययोः, वि.

**जलद**—जलदो मुस्तके मेघे, मे., हे. जलदो मुस्तकेऽम्बुदे, वि.

**जलरुण्ड**—जलरुण्डो जलावर्ते पयोरेणौ भुजङ्गमे, मे., वि. जलरुण्डः पयोरेणौ जलावर्ते भुजङ्गमे, हे.

**जलबिल्व**—जलबिल्वः कर्कटे स्यात् पञ्चाङ्गे जलचत्वरे, मे. जलबिल्वस्तु पञ्चाङ्गे कर्कटे जलचत्वरे, वि. जलबिल्वस्तु कर्कटे। जलचत्वरपञ्चाङ्गे, हे जलबिल्वः कर्कटके पञ्चाङ्गे जलवल्कले, हा.

**जलसूचि**—जलसूचि कङ्के त्रोटिमत्स्यशृङ्गाटयोरपि। शिशुमारे च पुलिङ्गः जलौकायान्तु योषिति, मे. जलसूचिर्जलौकसि। शृङ्गाटे शिशुमारे च कङ्के त्रोटिझषेऽपि च, वि. जलसूचिः शिशुमारे त्रोटिमत्स्ये जलौकसि। काकशृङ्गा-टयोश्चापि, हे. जलसूचिर्जलौकाऽपि, हा.

**जलाञ्चल**—जलाञ्चल स्वतो वारिनिर्गमे शैवलेऽपि च, मे., वि जलाञ्चलं तु शैवाले स्वतश्च जलनिर्गमे, हे.

**जलाटन**—जलाटनो लोहपृष्ठे जलौकाया जलाटनी, मे , वि. जलाटनः कङ्कखगे जलाटनी जलौकसि, हे.

**जलाशय**—जलाशयो जलाधारे स्यादुशीरे नपुंसकम्, मे जलाशयमुशीरे च जलाधारे जलाशयः, वि जलाशयमुशीरे स्याज्जलाशयो जलाश्रये, हे.

**जलेन्द्र**—जलेन्द्र पुंसि वरुणे जम्भले च महोदधौ, मे. जलेन्द्रो वरुणेऽम्बुधौ। जम्भले च जलेन्द्रः स्यात्, वि. जलेन्द्रो जम्भलेऽम्भोधौ वरुणेऽपि च, हे.

**जव**—जवो वेगवति त्रिपु। पुलिङ्गस्तु भवेद्वेगे चोड्रपुष्पे जवा स्मृता, मे. जवः स्याद् वेगवेगिनोः। जवोड्रपुष्पे, हे. जवो वेगिनि वेगे स्याद् श्रोड्रपुष्पे जवा मता, वि.

**जवन**—जवनन्तु स्याद्वेगेऽपि हये ना वेगिनि त्रिपु, मे. जवनो देशभेदे स्याद् वेगवेगाधिकाश्वयोः। जवन्योपधिभेदे स्याद् वाच्यवद् वेगिनि स्मृतः, वि. जवनो वेगिवेगयोः। वेग्यश्वे नीवृति जवन्यपटधामोपधीभिदि, हे. जवनो देशवेगिनोः, त्रि. v. यवन.

**जसुरि**—जसुरि पावके पवौ, वि

**जह्नु**— जह्नु स्यात् पुसि राजर्षिभेदे च मधुसूदने, मे

**जाङ्गल**—जाङ्गली शुकशिम्ब्या स्त्री जाङ्गलो ना कपिञ्जले, मे जाङ्गली शुकशिम्ब्या स्यात् जाङ्गलस्तु कपिञ्जले। जाङ्गल स्यात् कपिञ्जले जाङ्गली तु शूकशिम्ब्याम् हे

**जाङ्गुल**—जाङ्गुली *विषविद्यायाम् जाङ्गुल जालिनीफले, मे, वि* जाङ्गुल जालिनीफल। जाङ्गुली विषविद्यायाम् हे

**जात**—जात व्यक्तौघजन्मसु। क्लीव त्रिलिङ्गमुत्पन्ने, मे जात व्यक्तौ घजन्मसु त्रि जात जात्यौघजन्मसु वि जात जात्यौघजनिषु हे

**जाति**—जाति स्त्री गोत्रजन्मनो। अश्मन्तिकामलक्योश्च सामान्य-च्छन्दसोरपि। *जातीफले च मालत्याम्, मे जातिश्छन्दसि सामान्ये मालत्या गोत्र* जन्मनो। जातिर्जातीफले धात्र्या चुल्लीकम्पिल्लयोरपि वि जाति सामान्य-गोत्रयो। मालत्यामामलक्या च चुल्ल्या कम्पिल्लजन्मनो। जातीफले च्छन्दसि च ह् जाति सामान्यजन्मनो अ जातिश्छन्दसि मालत्या चुल्ल्या जातीफले कुले, त्रि जाति स्यात् सहजारयान मालती जातिरुच्यते। गोत्रादिजन्म जाति *स्यात् जातिर्वल्लीति कथ्यते, अने*

**जातु**—जातु शब्दे विगर्हणे। कदाचिदर्थेऽपि, मे

**जात्य**—कुलीनश्रेष्ठयोर्जात्यम्, ह

**जानपद**— v जनपद

**जामातृ**—जामाता दुहितु पत्यौ सूर्यावर्ते धवे पुमान्, मे जामाता वल्लभे सूर्यावर्तेऽपि दुहितु पत्यौ, वि जामाता दुहितु पत्यौ। सूर्यावर्ते वल्लभे च, हे सूर्यावर्तेऽपि जामाता, त्रि

**जामि**—जामि स्वसृकुलस्त्रियो, वि, हे, अ जामि कुलवालिकाया च, ह v यामि

**जायानुजीविन्**—*जायानुजीवी पुसि स्यान् नटे च बकपक्षिणि, मे जायानुजीवी* तु नटे दुर्गताश्विनयोर्बके, वि अथो जायानुजीविन। बकाश्विननटदु स्या हे

**जार**—जारी स्यादौषधीभेदे स्त्रियामुपपतौ पुमान् म जारी स्यादोषधीभेदे जारस्तूपपतावपि, वि जारस्तूपपतौ जार्योषधीभिदि, हे

**जाल**—जाल गवाक्ष आनाये क्षारके दम्भवृन्दयो। *जालो नीपद्रुमे जाली* पाटलिकौषधौ स्त्रियाम्, मे जाल समूह आनायगवाक्षक्षारकेष्वपि, अ जाल दम्भेऽपि, त्रि जाल कपटेऽप्युक्तम्, ह जाल गवाक्ष आनाये क्षारके दम्भवृन्दयो।

जालो नीपद्रुमे जाली कोशातक्यामुदाहृता, वि जालन्तु गवाक्षे क्षारके गणे। दम्भानाययोर्जालो नीपे जाली पटोलिका, हे

**जालक**—जालक कोरके दम्भे कुलायानाययोरपि। न पुंसि मोचकफले स्त्रियान्तु वसनान्तरे। गिरिसारजलौकायामपि स्याद् विधवास्त्रियाम्। भटानामश्मरचिताङ्गरक्षिण्या च जालिका। जालिको वाच्यवद्ग्रामजालिजालोपजीविनो, मे जालिका जालिनीफले। भटानामश्मरचिताङ्गरक्षिण्याञ्च जालिका। गिरिसारे जलौकायामपि स्याद्विधवास्त्रियाम्। जालिक पुनरुद्दिष्टो ग्रामकूटे च धीवरे, वि जालक कोरके प्रोक्त कुलाये जालिनीफले। आनाये दम्भभेदे च वस्त्रभेदे च जालिका, वि जालिका वस्त्रभित् कूटकृत्कैवर्तौ च जालकौ, त्रि

**जाल्म**—जाल्म स्यात् पामरे क्रूरे पुस्यसमीक्ष्यकारिणि, मे जाल्म स्यात् पामरे क्रूरे जाल्मोऽसमीक्ष्यकारिणि, वि जाल्मस्तु पामरे। असमीक्ष्यकारिणि च, हे

**जाहक**—जाहको घोङ्घमार्जारखट्टाकारुण्डिकासु च, मे, वि घोङ्घे कारुण्डिकायाञ्च जाहकध्वनिरिष्यते हा

**जिगत्नु**—जिगत्नु पुंसि जन्तौ वैश्वानरेऽपि च, मे जिगत्नुरग्नौ जन्तौ च, वि

**जिगीषा**—जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयो, मे, वि जिगीषा तु जयस्पृहा। व्यवसाय प्रकर्षश्च, हे

**जिन**—जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु मे जिन स्यादतिवृद्धे च वृद्धे चार्हति जित्वरे वि जिनोऽर्हद्बुद्धविष्णुषु, हे बुद्धे जिनो जित्वरे च, त्रि वीतरागो जिन प्रोक्तो जिनो नारायण स्मृत। कन्दर्पोऽपि जिनश्चैव जिन सामान्यकेवली, अने

**जिष्णु**—जिष्णुर्ना वासवेऽर्जुने। जित्वरे वाच्यवत्, मे जिष्णु शक्रे धनञ्जये। जित्वरे च, वि जिष्णु शक्रेऽर्जुने विष्णौ जित्वरेऽर्के वसुष्वपि, हे जेतरीन्द्रेऽर्जुने जिष्णु, त्रि

**जिह्म**—जिह्मस्तु कुटिले मन्दे क्लीव तगरपादपे, मे जिह्मस्तु कुटिले मन्दे जिह्मस्तगरपादपे, वि जिह्म कुटिले मन्दे च जिह्म तगरपादपे, हे जिह्मस्तु कुटिलऽलसे, अ जिह्म स्यात् कुटिले मन्दे, त्रि

**जिह्मग**—जिह्मगोऽहौ च मन्दगे, मे जिह्मगो मन्दगे सर्पे, हे, वि

**जिह्वा**—जिह्वा तु वाचि ज्वालारसज्ञयो, हे

**जिह्वाप**—जिह्वाप शुनि मार्जारे मे, त्रि जिह्वाप शुनि मार्जारे व्याघ्र-

चित्रकयोरपि, वि. जिह्वापस्तु शुनि व्याघ्रे द्वीपिविडालयोः, हे. जिह्वापो वृषदंशे स्यादिन्द्रमहकामुके, हा.

**जीमूत**—जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे, मे. जीमूत स्याद्भृतिकरे शक्रेऽद्रौ घोषके घने, वि. जीमूतो वासवेऽम्बुदे। घोषकेऽद्रौ भृतिकरे, हे. जीमूतौ मेघपर्वतौ, अने. जीमूतं पर्वतेऽपि कथयन्ति, ह.

**जीर**—जीरस्तु जरणे खड्गे, मे. जीरः खड्गे वणिग्द्रव्ये, वि जीरस्त्वजाज्यां खड्गे च, हे.

**जीर्ण**—जीर्णं परिपक्वपुराणयोः, मे. जीर्णं पक्वे पुराणे च, वि.

**जीव**—जीव. प्राणिनि वृत्तौ च वृक्षभेदे बृहस्पतौ। जीवा जीवन्तिकामौर्वी-वचाशिञ्जितभूमिषु। न स्त्री तु जीविते, मे. जीव स्यात् त्रिदशाचार्ये द्रुमभेदे शरीरिणि। जीवितेऽपि च जीवा तु वचाया धनुषो गुणे। शिञ्जिते क्षिति-जीवन्त्योर्वृत्तौ, हे. जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रिया गुणे, त्रि. जीवो वृक्षप्रभेदे स्यात् जीव. प्राणिनि गीष्पतौ। जीवा जीवन्तिकाभूम्योर्मौर्वीशिञ्जित-वृत्तिषु। वचायामपि जीवा स्याज् जीवं जीवा च जीविते, वि

**जीवक**—जीवक. प्राणके पीतशालक्षपणयोरपि। कूर्चशीर्षेऽपि पुंसि स्याद् आजीवे जीविका मता। त्रिषु सेविनि वृद्ध्याशीर्जीविनोरहितुण्डिके, मे जीवकः पीतशाले स्यात् क्षपणे वृद्धिजीविनि। सेविनि प्राणकेऽप्यहितुण्डिके पादपान्तरे। आजीवे जीविकामाहुर्जीवन्त्यामपि कुत्रचित्, वि. जीवको वृद्धिजीविनि। क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे। व्यालग्राहे जीविका तु जीवन्त्या वर्तनेऽपि च, हे.

**जीवञ्जीव**—जीवञ्जीवश्चकोरे स्याद् द्रुमभेदेऽपि पुंस्ययम्, मे. जीवञ्जीव-श्चकोरे स्याद् द्रुमपक्षिविशेषयो, वि. जीवञ्जीव खगान्तरे। द्रुमभेदे चकोरे च, हे.

**जीवद**—जीवदो वैद्यविद्विषो, मे., वि जीवदो रिपुवैद्ययो.। ग्रन्थिपर्णे, हे.

**जीवन**—जीवन वर्तने नीरप्राणधारणयोरपि। जीवनी जीवना चापि जीवन्ती-भेदयो. क्रमात्, मे. जीवन वर्तने नीरे पुत्रजीवे तु जीवनः। जीवनी जीवना चेति जीवन्तीभेदयोः क्रमात्, वि जीवनस्तु पुत्रजीवे जीवन वृत्तिवारिणोः। स्याज्जीवना तु मेदायां जीवनी तु मधुस्रवा, हे. जीवनं वर्तनाम्भसोः, त्रि.

**जीवन्तिका**—जीवन्तिका गुडूच्याञ्च जीवाख्यशाकवन्दयो', मे. जीवन्तिकापि जीवाख्यशाकवन्दागुडूचिषु, वि.

**जीवन्ती**—जीवन्ती जीवनीशम्योर्गुडूचीवन्दयोरपि, मे. जीवन्ती जीवनीशम्यो-र्गुडूचिवन्दयोरपि, वि. जीवन्ती शमिवन्दयोः। जीवन्यां च गुडूच्या च, हे.

**जीवपुष्प**—जीवपुष्पन्तु दमनके फणिज्जके, हे

**जीवातु**—जीवातुरस्त्रिया भक्ते जीविते जीवनौषधौ, मे जीवातुर्जीविते भक्ते जीवातुर्जीवनौषधे, वि जीवातुर्जीवनौषधे। जीवितेऽपि, हे

**जीवितेश**—जीवितेशो यमे पुसि त्रिषु स्यात् जीवितेश्वरे, मे जीवितेशो यमे कान्ते जीवातौ जीविताधिपे, वि जीवितेश प्रिये यमे। जीवितस्वामिजीवात्वो, हे जीवितेशो यमे नाथे, त्रि

**जुष्ट**—जुष्टन्तु क्लीवमुच्छिष्टे सेविते वाच्यलिङ्गकम, मे

**जुहुराण**—जुहुराणोऽपि चाध्वर्यावपि स्याज् जातवेदसि मे जुहुराणोऽनलेऽध्वर्यौ, वि जुहुराणोऽध्वर्युवह्न्योः, हे

**जू**—जूस्त्वरागमने प्रोक्ता सामान्यगमने स्त्रियाम्। जूराकाशे सरस्वत्या पिशाच्या जवने स्त्रियाम्, मे जूराकाशे सरस्वत्या पिशाच्या जवनेऽपि च, वि, हे

**जृम्भा**—जृम्भा विकाशजृम्भणयोस्त्रिषु मे जृम्भा जृम्भे विकाशे च, वि जृम्भा जृम्भणे विकाशे, हे

**जृम्भित**—जृम्भित करणे स्त्रीणामीहास्फुटितयोरपि मे, वि जृम्भित तु विचेष्टितप्रवृद्धयो। जृम्भाया स्फुटिते चापि, हे

**जैवातृक**—जैवातृक पुमान् सोमे दीर्घायु कृशयोस्त्रिषु, मे जैवातृक स्याद्रजनीकरे। कृशायुष्मद्भेषजेषु हे जैवातृक कृशे चन्द्रे भेषज्यायुष्मतोरपि, वि जैवातृक शशाङ्केऽपि, अ जैवातृक कृशे चन्द्रे दीर्घायुषि च सत्रिषु, त्रि

**जोषम्**—जोषम् सुखे प्रशसाया तूष्णीलङ्घनयोरपि मे, वि जोष सुखे स्तुतौ। मौनलङ्घनयोश्चापि, हे तूष्णीमर्थे सुखे जोषम्, अ

**ज्ञ**—ज्ञो ब्रह्मबुधविद्वत्सु मे ज्ञो विरिञ्चे बुधे सौम्ये वि ज्ञ स्याद् विचक्षणे पद्मासने चान्द्रमसायनौ हे

**ज्ञाति**—ज्ञातिस्तातसगोत्रयो। पुमान् मे ज्ञाति सगोत्रे पितरि, वि ज्ञाति पितृसगोत्रयो, हे

**ज्ञानिन्**—ज्ञानी स्यात् पुसि दैवज्ञे ज्ञानयुक्तेऽन्यलिङ्गक, मे

**ज्या**—ज्या मातरि वसुधाया मौर्व्याम्, मे ज्या मौर्वीमातृभूमिषु वि ज्या तु मातरि क्ष्मामौर्व्यो, हे ज्या स्यान्मौर्व्या क्षितावपि, त्रि

**ज्यानि**—ज्यानिर्जीर्णे च हानौ च तटिन्यामपि योषिति, मे ज्यानिर्हानौ स्रवन्त्या च, वि

**ज्यायस्**—ज्यायो वृद्धेऽतिप्रशस्ते, मे ज्यायान् वृद्धे च शस्ते च, त्रि ज्यायान् वृद्धे प्रशस्ये च, हे (अतिशये) वृद्धप्रशस्ययोर्ज्यायान् अ

**ज्येष्ठ**—ज्येष्ठ श्रेष्ठे चातिवृद्धे त्रिषु मासान्तरे पुमान्। ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः, मे. ज्येष्ठः श्रेष्ठेऽतिवृद्धे च ज्येष्ठो मासान्तरेऽपि च। गृहगोधर्क्षयोर्ज्येष्ठा, वि. ज्येष्ठः स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयो'। ज्येष्ठा भे गृहगोधायाम्, हे. त्रिपु ज्येष्ठोऽतिशस्तेऽपि, श्र. ज्येष्ठो मासि च वृद्धे च। ज्येष्ठा च गृहगोधिका, त्रि.

**ज्योतिस्**—ज्योतिरग्नौ दिवाकरे। पुमान् नपुंसक दृष्टौ स्यान्नक्षत्रप्रकाशयो, मे. ज्योतिः प्रकाशे दृशि तारकासु ज्योतिर्दिनेशानलयोरपि स्यात्, वि ज्योतिर्वह्निदिनेशयो.। प्रकाशे दिशि नक्षत्रे, हे. ज्योतिर्भद्योतदृष्टिषु, श्र. दीप्तौ च तारासु ज्योति शब्दो निगद्यते, अने. चक्षुषि ज्योति', ह.

**ज्योत्स्ना**—ज्योत्स्ना चन्द्रातपेऽपि स्याज् ज्योत्स्नायुक्तनिशि स्मृता। ज्योत्स्नी पटोलिकायां स्याज् ज्योत्स्नायुक्तनिशि स्त्रियाम्, मे ज्योत्स्ना स्याज्ज्योति.संयुक्तनिशि चन्द्रातपेऽपि च। ज्योत्स्नी पटोलीज्योत्स्नावन्निशोः, हे. ज्योत्स्नी पटोलिकाया स्याज् ज्योत्स्नायुक्तविभावर्याम्। ज्योत्स्ना सचन्द्रनक्षत्ररात्रौ चन्द्रातपेऽपि च, वि.

**ज्वलित**—ज्वलित दग्ध उज्ज्वले, मे. ज्वलितं भास्वरे दग्धे, वि. ज्वलितौ दग्धभास्वरौ, हे.

**झ**—झो झण्टीशे सुरगुरौ दैत्यराजे ध्वनावपि, मे स्थिति. पाशी तथाजेशो वामाङ्गुलितलस्थित'। स्वस्तिक. स्थाणुसंज्ञश्च झकारो जान्तसञ्ज्ञक', मा

**झञ्झा**—झञ्झा वाते तारवायौ नष्टेऽपि कीर्त्यते बुधैः। झञ्झा ध्वनिविशेषे च स्यादम्बुकणवर्षणे, मे. झञ्झा ध्वनिविशेषेऽपि झञ्झाणुजलवर्षणे, वि.

**झर्झर**—झर्झर स्यात् कलियुगे वाद्यभाण्डे नदान्तरे, मे झर्झरस्तु कलियुगे वाद्यभाण्डे नदान्तरे, वि झर्झरो वाद्यभाण्डे कलियुगे, हे. नदप्रभेदे वाद्ये च झर्झरः, त्रि.

**झला**—झला स्यादातपस्योमौं दुहितर्यपि च स्त्रियाम्, मे झला दुहितरि स्मृता। आतपोर्मिषु लुक्कायां झाली क्वापि विलोक्यते, वि. झला पुत्र्यामातपोर्मौ, हे. झलाऽतपोर्मिर्दुहिता, त्रि.

**झल्लरी**—झल्लरी झिल्लरी च द्वे हुडुक्के वालकुन्तले, मे. झल्लरीवत्तु झिल्लरी। वाद्यभेदे केशचक्रे, हे. झल्लरी झिल्लरी च द्वे हुडुक्के वालचक्रे, वि.

**झष**—झषा नागवलाया स्त्री तापमत्स्याटवीषु ना, मे. झषा नागवलायां स्याद् वैसारिणि झषो मत: वि. झषस्तु मकरे वने। मीने झषा पुनर्नागवलायाम्, हे.

**झाट**—झाटो निकुञ्जे कान्तारे व्रणादीनाञ्च मार्जने, मे झाटो व्रणादिसमाप्तौ कुञ्जकान्तारयोरपि, हे झाटो निकुञ्जे कान्तारे व्रणसमार्जनेऽपि च, वि

**झिञ्झिम**—वनदावेऽपि झिञ्झिम, हा

**झिल्लरी**—v झल्लरी।

**झिल्लिका, झिल्लीका**—झिल्लिकोद्वर्तनपटे स्त्रिया द्योते च झिल्लिका। आतपस्य रुचौ झिण्टयाम्, मे झिल्लीका झिल्लिकाऽपि च। विलेपनमले झिल्ल्यामातपस्य रुचि स्मता, वि झिल्लीका झिल्लिकावत् स्याच्चीर्यां रुच्यातपस्य च। विलेपनस्य च मले, हे

**झिल्ली**—झिल्ली चीर्यातपरुचोर्वर्त्यामुद्वर्तनांशुके, मे झिल्ली स्यादातपरुचि वर्त्यामुद्वर्तनांशुके, वि झिल्ली तूद्वर्तनांशुके। वर्त्यातपरुचोश्चीर्याम्, हे

**झूणि**—झूणि क्रमुकभेदेऽपि दुष्टदैवश्रुतौ स्त्रियाम्, मे झूणि क्रमुकभेदेऽपि दुष्टदैवश्रुतावपि, वि झूणि क्रमुकभेदे स्याद्दुष्टदैवश्रुतावपि, हे झणि कठिनपूगयो, त्रि

**ञ**—ञ पुमान् स्यात् बलीवर्दे शुके वाममतावपि, मे वामाङ्गुल्यग्रत सिद्धिरङ्कुशी सर्वसञ्ज्ञक। मातङ्गो ह्यनुगासनश्च ञकारश्च निरञ्जन, मा

**ट**—ट पुमान् वामने पादे नि स्वनेऽपि क्वचिन्मत, मे जरा मुकुन्द सोमेश दक्षपादादिगोमुख। गजाङ्कशश्च वालेन्दु अमृताद्यष्टक स्मृत, मा

**टगर**—टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे। नाऽन्यवत् केकराक्षे स्यात्, मे टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे। वाच्यवत् केकराक्षे तु, वि टगरष्टङ्कणे केकराक्षके, हे

**टङ्क**—टङ्को नीलकपित्थे च खनित्रे टङ्कणे स्त्रियाम्। जङ्घाया स्त्री पुमान् कोपे कोशासिग्रावदारणे, मे टङ्को नीलकपित्थेऽसिकोपे कोपेऽश्मदारणे। मानान्तरे खनित्रे च जङ्घाया टङ्कणेऽपि च, हे टङ्क कपित्थभेदे स्यान्मानान्तरखनित्रयो। कोपेऽसिकोशे जङ्घाया टङ्कणे ग्रावदारणे, वि जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारणे। कपित्थे चास्त्रिया टङ्क, त्रि टङ्क स्यादभिमाने प्रस्तरघटनोपकरणेऽपि च, ह

**टङ्कार**—टङ्कारो विस्मये पुंसि प्रसिद्धौ सिञ्जिनीध्वनौ, मे टङ्कार शिञ्जिनीध्वनौ। विस्मये च प्रसिद्धौ च, वि टङ्कारो ज्यारवेऽद्भुते। प्रसिद्धौ च, हे अथ गुणध्वनौ। प्रसिद्धावपि टङ्कार, त्रि

**टङ्ग**—टङ्गोऽस्त्री स्यात् खनित्रके। खड्गभेदे च जङ्घायाम्, मे टङ्ग खनित्रे जङ्घास्यो हे टङ्ग कृपाणभेदे स्यात् जङ्घायाञ्च खनित्रके, वि

**टट्टरी**—टट्टरी स्यान्मृषावादे लम्पापटहवाद्ययो, मे, वि टट्टरी त्वनृताख्याने लम्पापटहवाद्ययो, हे

**टार**—टारो लङ्गतुरङ्गयो, हे, वि, मे

**टुण्टुक**—टुण्टुक शोणकाल्पयो, मे टुण्टुकावल्पशोणकौ, त्रि टुण्टुक शोणके क्रूरे, वि

**ठ**—लाङ्गलीशो नन्दजश्च पालिनी च कमण्डलु। दक्षजानुगत स्थायी ठकार स्थविर स्मृत, मा ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे, मे

**ड**—नन्दी क्षान्तिर्दारिकश्च डामरो दक्षगुल्फग। व्याघ्रपाद शुभाङ्घ्रिश्च डकारस्तोमरो मत, मा ड पुमान् वाडवाग्नौ स्यात् डाकिन्या स्त्री निगद्यते, मे

**डिङ्गर**—डिङ्गरो डङ्गरेऽपि च। क्षेपे, मे डिङ्गरो डङ्गरे क्षेपे वि

**डिम्ब**—डिम्बो भयध्वनावण्डे फुप्फुसप्लीहविप्लवे, मे डिम्ब स्यात् विप्लव-प्लीह्लोरेरण्डे पुप्फुसे भये, वि डिम्ब एरण्डभययोर्विप्लवे प्लीह्नि पुप्फुसे हे प्लीहविप्लवयोर्डिम्ब, त्रि डिम्ब भये च कलले फुप्फुसे च प्रचक्षते, हा

**डिम्बिका**—डिम्बिका जलबिम्बे स्यान्मोणके कामुकस्त्रियाम्, मे

**डिम्भ**—डिम्भोऽपि बालिशे बाले, मे डिम्भो बालिशपोतयो, वि डिम्भो वैधेयबालयो, हे डिम्भौ तु शिशुबालिशौ, अ

**डुलि**—डुलिस्तु कमठे मुनौ, वि V दुलि

**ढ**—ढो ढक्काया पुमानुक्त शुनि तस्य च लागुले, मे ऐश्वरी चार्धनारीश नर शाखान्तराकृति। दक्षपादाङ्गुलीमूल फलो ढक्को ढकारक, मा

**ण**—ण पुमान् विन्दुदेवे स्याद् भूषणे गुणवर्जिते। पानीयनिलयेऽपीति केचिदूचुर्विपश्चित, मे उमाकान्तो नरकजिद् रतिर्दक्षपदाग्रग। निर्वाणस्त्रि-गुणाकार निरेखो ण समीरित, मा

**त**—तश्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित्। अपुमास्तरणे पुण्ये कथित शब्दवेदिभि, मे वामोरुमूलनिलय आषाढी कामिका हरि। तीव्रश्च तरलो नील तकार कीर्तितो बुधै, मा

**तक्षक**—तक्षकस्तु पुमान् नागराजभेदे च वर्धकौ, मे तक्षक फणिभेदे च वर्धकिद्रुमभेदयो, वि तक्षकस्तक्षिण पन्नगे। द्रुमभेदे, हे तक्षको नागवर्धक्यो, अ

**तट**—तट नपुसक क्षेत्रे प्रतीरे तु तटी त्रिपु, मे

**तडाग**—तडागोऽस्त्री जलाधारविशेषे यन्त्रकूटके, मे तडागस्तु जलाधार-विशेषे कूटकेऽपि च, वि

**तण्डक**—तण्डकः खञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायाबहुलकेष्वपि, मे. तण्डक. खञ्जने फेने समासप्रायवाचि च। गृहदारौ तरुस्कन्धमायाबहुलयोरपि, वि. तण्डकस्तु समस्तपदजातके। तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि। फेनखञ्जनयोश्चापि, हे. गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च, त्रि. तण्डकः खञ्जने फेने, हा.

**तण्डुरीण**—तण्डुरीण' कीटमात्रे बर्बरे तण्डुलोदके, मे., वि. तण्डुरीणस्तु बर्बरे। तण्डुलाम्बुनि कीटे च, हे.

**तण्डुल**—तण्डुल' स्याद् विडङ्गे च धान्यादिनिकरे पुमान्, मे. तण्डुलाख्या विडङ्गे स्याद् धान्यादिनिकरेऽपि च, वि. तण्डुलः। विडङ्गे धान्यसारे च, हे. विडङ्गेऽपि च तण्डुल, त्रि.

**तण्डुलीय**—तण्डुलीय. शाकभेदे विडङ्गतरुताप्ययो', मे., वि., ह.

**तत**—अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीवं वीणादिवाद्ये स्यात् पुलिङ्गस्तु समीरणे, मे. व्याप्तविस्तृतवाद्येषु ततम्, त्रि. तत विततवद् व्याप्ते विस्तृते वाच्यवन्मतम्। ततं वीणादिवाद्ये च पवमाने, वि. ततं वीणादिवाद्ये स्यात् ततो व्याप्तेऽनिले पृथौ, हे.

**ततस्**—तत आदौ परिप्रश्ने कथान्तरे। आनन्तर्ये, वि. तत आदौ कथान्तरे। पञ्चम्यर्थे परिप्रश्ने, हे

**तत्त्व**—तत्त्व स्वरूपे परमात्मनि। स्याद् विलम्बितनृत्ये च, मे. तत्त्वं वाद्यप्रभेदे स्यात् स्वरूपे परमात्मनि, वि. तत्त्वं परमात्मनि। वाद्यभेदे स्वरूपे च, हे तत्त्व विलम्बिते नृत्ये स्वरूपे परमात्मनि, त्रि. तत्त्वं याथार्थ्यब्रह्मणो', अ.

**तथा**—तथाऽभ्युपगमे पृष्टप्रतिवाक्ये समुच्चये। सदृशे निश्चयेऽपि स्यात्, मे. तथा स्यान्निश्चये पृष्टप्रतिवाक्ये समुच्चये, वि., हे.

**तद्दिन**—तद्दिन दिनमध्ये स्यात् तथैव प्रतिवासरे, मे. तद्दिनं दिनमध्ये स्यात् तद्दिनं प्रतिवासरे, वि तद्दिन पुनः। दिनमध्ये प्रतिदिने, हे.

**तनु**—तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे, मे. तनुः काये कृशे चाल्पे विरलेऽपि च वाच्यवत्, वि. तनुर्वपुस्त्वचोः। विरलेऽल्पे कृशे, हे. त्वग्देहयोरपि तनु., अ विरलेऽल्पे कृशे तनु', त्रि.

**तनूरुह**—तनूरुहन्तु लोम्नि स्यात् पतत्रे च नपुसकम्, मे. तनूरुहं गरुल्लोम्नोः, वि. तनूरुहस्तु पुत्रे गरुति लोम्नि च, हे.

**तन्त्र**—तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाये

च शास्त्रभेदे परिच्छदे। श्रुतिशास्त्रान्तरे हेतावुभयार्थप्रयोजके। इतिकर्तव्यतायाञ्च तन्त्री वीणागुणे मता। अमृतादेहशिरयोः, मे. तन्त्रं कुटुम्बकृत्ये स्यात् कारणे च परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्तुवायेऽगदोत्तमे। तत्त्वादि-साधनोपाये श्रुतिशाखान्तरेऽपि च। इतिकर्तव्यताया च तन्त्री वीणागुणे तनोः। शिरायाममृतायां च, वि. तन्त्रं सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः। अगदे कुटुम्बकृत्ये तन्तुवाये परिच्छदे। श्रुतिशाखान्तरे शास्त्रे करणे व्यर्थसाधके। इतिकर्तव्यतातन्त्वोस्तन्त्री स्याद् वल्लकीगुणे। अमृताया च नाड्यां च शिराया वपुषोऽपि च, हे. तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे, अ. इतिकर्तव्यता तन्त्र-मुपायश्च द्विसाधकः, त्रि., तन्त्रं शास्त्र कुलं तन्त्रं तन्त्रं सिद्धौषधी क्रिया। तन्त्रं सुख बलं तन्त्रं तन्त्रं पवनसाधनम्, अने. तन्त्रं तन्तुषु तन्त्रेषु सिद्धान्तपरिच्छद-प्रधानेषु, ह.

तन्द्री—तन्द्री निद्राप्रमीलयोः, मे., वि, अ. तन्द्री निद्रा प्रमीला च, हे.

तपन—तपनोऽरुस्करेऽपि स्याद् भास्करे निरयान्तरे, मे. तपनस्तरणौ तापे भल्लाते नरकान्तरे, वि. तपनो रवौ। भल्लाते नरके ग्रीष्मे, हे. तपनो नरके भानौ, त्रि.

तपस्—तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः, मे. तपश्चान्द्रायणादौ स्याद् धर्मे लोकान्तरेऽपि च। तपा माघे च शिशिरे, वि. तपः कृच्छ्रादिकर्मणि। धर्मे लोकप्रभेदे च तपाः शिशिरमाघयोः, हे. तपः कृच्छ्रादि-कर्म च, अ. अथ हिमर्तौ ना धर्मे व्रते तपः, त्रि.

तपस्य—तपस्या व्रतचर्यायां तपस्यः फाल्गुने पुमान्, मे. तपस्यः फाल्गुने पार्थे तपस्या नियमस्थितौ, हे. तपस्या व्रतचर्याया तपस्यो मासि फाल्गुने, वि.

तपस्विन्—तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति। मांसिकाकटु-रोहिण्योः, मे. तपस्वी तापसे चानुकम्पने च तपस्विनी। मांसिकाकटुरोहिण्योः, वि. तपस्वी तापसे दीने, हे. तपस्विनी पुनर्मांसी कटुरोहिणिकाऽपि च, हे. अनुकम्प्य-स्तपस्वी स्यात् तपस्वी च धृतव्रतः, हा. प्रतिशोच्यो तपस्विनो, त्रि. करुणाप्रति-पादने तपस्वी च, ह.

तपोधन—तपोधनस्तापसे स्यान्मुण्डीर्यां तु तपोधना, मे. तपोधनस्तापसे स्यान्मुण्डीर्यां च तपोधना, वि. तपोधना तु मुण्डीर्यां तपोधनस्तपस्विनि, हे.

तमस्—तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे, मे. तमोऽन्धकारे

स्वर्भानौ तम शोके गुणान्तरे, वि तमो राहौ गुणे पापे ध्वान्ते, हे राहौ ध्वान्ते गुणे तम , अ तम शोकेऽपि, त्रि

**तमाल**—तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे, मे तमालस्तिलके खड्गे तापिच्छे च तृणद्रुमे, वि तमालो वरुणे पुण्ड्रेऽसौ तापिच्छे, हे तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च, त्रि

**तमालपत्र**—तमालपत्र तापिच्छे तिलके पत्रकेऽपि च, मे , वि तमालपत्र तिलके तापिच्छे पत्रकेऽपि च, हे

**तमिस्र**—तमिस्र तिमिरे कोपे स्त्री तु तमस्ततौ। कृष्णपक्षनिशाया च, मे तमिस्र तिमिरे कोपे तमिस्रा च तमस्ततौ। कृष्णपक्षनिशाया च, वि तमिस्र तिमिरे कोपे तमिस्रा दर्शयामिनी। तमस्तति , हे

**तमोघ्न**—तमोघ्न सूर्यवह्नीन्दुबुद्धशङ्करविष्णुपु, मे , वि तमोघ्नो वह्नि-सूर्येन्दुबुद्धकेशवशम्भुपु, हे

**तमोनुद्**—तमोनुदग्नीन्द्वर्के ना मे तमोनुदग्नीन्द्वर्केपु, वि तमोनुत्तु शशि-मार्तण्डवह्निपु, हे चन्द्राग्न्यर्कास्तमोनुद , अ

***तमोऽपह्***—*तमोऽपह* सहस्राशुमृगाङ्कजिनवह्निपु, मे , वि *तमोऽपहो* जिने रवौ। चन्द्रेऽग्नौ, हे अग्नीन्द्वर्कास्तमोऽपहा , अ

**तर, रि**—तरस्तु तरणे पुसि दशालौ पेटके तरी, मे तरिर्नावि दशाया च वस्त्रादीना च पेटके, वि तरिर्दशाया वेडाया वस्त्रादीना च पेटके, हे पेटके नावि च तरी, त्रि

**तरणि**—तरणिर्द्युमणौ पुसि कुमारीनौकयो स्त्रियाम्, मे तरणिस्तरणे भानौ कुमार्यौ पथिनौकयो , वि तरणिस्तरणेऽर्केऽशौ कुमार्यौ पथिनौकयो । यष्टावब्धौ, हे द्युमणौ तरणि पुसि कुमारीनौकयो स्त्रियाम्, त्रि

**तरण्ड**—तरण्डो वडिशीसूत्रवद्धकाष्ठादिके प्लवे। नौकायामपि स्त्री स्यात्, मे तरण्डो वडिशीसूत्रावद्धवस्तुनि भेलके, वि

**तरद्**—तरत् स्त्रिया प्लवेऽपि स्यात् कारण्डे च विहङ्गमे, मे तरत् कारण्डवे प्लवे, वि

**तरल**—तरल चञ्चले पिङ्गे भास्वरेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुसि यवागूसुरयो स्त्रियाम्, मे तरलश्च चले पिङ्गे हारमध्यमणावपि। भासुरे चाथ तरला यवागूसुरयोर्मता, वि तरलो भास्वरे चले। हारमध्यमणौ पिङ्गे तरला मधुमक्षिका, हे लोहे हारमणौ पुसि यवाग्वा तरला स्त्रियाम्, त्रि

**तरस्**—तरो बले च वेगे च, मे , वि तरो जवे बले, हे तरो वेगे बलेऽपि च, त्रि

**तरस**—तरसं मांसमाख्यातं तरसं बलमुच्यते, अने.

**तरस्विन्**—तरस्वी शूरवेगिनोः, मे. तरस्वी वेगिशूरयोः, वि., हे. वेगिशूरौ तरस्विनौ, अ.

**तरीष**—तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः, वि. तरीषः शोभनाकृतौ। भेलेऽब्धौ व्यवसाये च, हे.

**तरुण**—तरुणः कुब्जपुष्पे ना रुवुके यूनि तु त्रिपु, मे. तरुण. स्यान्नवे यूनि कुब्जपुष्परुवुकयो., वि. तरुणः कुब्जपुष्पे स्यादेरण्डे यूनि नूतने, हे. तरुणः कुब्जपुष्पेऽपि, त्रि.

**तर्क**—तर्क. काङ्क्षावितर्कोहहेतुशास्त्रेपु कथ्यते, मे. तर्को वितर्के काङ्क्षायामूहतर्कविशेषयोः, हे. तर्कः काङ्क्षावितर्कोहकर्मभेदेपु कीर्त्यते, वि.

**तर्तरीक**—तर्तरीकं वहित्रे स्यान्न द्वयोः पारगे त्रिपु, मे तर्तरीक वहित्रके। पारगे, हे. तर्तरीक वहित्रे स्यात्तर्तरीकश्च पारगे, वि.

**तर्ष**—तर्षो लिप्सोदन्ययो , मे. तर्षो लिप्सापिपासयो', वि , त्रि. v. तृप्

**तल**—तलं स्वरूपेऽनूर्ध्वे स्त्री क्लीवं ज्याघातवारणे। कानने कार्यबीजे च पुंसि तालमहीरुहे। चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना, मे. तल स्वरूपाधरयोः खड्गमुष्टिचपेटयो'। ज्याघातवारणेऽपि स्यात् तलस्तालतरावपि, वि. तल ज्याघातवारणे। तलश्चपेटे तालद्रौ स्वभावाधरयो. त्सरौ, हे. अध.स्वरूपयोरस्त्री तलम्, अ. तल मूलचपेटयोः, त्रि.

**तलिन**—तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्, मे. तलिनं विरले स्तोके स्वच्छेऽपि तलिनं मतम्, वि. तलिनं विरले स्वच्छे स्तोके, हे. तलिनं विरले स्तोके वाच्यलिङ्गम्, अ.

**तलिम**—तलिम कुट्टिमे तल्पे चन्द्रहासे वितानके, मे., वि. तलिम तल्पखड्गयो । विताने कुट्टिमे चापि, हे तलिमं तल्पकुट्टिमे, त्रि.

**तलुन**—तलुन. पवने यूनि युवत्या तलुनी स्मृता, मे. तलुनं पवने यूनि स्त्रियां च तलुनी विदुः, वि. तलुनो यूनि मारुते, हे.

**तल्प**—तल्पमट्टे कलत्रे च शयनीये च न द्वयोः, मे., तल्पं तु शयनीये स्यात् तल्पमट्टकलत्रयोः, वि. तल्पमट्टे शय्याकलत्रयोः, हे. तल्पं दारेपु, ह. तल्पं शय्याट्टदारेपु, अ. अट्टे दारेपु शय्यायां तल्पशब्दोऽभिधीयते, अने.

**तल्ल**—तल्ली तरुण्यां तल्लस्तु जलाधारान्तरे पुमान्, मे. तल्ली तलुन्यां तल्लस्तु जलाधारान्तरेऽपि च, वि. तल्लो जलाधारभेदे तल्ली तु वरुणस्त्रियाम् हे.

**तवीप**—तवीपी शक्रकन्याया पुंसि स्वर्गे महोदधौ, मे

**ताड**—ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु। ताडी पत्रद्रुमे च, मे ताडस्ताडनघोषयो। मुष्टिमेयतृणादौ च ताडी ताली दलद्रुमे, वि ताडोऽद्रौ ताडने घोरे मुष्टिमेयतृणादिके। ताडी ताली दलतरौ, हे

**ताण्डव**—ताण्डवोऽस्त्री तृणान्तरे। भवेदुद्धतनृत्ये च, मे ताण्डव कथित नृत्ये तृणभेदेऽपि ताण्डवम्, वि ताण्डव तृणभिन्नाट्यभेदयो, हे

**तात**—तातोऽनुकम्प्ये जनके, मे, वि तातोऽनुकम्प्ये पितरि, हे तात पित्रनुकम्प्ययो, त्रि

**तातगु**—तातगु क्षुद्रताते ना जनकस्य हिते त्रिषु, मे तातगु क्षुद्रताते स्याज्जनयितृहितेऽपि च, वि

**तातल**—तातलो रुजि पाके च लोहकूटे मनोजवे, मे

**ताप**—ताप सन्तापकृच्छ्रयो। तापी नद्यन्तरे, मे तापोऽस्ति तापे दवथौ तापी तु सरिदन्तरे वि ताप सन्तापे कृच्छ्रे, च तापी तु सरिदन्तरे, हे

**तामरस**—अथ तामरस पद्मे ताम्रकाञ्चनयोरपि, मे स्मृत तामरस पद्मे ताम्रकाञ्चनयोरपि, वि तामरसन्तु पङ्कजे। ताम्रकाञ्चनयो, हे पद्मे स्वर्णे तामरसम्, त्रि

**तामस**—तामसी निशि दुर्गाया तामसो भुजगे खले, मे, वि निशा दुर्गा च तामसी, त्रि तामस सर्पखलयोस्तामसी स्यान्निशोमयो, हे

**ताम्बूल**—ताम्बूली नागवल्ल्या स्त्री क्रमुके तु नपुसकम्, मे ताम्बूली नागवल्ल्या च ताम्बूल क्रमुकेऽपि च, वि ताम्बूल क्रमुकीफले। ताम्बूली नागवल्ल्या स्यात्, हे गुवाकेऽपि च ताम्बूलम्, त्रि

**ताम्र**—ताम्र शुल्वेऽरुणेऽपि च, मे ताम्र शुल्वेऽरुणेऽन्यवत्, वि ताम्रन्तु शुल्वे शुल्वनिभेऽपि च, हे ताम्र शुल्वेऽरुणे त्रिषु, त्रि

**तार**—तारो वानरभिन्मुक्ताविशुद्धयो शुद्धमौक्तिके। ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुसकम्। स्त्री बुद्धदेवताभेदे वालिगीष्पतिभार्ययो। त्रिलिङ्गोऽत्युच्चशब्दे च, मे तारो मुक्तादिसशुद्धौ तरणे शुद्धमौक्तिके। तारा च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम्। ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितो। बुद्धदेव्या मता तारा, वि तारो निर्मलमौक्तिके। मुक्ताशुद्धौ उच्चनादे नक्षत्रनेत्रमध्ययो। तार रूप्ये तारा बुद्धदेव्या सुरगुरुस्त्रियाम्। सुग्रीवपत्न्याम्, हे मुक्ताशुद्धौ च तार स्यात, अ तारोऽत्युच्चस्वरे त्रिषु। तारिण्यङ्गदमात्रो स्त्री न ना ऋक्षाक्षिमध्ययो, त्रि तारो मुक्तागुणेऽप्युक्त, ह

**तारक**—तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि। कनीनिकायामृक्षे च न पुमान् त्रातरि त्रिषु, मे. तारकः कर्णधारे स्याद् दैत्ये च दृशि तारकम्। कनीनिकायां नक्षत्रे तारकं तारकेति च, वि. तारकः कर्णधारके। दैत्ये च तारकमुडौ नेत्र-तन्मध्ययोरपि, हे. दैत्ये ना कर्णधारे च तारकं दृशि भे न ना, त्रि.

**तार्क्ष्य**—तार्क्ष्यः स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयो । तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे, वि. तार्क्ष्योऽश्वसर्पयो.। गरुडाग्रजे सुपर्णे च पुंसि क्लीवं रसाञ्जने, मे. तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडाग्रजे। अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यन्तु रसाञ्जने, हे. तुरङ्गगरुडौ तार्क्ष्यौ, अ.

**ताल**—तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते। गीतकालक्रियामाने करास्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटौषधौ। क्लीवन्तु हरिताले स्यात्, मे. ताल· करतलेऽङ्गुष्ठमध्यमाभ्या च सम्मिते। गीतकाल-क्रियामाने तालः खड्गादिमुष्टिषु। द्रुमभेदे करास्फाले तालन्तु हरितालके। वाद्यभाण्डे च कांस्यस्य, वि. तालः कालक्रियामाने हस्तमानद्रुभेदयो । करास्फोटे करतले हरिताले त्सरावपि, हे. तालो गीतक्रियामाने हरिताले द्रुमान्तरे, त्रि ताल कालक्रियामानं तालः पातालमिष्यते। वृक्षभेदः स्मृतस्ताल· ताल· करतलध्वनि, अने v. ताड

**तालपत्र**—तालपत्रन्तु ताटङ्के रण्डाया तालपत्र्यपि, मे तालपत्रन्तु ताडङ्के रण्डाया तालपत्र्यपि, वि तालपत्रन्तु कुण्डले। स्यात् तालपत्री रण्डायाम्, हे.

**तालाङ्क**—तालाङ्कः करपत्रे स्यात् शाकभेदेऽच्युताग्रजे। महालक्षणसम्पूर्ण-पुरुषे पुस्तके हरे, हे

**तालीशपत्र**—तालीशपत्रं भूम्यामलकीतालीशयोः स्मृतम्, मे तालीशपत्रं तालीशे तामलक्यामपि स्मृतम्, वि. तालीशपत्र तु तामलक्यां तालीशके क्वचित्, हे.

**तावत्**—तावन्मानेऽवधारणे। सम्भ्रमे च परिच्छेदे तथा कार्त्स्न्यादि-कारयोः, मे. v. यावत्.

**ताविष**—ताविषोऽब्धिसुवर्णयोः। स्वर्गे च, हे. ताविषी चन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने, मे. ताविषः कनकेऽम्बुधौ, वि.

**तिक्त**—तिक्तो रसे सुगन्धे च तिक्तं पर्पटके स्मृतम्। तिक्ता तु कटुरोहिण्याम्, वि तिक्तं सुगन्ध्यपि, त्रि. तिक्तो रससुगन्धयोः। तिक्ता तु कटुरोहिण्या पर्पटे तु नपुंसकम्, मे. तिक्तस्तु सुरभौ रसे। तिक्ता तु कटुरोहिण्यां तिक्तं पर्पटकौषधे, हे. v. कषाय.

**तिक्तपर्वन्**—तिक्तपर्वा हिलमोचीगुडूचीयष्टिपु स्त्रियाम्, मे तिक्तपर्वा तु यष्ट्याह्वगुडूचीहिलमोचीपु, वि तिक्तपर्वा हिलमोचीगुडूचीमधुयष्टिपु, हे, हा

**तिक्तशाक**—तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे, मे तिक्तशाकस्तु पत्रसुन्दरे। वरुणे खदिरे, हे तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे, वि तिक्तशाक खदिरे वरुणद्रुमे, त्रि

**तित्तिरि**—तित्तिरि पक्षिणि मुनौ, हे तित्तिरिर्विहगे मुनौ, वि

**तिन्तिड**—तिन्तिडी डिम्बचिञ्चयो, मे अथ तिन्तिड। दैत्यभेदे तिन्तिडीके कालदासे महीरुहे। तिन्तिडी चुक्रे चिञ्चायाम्, हे तिन्तिडी भूरुहे कालदासे दैत्यान्तरेऽपि च। तिन्तिडस्तिन्तिडी तु स्यात चिञ्चावृक्षाम्लयोरपि, वि

**तिमिर**—तिमिर ध्वान्ते नेत्रामयान्तरे, मे तिमिर ध्वान्ते नेत्रामयेऽपि च, वि तिमिर तु दृष्टिरोगान्धकारयो हे ताम्रेऽन्धे तिमिर ध्वान्ते, त्रि

**तिरस्**—तिरोऽन्तर्धौ तिर्यगर्थे अ, मे, वि तिरोऽन्तर्धौ तिरश्चि च, हे

**तिर्यच्**—तिर्यक् तिरोऽर्थे वक्रे च विहङ्गादौ त्वनव्ययम् मे, वि तिर्यक् स्यात् तिरश्चीनवक्रयो, ह

**तिलक**—तिलको द्रुमरोगाश्वभेद च तिलकालके। क्लीव सौवर्चलक्लोम्नो र्न स्त्रियान्तु विशेपक मे तिलक चित्रक प्राहुर्ललामे तिलकालके। रोगविद्रुमभेदेषु क्लोम्नि सौवर्चलेऽपि च, वि तिलकोऽश्वद्रुमभिदो पुण्ड्रके तिलकालके। तिलक रुचके क्लोम्नि, हे तिलक चित्रके क्लोम्नि ना तरौ तिलकालके। तिलकोऽपि विशेपक, त्रि तिलको वृक्षभदश्च तिलक चित्रक विदु। तिलक क्लोमसज्ञा स्यात् प्रधान तिलक मतम् अने v मोक्ष

**तिलपर्ण**—तिलपर्णी तु सिह्लके। श्रीवासे चन्दने, हे तिलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च, मे, वि

**तिष्य**—तिष्यो नक्षत्रभेदे स्यात् कलौ धात्र्यान्च योपिति, मे तिष्य पुष्ये कलौ धात्र्या तिष्या पुष्यवदिष्यते, वि तिष्य पुष्यवत् कलौ भे तिष्या त्वामलकीतरौ, हे तिष्य पुष्ये कलियुगे, अ

**तीक्ष्ण**—तीक्ष्ण सामुद्रलवणे विपलोहाजिमुष्कके। क्लीव यवाग्रजे पुसि तिग्मात्मत्यागिनोस्त्रिपु, मे तीक्ष्ण सामुद्रलवणे विपलोहाजिमुष्कके। तीक्ष्ण क्षारे च तिग्मात्मत्यागिनोर्वाच्यवद् भवेत्, वि तीक्ष्ण सामुद्रलवणे विपायोमरवाजिपु। आत्मत्यागिनि निग्मे च, हे विपाभिमरलोहेपु तीक्ष्ण क्लीवे खरे त्रिपु, अ तीक्ष्ण तीव्र समाख्यात तीक्ष्ण लोहमुशन्ति च, अने

**तीक्ष्णगन्ध**—तीक्ष्णगन्धा वचाराजिकयोः शोभाञ्जने पुमान्, मे. तीक्ष्णगन्धा वचायां च शिग्रुराजिकयोरपि, वि. तीक्ष्णगन्धा वचौपधौ । शोभाञ्जने राजिकायाम्, हे.

**तीर**—तीरन्तु रोधसि । पुंसि त्रपुणि, मे तीरं तटे त्रपौ तीरम्, वि. तीरो वङ्गे तीर पुनस्तटे, हे.

**तीर्थ**—तीर्थ शास्त्राध्वरक्षेत्रोपायनारीरज.सु च । अवतारर्पिजुष्टाम्बुपात्रोपाध्यायमन्त्रिपु, मे. तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिपु । अवतारर्पिजुष्टाम्भ स्त्रीरज सु च विश्रुतम्, वि. तीर्थ शास्त्रे गुरौ यक्षे पुण्यक्षेत्रावतारयोः । ऋपिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि । योनौ पात्रे दर्शने च, हे. निपानागमयोस्तीर्थं ऋपिजुष्टे जलेऽपि च, अ तीर्थं तूपाययोगयो , त्रि योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेपु च, ह

**तीवर**—तीवरो नाम्बुधौ व्याधे, मे.

**तीव्र**—तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः । त्रिप्वत्युष्णे नितान्ते च कटौ, मे. तीव्रमत्युष्णकटुकनितान्तेप्वन्यवन्मतम् । तीव्रा च कटुरोहिण्यामासुरीगण्डदूर्वयोः. वि. तीव्रं कटूष्णात्यर्थेपु तीव्रा च कटुरोहिणी । गण्डदूर्वाऽसुरी, हे. तीव्र कटु नितान्तञ्च, त्रि.

**तु**—तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे नियोगे च प्रशसाया विनिग्रहे, मे. तु पादपूरणे भेदे समुच्चयेऽवधारणे, वि तु विशेपेऽवधारणे । समुच्चये पादपूतौ, हे. तु स्याद् भेदेऽवधारणे, ह.

**तुङ्ग**—तुङ्गी निशावर्बरयो पुन्नागनगयोः पुमान् । उन्नते त्रिपु, मे. तुङ्गः स्यादुन्नतेऽन्यवत् । वर्वरानिशयोस्तुङ्गी, वि. तुङ्गी प्रोक्ता हरिद्रायां वर्वरायामपीप्यते । तुङ्गः पुन्नागनगयोर्बुधे स्यादुन्नतेऽन्यवत्, हे तुङ्गौ पुन्नागसोच्छ्रयौ, त्रि.

**तुङ्गभद्र**—तुङ्गभद्रा नदीभेदे स्त्रियां पुंसि मदोत्कटे, मे. तुङ्गभद्रा नदीभेदे तुङ्गभद्रो मदोत्कटे, वि. तुङ्गभद्रो मदोत्कटे । तुङ्गभद्रा नदीभेदे, हे.

**तुङ्गीश**—तुङ्गीशस्तु पुमान् गौरीवल्लभे हिमदीधितौ, मे तुङ्गीशः शङ्करे चन्द्रे वि. तुङ्गीशः शशाङ्के शशिशेखरे, हे.

**तुण्डिकेरी**—तुण्डिकेरी तु कार्पास्यां विम्बिकायामपि स्त्रियाम्, मे. तुण्डीकेरी तु कार्पास्यां विम्बिकायामपीप्यते, वि तुण्डिकेरी तु कार्पासी विम्बिकापि च, हे

**तुत्थ**—तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयो. स्त्रियाम्, मे तुत्थोऽग्नावञ्जने तुत्था नीलिसूक्ष्मैलयोरपि, वि. तुत्थोऽग्नौ तुत्थमञ्जने । तुत्था नील्यां सूक्ष्मैलायाम्, हे.

तुमुल—तुमुल कलिवृक्षे ना क्लीवन्तु रणसङ्कुले, मे तुमुल कलिवृक्षे स्यात् तुमुल रणसङ्कुले, वि तुमुल रणसङ्कुले। तुमुलो विभीतकद्रौ, हे

तुम्बरी—तुम्बरी कुक्कुरस्त्रियाम्। धन्याकेऽपि, मे तुम्बरी सरमार्दयो, वि धन्याके तुम्बरी शुन्याम्, त्रि तुम्बरी धन्याक शुनी, हे

तुरग(ङ्ग)—तुरगी चाश्वगन्धाया तुरगश्चित्तवाजिनो, मे तुरगी त्वश्वगन्धाया तुरगो वाजिचित्तयो, हे तुरङ्गी चाश्वगन्धाया तुरङ्गश्चित्तवाजिनो, वि

तुरायण—तुरायण सम सङ्ग त्रियाहीनस्तुरायण, अने

तुरुष्क—तुरुष्क सिह्लके म्लेच्छजातौ देशान्तरेऽपि च, मे तुरुष्क सिह्लके म्लेच्छजातौ श्रीवासकेऽपि च वि अथ तुरुष्कस्तु देशे श्रीवाससिह्लयो, हे तुरुष्क सिह्लके देशे, त्रि

तुल—तुला सादृश्यमानयो। गृहाणा दारुबन्धाय पीठिकायामपीष्यते। राशौ पलशते भाण्डे मे तुला पलशते राशौ भाण्डे सादृश्यमानयो। गृहाणा दारुबन्धाय पीठिकायामपीष्यते, वि तुला माने पलशते सादृश्ये राशिभाण्डयो। गृहाणा दारुबन्धाय पीठ्याम्, हे तुलासादृश्ययोस्तुला त्रि

तुलाकोटि—तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेऽपि च, हे

तुलाधार—तुलाधारस्तुलाराशौ पुंसि वाणिजके त्रिषु मे तुलाधारस्तुलाराशौ भवेद् वाणिजकेऽपि च, वि तुलाधारस्तुलागुणे। वाणिजे, हे

तुवर—तुवरस्तु कषाये स्यात् काक्ष्याढक्योस्तुवर्यपि, मे

तुष—तुषा धान्यत्वगक्षद्रो, मे तुषो धान्यत्वचि ख्यातो विभीतकतरावपि, वि तुषस्तु धान्यत्वचि विभीतके हे

तुषार—तुषारस्तु शीकरे शीतले हिमे, मे तुषार शीकर हिमे, त्रि तुषार क्षुद्रपाषाणस्तुषार शीत उच्यते, अने तुषारा हिमदेशयो। शीकरे हिमभेदे, हे तुषारो हिमभेदे च शीकरेऽपि हिमेऽपि च त्रि

तूण—तूणी नील्या निषङ्गे ना, मे तूणी नील्या तूणो निषङ्गके, वि तूणी नीलीनिषङ्गयो, हे

तूल—तूल तुल्ये पिचौ। ब्रह्मदारुणि हे ब्रह्मदारौ पिचौ तूलम्, त्रि तूल पिचौ भवेत् तूल ब्रह्मदारुविहायसा, वि तूल स्याद् ब्रह्मदारुणि। आकाशस्य पिचौ न स्त्री, मे

तूलिका—तूलिका कूर्चिकायाञ्च शय्योपकरणेऽपि च, मे तूलिका वर्तिनाऽऽलेख्यकूर्चिकातूलशय्यया, वि तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी, हे

तूवर—तूवरोऽश्मश्रुपुंसि प्रौढाशृङ्गे वृषेऽपि च। पुंस्त्वव्यञ्जनयुक्ते स्यात्

कपायरसेऽपि च, मे तूवरोऽश्मश्रुपुरुषे प्रौढाशृङ्गानडुह्यपि, हे तूवरोऽश्मश्रुपुरुषे प्रौढाशृङ्गवृषेऽपि च, वि तूवरो निर्विषाणो गौ नि श्मश्रुस्तूवर पुमान्, अने

**तूस्त**—तूस्त रेणौ च विख्यात जटाया च नपुसकम्, मे

• **तृणगोधा**—तृणगोधा चित्रकोले कृकलासेऽपि योपिति, मे तृणगोधा चित्रकोले कृकलासे च लक्ष्यते, वि कृकलासे चित्रकोले तृणगोधाध्वनि विदु , हा

**तृणता**—तृणता धनुषि तृणत्वे, मे तृणताऽपि तृणत्वे स्यात् तृणता कार्मुकेऽपि च, वि चापे तृणत्वे तृणता, त्रि तृणता तृणत्वे कार्मुकेऽपि च, हे

**तृणशून्य**—तृणशून्य मल्लिकाया निपु स्यात् केतकीफले, मे तृणशून्य मल्लिकाया केतकीशाखिन फले, हे तृणशून्य मल्लिकाया केतक्याश्च फले मतम्, वि

**तृष्**—तृट् लिप्सायामुदन्याया स्मरपुत्र्यामपि स्त्रियाम्, मे तृट् तृष्णावत् तर्षवच्च भवेल्लिप्सापिपासयो , हे

**तृषा**—तृषा लिप्सातृषो स्त्रियाम्, मे

**तृष्णा**—तृष्णा स्यात् तर्पलिप्सयो , मे तृष्णा लिप्सापिपासयो , वि तृष्णे स्पृहापिपासे द्वे, अ पिपासालोभयोस्तृष्णा, अने v तृष्

**तेजन**—तेजन पुसि वशे स्यात् तेजनी पीलुपर्ण्यपि, मे

**तेजस्**—तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसो मे तेजो धाम्नि पराक्रमे । प्रभावरेतसोश्च, वि तेजस्त्विट्रेतसोर्बले । नवनीते प्रभावेऽग्नौ, हे तेज प्रभावे दीप्तौ च बले शुक्रेऽपि, अ

**तेमन**—तेमन त्वार्द्रीकरणे व्यञ्जनेऽपि च, मे तेमन व्यञ्जने क्लेदे तेमनी चुल्लिकान्तरे, वि तेमन व्यञ्जने क्लेदे तेमनी चुल्लिभिद्यपि, हे

**तेवन**—अथ तेवन केलिकानने । क्रीडायाम् मे

**तैतिल**—तैतिलो गण्डके पुसि क्लीवन्तु करणान्तरे, मे तैतिलो गण्डके प्रोक्तस्तैतिल करणान्तरे, वि तैतिल करणान्तरे । तैतिलो गण्डकपशौ, हे

**तोक**—तोक पुत्रे सुतायाञ्च, मे तोक सन्तानसुतयो , हे तोकमपत्य-पुत्रयोरपि, वि

**तोक्म**—तोक्म कर्णमले तोक्मो हरिते च हरिद्यवे, वि तोक्म कर्णमले तोक्म स्याद्धरितहरिद्यवे, हे तोक्म कर्णमले पुसि हरिते च हरिद्यवे, त्रि , मे

**तोत्र**—तोत्र वेणुके प्रतोदे, हे तोत्र तु प्रतने वेणुकेऽपि च, मे , वि तोत्रे प्रजन-वेणुके, त्रि

**तोदन**—तोदन व्ययने तोत्रे, मे , वि , हे

**तोयद**—तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्, मे. तोयदं तु घृते प्रोक्तं तोयदं मुस्तकाब्दयोः, वि.

**तोयधर**—अथ तोयधरो मुस्तासुनिषण्णौषधीघने, मे. भवेत् तोयधरो मेघे सुनिषण्णौषधेऽपि च, वि. तोयधरो जलधरे सुनिषण्णाख्यभेषजे, हे

**तैलपर्णी**—v. तिलपर्णी.

**त्याग**—त्यागो वर्जनदानयोः, वि., हे त्यागो दाने च वर्जने, मे. v. विसर्ग.

**त्यागिन्**—त्यागी दातरि शूरे, मे. शूरे दातरि च त्यागी, त्रि.

**त्रपा**—त्रपा लज्जाकुलटयोः, मे., वि , हे.

**त्रपु**—त्रपु सीसकरङ्गयो , हे , मे

**त्रयी**—त्रयी त्रिवेद्या त्रितये न ना, मे त्रयी त्रिवेद्या त्रितये पुरन्ध्र्या सुमतावपि, वि., हे. त्रिवेद्या त्रितये त्रयी, त्रि.

**त्राण**—त्राणा तु त्रायमाणाया रक्षणे रक्षिते त्रिपु, मे त्राणा तु त्रायमाणायां रक्षिते रक्षणेऽपि च, वि त्राण त्राते रक्षणे च त्रायमाणौपधावपि, हे. त्राणं रक्षित-रक्षयो , त्रि.

**त्रायमाण**—त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत्, मे.

**त्रास**—त्रासो भये मणेर्दोषे, मे त्रासो भीममणिदोषयो., वि. त्रासो भये मणिदोषे, हे मणिदोषे दरे त्रासः, त्रि मणिदोषेऽपि त्राग., ह

**त्रिक**—त्रिका कूपस्य नेमौ स्यात् त्रिक पृष्ठाधरे त्रये, मे , वि. त्रिका कूपस्य नेमौ स्यात् त्रिक पृष्ठाधरत्रये, हे प्राण्यङ्गे त्रितये त्रिकम् । कूपाङ्गे स्त्री, त्रि.

**त्रिकूट**—त्रिकूटं सिन्धुलवणे त्रिकूट. पर्वतान्तरे, मे. त्रिकूटं सिन्धुलवणे त्रिकूटस्तु सुवेलके, हे

**त्रिगर्त**—त्रिगर्तो गणितान्तरे । देशेऽपि ना घुर्घुरिकाकामुकाङ्गनयो. स्त्रियाम्, मे. त्रिगर्त. स्याज्जनपदे त्रिगर्तो गणितान्तरे । भवेद् घुर्घुरिकायान्तु त्रिगर्ता कामुकस्त्रियाम्, वि. त्रिगर्तो गणिते देशे त्रिगर्ता कामुकस्त्रियाम् । घुर्घुर्याम्, हे.

**त्रिदिव**—त्रिदिवा सरिदन्तरे । पुंसि स्वर्गे, मे. त्रिदिवस्त्रिदशावासे त्रिदिवा सरिदन्तरे, वि. त्रिदिव सुखे । स्वर्गे च त्रिदिवा नद्याम्, हे

**त्रिपुट**—त्रिपुटा मल्लिकायाञ्च सूक्ष्मैलात्रिवृतोः स्त्रियाम् । सतीनके च तीरे च त्रिपुटः समुदाहृतः, वि , मे त्रिपुटौ तीरसतीनौ त्रिपुटा त्रिवृदौषधौ । सूक्ष्मैलायां मल्लिकायाम्, हे.

**त्रिवर्ग**—त्रिवर्गो धर्मकामार्थे त्रिफलायां कटुत्रिके । वृद्धिस्थानक्षये सत्त्वरजस्तम-मसि चेष्यते, मे , वि.

**त्रिवर्णक**—त्रिवर्णकं गोक्षुरके त्रिफलाया कटुत्रिके, मे, वि त्रिवर्णकस्तु गोक्षुरेऽथ त्रिवर्णकम्। व्यूषणं त्रिफला, हे

**त्रिशङ्कु**—त्रिशङ्कुर्ना राजभेदे शलभे वृषदंशके, मे. त्रिशङ्कुः शलभे नृपे। मार्जारे, हे. त्रिशङ्कुः शलभे राजविशेषे वृषदंशके, वि.

**त्रिशिख**—त्रिशिखो राक्षसे क्लीवं त्रिशूले मण्डनान्तरे, मे. त्रिशिख शेखरे विद्यात् स्त्रिशिखो राक्षसान्तरे, वि. त्रिशिखो रक्षस्त्रिशिख स्यात् किरीटत्रिशूलयोः, हे. त्रिशिखं स्यात् त्रिशूलेऽपि, त्रि

**त्रिस्रोतस्**—त्रिस्रोता जह्नुकन्याया स्रोतस्वत्यन्तरे स्त्रियाम्, मे. त्रिस्रोता जह्नुकन्याया त्रिस्रोताः सरिदन्तरे, वि. त्रिस्रोता जाह्नवीसिन्धुभिदो:, हे.

**त्रुटि**—त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयो, मे. त्रुटि. संशयलेशयोः। सूक्ष्मैलाया कालमाने, हे स्यात् त्रुटिः संशये लेशे सूक्ष्मैलाकालमानयो., वि सूक्ष्मैलाया त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा, अ.

**त्रेता**—त्रेता युगेऽग्नित्रितये, मे., वि., हे. त्रेता त्वग्नित्रये युगे, अ हवनीयादिषु त्रिषु त्रेता, ह.

**त्रोटि**—त्रोटिः स्त्री कट्फले चञ्च्वा खगे मीनान्तरेऽपि च, मे. त्रोटिः स्यात् कट्फले चञ्च्वां खगमीनविशेषयोः, वि. त्रोटिश्चञ्च्वा खगान्तरे। मीनकट्फलयो., हे.

**त्र्यङ्गट**—त्र्यङ्गटं शिक्यभेदेऽपि धौताञ्जन्याञ्च न द्वयो, मे त्र्यङ्गटो धौताञ्जन्या शिक्यभिदीश्वरे, हे. त्र्यङ्गटं शिक्यभेदेऽपि धौताञ्जन्यामपि स्मृतम्, वि

**त्र्यम्बक**—त्र्यम्बकस्ताम्रधातुः स्यात् त्र्यम्बकश्च महेश्वर, अने.

**त्वक्पत्र**—त्वक्पत्रं तु वराङ्गके। स्त्री कारव्यां च, मे. त्वक्पत्र तु वराङ्गके। त्वक्पत्रीति च कारव्याम्, वि.

**त्वच्**—त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः, मे. त्वक् चर्मवल्कयो-स्त्वचे, वि. त्वक् वल्कले चर्मणि च, हे. त्वक् स्त्री चर्मगुडत्वचो., त्रि.

**त्वष्टृ**—त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि, मे. त्वष्टा शिल्पिनि देवाना तथा वर्धकिसूर्ययोः, वि. देवशिल्पिन्यपि त्वष्टा, अ.

**त्विष्**—त्विट्कान्तौ वाचि रुचौ स्त्रियाम्, मे. त्विट्कान्तौ व्यवसाये च जिगीषाया रुचौ गिरि, वि. त्विट् शोभाया जिगीषाया व्यवसाये रुचौ गिरि, हे. त्विट् शोभाऽपि, अ.

**थ**—थं रक्षणे मङ्गले च साध्वसे च नपुंसकम्। शिलोच्चये पुमानेव क्वचित्तु

भयरक्षकें, मे　दण्डीशो वरद कृष्णो वामजानुगत स्मर । शौरिश्चापि विशालाक्ष थकार परिकीर्तित　मा

**द**—द पुमानचले दत्ते स्त्रिया शोधनदानयो । छेदोपतापरक्षासु पुमास्तु दातरि स्मृत , मे सत्योऽत्रीशो ह्लादिनी च वामगुल्फगतस्तथा । शूली कुवेरो दाता च दकारो धादिम स्मृत , मा

**दश**—दश कीटविशेषश्च वर्मदशनयो पुमान्, मे दश स्यात् खण्डने दोषे दशो मर्मणि कीर्तित । सर्पक्षतेऽपि सन्नाहवनमक्षिकयोरपि, वि दशो वर्मणि मर्मणि । दोषे वनमक्षिकाया खण्डने भुजगक्षते, हे　दश सहननेऽपि च । सर्पक्षते, नि

**दशन**—दशन दशवर्मणो , मे , वि दशन वर्मदशयो , हे

**दशित**—दशितमपि जातदशेऽपि स्यात् । कवचाचिते, मे दशितस्तु दष्ट-वर्मितयोरपि　वि　दशितो वर्मिते दष्टे, हे

**दक्ष**—दक्षस्त्रिपु पटौ पुसि ताम्रचूडे प्रजापतौ । मुनिभेदे हरवृषे द्रुमभेदे स्त्रिया भुवि म　दक्ष पटौ हरवृषे ताम्रचूडे प्रजापतौ । मुनिभेदे द्रुगे वह्नौ दक्षो दक्षा भुवि स्मृता वि　दक्ष प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्याम्, हे　दक्ष प्रजापतौ ताम्रचूडे हरवृषे पटौ　त्रि　मुनिकुक्कुटयोर्दक्ष , ह

**दक्षिण**—दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिपु यज्ञादिविधि-दाने दिशि स्त्रियाम् मे　दक्षिण　सरलावामपरच्छन्दानुवर्तिषु । वाच्यवद् दक्षिणाऽ-वाची यज्ञदानप्रतिष्ठयो　वि　दक्षिणस्तु परच्छन्दानुवर्तिनि । दक्षेऽपसव्ये सरलेऽ पाचीनेऽप्यथ दक्षिणा । दिक् प्रतिष्ठा यज्ञदानम् हे　दक्षिणा दिशि दाने च दक्षिण सरलेऽपि च　त्रि

**दग्ध**—दग्ध प्लुष्टेऽन्यलिङ्ग स्यात् स्थितार्कदिशि च स्त्रियाम　मे　दग्ध प्लुष्टेऽन्यवद्दग्धा स्थितार्कदिशि दर्शिता, वि

**दण्ड**—दण्डोऽस्त्री लगुडे पुमान् । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । सैन्ये कालमानभेदे चण्डाशो पारिपार्श्विके । दमे यमेऽभिमाने च, मे　दण्डो यमे मानभेदे लगुडे दमसैन्ययो । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि । अभिमाने ग्रहे दण्डश्चण्डाशो पारिपार्श्विके, वि　दण्ड सैन्ये दमे यमे । मानव्यूहग्रहभेदेष्व-श्वेऽर्कानुचरे मथि । प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयो , हे　दण्डोऽस्त्री लगुडेऽपि स्यात श्र　दण्डौ सैन्यार्कपार्श्वगौ, त्रि　दण्डो दमने सैन्ये, ट्

**दण्डधार**—दण्डधार पुमान् पृथ्वीनाथे प्रेताधिपेऽपि च, मे दण्डधारो यमे भूपे, वि दण्डधारो यमे राज्ञि, हे

**दण्डयात्रा**—दण्डयात्रा दिग्विजये सयानवरयात्रयो , मे , वि दण्डयात्रा तु दिग्जये । सयाने वरयात्रायाम्, हे दिग्जये वरयात्राया दण्डयात्रा विदुर्बुधा , हा

**दण्डयाम**—दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे, वि , मे दण्डयामस्तु दिवसे कुम्भजे यमे, हे.

**दण्डार**—दण्डारो वहने मत्तवारणे शरयन्त्रके । कुम्भकारस्य चक्रे च, मे , हे दण्डार शरयन्त्रके । कुलालचक्रे वहने दण्डारो मत्तवारणे, वि कुलालचक्रे वहने दण्डार शरयन्त्रके, हा

**दण्डिन्**—दण्डी यमे द्वा स्थसदण्डयो , हे

**दत्त**—दत्त विश्राणितेऽविते, वि दत्त विश्राणितेऽर्च्चिते, मे विसृष्टे रक्षिते दत्तम्, नि

**दधि**—दधि गोरसभेदे स्यात् तथा श्रीवासवासयो , हे दधि क्षीरोत्तरावस्थाभावे श्रीवासवासयो , वि , मे

**दन्त**—दन्तोऽद्रिकटके कुञ्जे दशनेऽथौपधौ स्त्रियाम्, मे दन्तो दशनसानुनो । दन्त्यौपध्याम्, हे दन्तो निकुञ्जे दशने दन्त सानुनि कथ्यते । दन्ती स्यादौपधीभेदे वि दशने शैलशृङ्गे च दन्त स्यादौपधौ स्त्रियाम्, नि

**दन्तधावन**—दन्तधावन खदिरे दन्तशुद्धौ नपुसकम्, मे

**दन्तशठ**—स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके । नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यञ्च योपिति, मे दन्तशठ स्याज्जम्बीरे कपित्थे कर्मरङ्गके । नागरङ्गेऽपि चाङ्गेर्या स्मृता दन्तशठा बुधै , वि दन्तशठ पुन । जम्बीरे नागरङ्गे च कर्मरङ्गकपित्थयो , हे अम्ललोण्या दन्तशठा ना जम्बीरकपित्थयो , नि

**दन्तुर**—दन्तुरस्तून्नतरदे तथोन्नतनते त्रिपु, मे दन्तुर वाच्यवद्विद्यात् विपमोन्नतदन्तयो , वि दन्तुर उन्नतदन्ते विपमे, हे

**दन्दशूक**—दन्दशूकस्तु पुलिङ्गो राक्षसे च सरीसृपे, मे दन्दशूकोऽहिरक्षसो , वि दन्दशूकस्तु फणिरक्षसो , हे

**दम**—दमस्तु दमथे दण्डे कर्दमे दमने पुमान्, मे दम स्याद् दमथे दण्डे कर्दमे दमनेऽपि च, वि दम स्यात् कर्दमे दण्डे दमने दमथेऽपि च, हे दमो दमथुदण्डयो , त्रि

**दमथ**—दमथस्तु पुमान् दण्डे दमे च परिकीर्तित , मे दमथो दमदण्डयो , वि दमथो दमके दण्डे, हे

**दमन**—दमन पुष्पधीरयो , मे दमन कुसुमे धीरे, वि दमनो वीरपुष्पयो , हे

**दम्भ**—दम्भस्तु कैतवे कल्के, मे , वि दम्भ कल्के कैतवे च, हे दम्भ कैतवकल्कयो , त्रि

**दया**—दया हिंसानुकम्पयो , ग्रने

**दर**—दरोऽस्त्री साध्वसे गर्ते कन्दरे तु दरी स्मृता। दराऽव्यय मनागर्थे, मे दर साध्वसगर्तयो । कन्दरे तु दरीमाहुरीपदर्थे दराव्ययम्, वि दर स्यात् भयगर्तयो । दरी तु कन्दरे, हे दरोऽस्त्रिया भये श्वभ्रे, ग्र दर छिद्र दरो भयम्, ग्रने

**दरद्**—दरत् स्त्रिया प्रपातेऽपि भयपर्वतयोरपि, मे दरत् प्रपाताद्रिभये, वि

**दर्दर**—दर्दर पर्वते पुसि त्रिष्वीषद्भङ्गभाजने, मे दर्दरस्तु गिरावीपद्-भग्नवस्तुनि वाच्यवत्, वि दर्दर स्यादीपद्भग्ने गिरावपि, हे दर्दर शैलभुग्नयो , त्रि

**दर्दुर**—दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयो । दर्दुरा चण्डिकाया स्याद् ग्रामजाले नपुसकम् मे दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयो । दर्दुरा चण्डिकायाञ्च ग्रामजाले तु दर्दुरम्, वि दर्दुरो भेकमेघयो । वाद्यभेदे शैलभेदे दर्दुर ग्रामजालके। दर्दुरोमा, हे वाद्यमेघौ च दर्दुरौ, त्रि

**दर्प**—दर्प कस्तूर्यामप्यहङ्कृतौ, मे दर्पोऽहङ्कारकस्तूर्यो , वि दर्पो मृगमदे गर्वे, हे

**दर्भ**—दर्भ ग्रन्थे कुशेऽपि, च, हे

**दर्वी(र्वी)**— दर्वी स्त्रिया खजाकाया फणायामुरगस्य च, मे दर्वी भवेत् खजाकाया फणायामुरगस्य च, वि दर्वी फणातर्द्वो , हे

**दर्श**—दर्शस्तु सङ्गमे सूर्यचन्द्रयोरवलोकने। पक्षान्ते वैदिकविधौ दर्शश्च समुदाहृत , वि दर्श सूर्येन्दुसङ्गमे। पक्षान्तेऽन्यौ दर्शने च, हे दर्शस्तु स्यादमावस्या यागभेदावलोकने, मे

**दर्शक**—दर्शक स्यात् प्रतीहारे दर्शयितृप्रवीणयो , मे , त्रि दर्शको दर्शयितरि प्रतीहारप्रवीणयो , हे

**दर्शन**—दर्शन नयनस्वप्नबुद्धिधर्मोपलब्धिषु । शास्त्रदर्पणयोश्च, मे , वि दर्शन दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयो । स्वप्नलोचनयोश्चापि, हे दर्शन वर्णमुकुरचक्षु -शास्त्रोपलब्धिषु, त्रि

**दल**—दलमुत्सेधशस्त्रखण्डयो । शस्त्रीच्छदेऽन्यवद्द्रव्ये पत्रेऽपि, मे दल शस्त्रीच्छ-दोत्सेधावद्रव्ये खण्डपर्णयो , वि दल शस्त्रीच्छदेऽर्द्धपर्णयो । उत्सेधावस्तुनि च, हे

**दलाढक**—दलाढकः स्वयंजाततिले पृश्न्याञ्च गैरिके। फेनखातकयोर्नागकेशरे च महत्तरे, मे. दलाढकस्तु कुन्दे स्यात् करिकर्णशिरीषयोः। स्वयंजाततिले फेने खातके नागकेसरे। वात्यायां पृश्निकायाञ्च गैरिके च महत्तरे, वि. दलाढकोऽरण्यतिले गैरिके नागकेसरे। कुन्दे महत्तरे फेने करिकर्णशिरीषयोः। वात्याया खातके पृश्न्याम्, हे. पृश्न्या कुन्दे दलाढकः, त्रि.

**दलामल**—दलामलं मरुवके दमनेऽपि नपुंसकम्, मे. दलामलं दमनके तथा मरुवकेऽपि च, वि. दलामलं पुनर्दमनके मरुवकेऽपि च, हे

**दव**—दवदावौ तु वनवह्नौ वनेऽप्युभौ, मे. दवो दाव इति ख्यात. वनाग्निवनयोरपि, वि. दवदावौ वनानले। वने, हे. दवदावौ वनारण्यवह्नौ, अ. वनारण्यानलौ दावौ, अने. काननेऽपि दवदावौ, ह.

**दशन**—दशनः शिखरे दन्ते कवचे तु नपुंसकम्, मे. दशनः कवचे दन्ते दशनः शिखरेऽपि च, वि.

**दशनोच्छिष्ट**—दशनोच्छिष्टः पुंसि स्यान्निश्वासेऽधरचुम्बयोः, मे. अथ स्याद्दशनोच्छिष्टो निश्वासेऽधरचुम्बयो', वि. दशनोच्छिष्टो नि.श्वासे चुम्बने दन्तवाससि, हे. निश्वासो दशनोच्छिष्टः चुम्बे दन्तच्छदेऽपि च, त्रि.

**दशपुर**—विदुर्दशपुरं देशे मुस्तायां पत्तनेऽपि च, वि दशपुरं पत्तने स्यान्मुस्ताया नीवृदन्तरे, हे. अथो दशपुरं देशे पुरेऽपि स्यान्नपुंसकम्, वि.

**दशमीस्थ**—दशमीस्थो नष्टवीर्ये स्थविरेऽप्यन्यलिङ्गकः, मे. दशमीस्थं नष्टबीजे स्थविरेऽपि प्रचक्षते, वि दशमीस्थ स्थविरे स्यात् क्षीणरागे मृताशने, हे दशमीस्थौ क्षीणरागवृद्धौ, अ.

**दशा**—दशाऽवस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति, मे. दशा वर्तावस्थाया वस्त्रांशे स्युर्दशा अपि, वि. दशा वर्ताववस्थाया दशास्तु वसनाञ्चले, हे दशाऽवस्थानेकविधाऽपि, अ कर्मविपाकेऽपि दशा गतिः स्मृता, ह.

**दस्म**—दस्मस्तु यजमाने स्याद् अपि चौरे हुताशने, मे., वि. दस्मस्तु हव्यवाहे स्याद् यजमाने मलिम्लुचे, हे.

**दस्यु**—दस्युश्चौरे पुंसि रिपौ, मे. दस्युः स्तेने च शत्रौ च, वि. दस्युः प्रत्यर्थिचौरयोः, हे. दस्यू तस्करवैरिणौ, त्रि.

**दस्र**—दस्रः खरेऽश्विनीसुते, मे. दस्रः खरो दस्रौ रवेः सुतौ, हे. दस्रः खरे चाश्विनयोः, वि.

**दहन**—दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते, मे. दहनश्चित्रके वह्नौ भल्लाते दुष्टचेष्टिते, वि. दहनो दुष्टचेष्टिते। भल्लाते चित्रकेऽग्नौ च, हे.

**दहर**—दहरो मूषिकायाञ्च स्वल्पे भ्रातरि बालके, मे , वि दहरो मूषिका-स्वल्पभ्रात्रोर्डिम्बे च, हे

**दाक्षायणी**—दाक्षायणी त्वपर्णायामश्विन्याद्युडुषु स्त्रियाम्, मे दाक्षायणी-त्यपर्णाया रोहिण्या तारकासु च, वि दाक्षायण्युमायाञ्च भेषु च। रोहिण्याञ्च, हे

**दाक्षिणात्य**—दाक्षिणात्यो नारिकेरे त्रिषु दक्षिणदिग्भवे, मे

**दाडिम**—दाडिमस्तु त्रिलिङ्ग स्यादेलाया करके त्रिषु, मे दाडिम कर-कैलयो , वि , हे

**दाढा**—दाढा दंष्ट्राभिलापयो , वि , हे

**दात्यूह**—दात्यूहस्तु पुमान् कालकण्ठचातकपक्षिणो , मे दात्यूह कालकण्ठे स्याद्दात्यूहश्चातकेऽपि च, वि दात्यूह कालकण्ठके। चातकेऽपि, हे दात्यूह-श्चातकेऽपि च, त्रि

**दान**—दान गजमदे त्यागे पालनच्छेदशुद्धिषु, मे, वि दान मतङ्गजमदे रक्षणच्छेदशुद्धिषु। विश्राणनेऽपि, हे दान गजमदे त्यागे खण्डने रक्षणेऽपि च, त्रि

**दानु**—दानुर्दातरि विक्रान्ते, मे , वि

**दान्त**—दान्तस्तु दमितेऽपि स्यात्तप क्लेशसहे त्रिषु, मे

**दाय**—दाय सोत्प्रुण्ठभाषणे। विभक्तव्यपितृद्रव्ये तथा हरणदानयो , मे दायो दाने यौतुकादिधने सोल्लुण्ठभाषणे। विभक्तव्यपितृद्रव्ये दायमाहुर्मनीषिण , वि दायो दाने यौतुकादिधने सोल्लुण्ठभाषणे। विभक्तव्यपितृद्रव्ये, हे दाने विशेषलब्धौ दायो भागार्हपितृरिक्थे च, ह

**दायाद**—दायादस्तु भवेत् पुंसि सपिण्डे तनयेऽपि च, मे दायादो ज्ञातिपुत्रयो , वि दायादौ सुतसपिण्डौ, हे दायादौ सुतबान्धवौ अ दायादौ बान्धव प्रोक्तौ दायादस्तनयो मत , अने दायादस्तुक्सपिण्डयो , ह

**दारक**—दारको बालकेऽपि स्याद् भेदके त्वभिधेयवत्, मे दारको भेदकेऽ-पत्ये, वि दारको भेदके पुत्रे, हे

**दारद**—दारदो विषभेदे स्यात् पारदे हिङ्गुले पुमान्, मे दारदो विषभेदे स्याद्धिङ्गुले पारदेऽपि च, वि दारदो विषभेदे स्यात् पारदे हिङ्गुलेऽपि च, हे

**दारु**—दारु स्यात् पित्तले काष्ठे देवदारौ नपुंसकम्, मे दारु स्याद्देवदारु च, त्रि दारु काष्ठ निगद्यते, अने

**दारुण**—दारुणो रसभेदे ना त्रिषु तु स्याद् भयावहे, मे

**दार्वी (र्वी)**—दार्वी दारुहरिद्राया तथा गोजिह्विकौषधौ, मे दार्वी दारु-हरिद्राया देवदारुहरिद्रयो , वि दार्वी स्याद्देवदारुणि। हरिद्राद्वितये चापि, हे

**दाव**—v दव

**दास**—दासी बाणाभुजिष्ययो । दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे, मे दास शूद्रे दानपात्रे भृत्यधीवरयोरपि । दासी चेट्या च भिण्टया च, वि दासो धीवरभृत्ययो । वृषले दानपात्रे च दासी भिण्टयपि चेटयपि, हे दासो वित्तार्थ-चेटयो । भिण्ट्याञ्च दासी, त्रि

**दासेर**—दासेरो दासिकापत्ये त्रिपु पुसि क्रमेलके मे दासेरो दासिकापुत्रे दासेर स्यात् क्रमेलके, वि दासेर उष्ट्रे चेटे च, हे दासीसुतोष्ट्रौ दासेरौ, त्रि

**दासेरक**—दासेरकस्तु करभे दासीपुत्रे च धीवरे, मे दासेरक स्यात् करभे दासीपुत्रे च धीवरे, वि उष्ट्रे दासीसुते चैव दासेरक इति स्मृत , हा

**दिगम्बर**—दिगम्बर स्यात् क्षपणे नग्ने तमसि शङ्करे, मे , वि दिगम्बरस्तु शङ्करे । अन्धकारे क्षपणके स्याद्वस्त्ररहितेऽपि च हे दिगम्बरोऽन्धकारे च, त्रि

**दिग्ध**—दिग्धो विषाक्तबाणे स्यात् पुसि लिप्तेऽन्यलिङ्गक , मे दिग्ध विषाक्त-बाणे स्याद् दिग्धो लिप्तार्थकेऽन्यवत्, वि दिग्धो लिप्ते विषाक्तेषौ प्रवृद्धस्नेहयोरपि, हे दिग्ध लिप्ते विषाक्ते च, त्रि

**दिति**—दितिर्दैत्यजनन्याञ्च खण्डनेऽपि च योषिति, मे दितिर्दैत्यमातरि खण्डने, हे दिति स्यात् खण्डनेऽपि च, वि दितौ खण्डनदैत्याम्बे, त्रि

**दिव्**—द्यौ स्वर्गे च गगने, मे द्यौ स्वर्गनभसो , हे

**दिव**—दिव स्वर्गेऽन्तरीक्षे च, वि दिव खे त्रिदिवे वने, हे दिव क्लीव तयो स्मृतम्, मे v दिव्

**दिवाभीत**—दिवाभीत कुम्भिले स्यादुलूके कुमुदाकरे, मे , वि दिवाभीत काकरिपौ कुम्भिले कुमुदाकरे, हे दिवाभीत उलूके स्यात् कुम्भिले कुमुदाकरे, त्रि

**दिवौ(द्यो)कस्**—दिवोकाश्च दिवौकाश्च पुसि देवे च चातके, मे दिवौका-श्चातके सुरे, वि दिवौकसौ । चातकस्त्रिदशश्चापि, हे सारङ्गाश्च दिवौकस , अ

**दिव्य**—दिव्य लवङ्गे धात्र्या स्त्री वलौ दिविभवे त्रिपु, मे दिव्य लवङ्गके दिव्य वलौ दिविभवेऽन्यवत् । आमलक्या स्मृता दिव्या, वि दिव्य वल्गुलवङ्गयो । द्युभवे दिव्याऽमलक्याम्, हे

**दिव्यचक्षुस्**—दिव्यचक्षु सुगन्धस्य भेदे नाऽन्धे सुलोचने, मे दिव्यचक्षु सुगन्धस्य भेदेऽन्धे च सुलोचने, वि दिव्यचक्षुस्त्वन्धे सुलोचने । सुगन्धभेदे, हे

**दिष्ट**—दिष्ट दैवे पुमान् काले, मे दिष्ट दैवे दिष्टस्त्वनेहसि, हे दिष्ट दैवे च काले स्याद्दिष्ट , वि दिष्ट दैवेऽपि न द्वयो , अ दिष्ट कालोपदिष्टयो , त्रि दिष्ट दैवेऽपि कीर्तितम्, हा

**दिष्टि**—दिष्टिर्मुत्परिमाणयो । स्त्रियाम्, मे दिष्टिरानन्दे माने च, हे दिष्टि परीमाणमुदो, वि परिमाणमुदोर्दिष्टि, नि

**दिष्ट्या**—दिष्ट्या हर्षे मङ्गले च, मे

**दीदिवि**—दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम्, मे दीदिविर्धिषणान्नयो, वि

**दीन**—दीना स्त्री मूषिकस्त्रियाम् । वाच्यवद्दुर्गते भीते, मे दीना मूषिकयोषाया दुर्गते कातरेऽन्यवत्, वि मूषिकाऽपि भवेद् दीना, हा

**दीप**—दीप प्रदीपोत्तरीये लताया लोचमस्तके मे

**दीपक**—दीपक वागलङ्कारे वाच्यवद्दीप्तिकारके, मे दीपक वागलङ्कारे दीपको दीप्तिकारके, वि दीपक स्यादलङ्कृति । दीपकौ दीप्तिकृद्दीपौ, हे

**दीप्त**—दीप्त निर्भासिते दग्धे ज्वलिते, मे दीप्त निर्भासिते दग्धे, हे दीप्त निर्भसिते दग्धे वदन्ति ज्वलितेऽपि च, वि

**दीप्यक**—दीप्यकश्चाजमोदाया यवानीबर्हिचूडयो, मे दीप्यकश्चाजमोदे स्याद् यवानीबर्हिचूडयो, वि दीप्यक त्वजमोदके । मयूरशिखायवान्यो, हे यवान्यामपि दीप्यक, श्र

**दीर्घाध्वग**—दीर्घाध्वग पुमानुष्ट्रे लेख्यहारे तु भेद्यवत्, मे दीर्घाध्वग शृङ्खलके लेखकारे तु भेद्यवत्, वि दीर्घाध्वग क्रमेलके । लेखहारे मल्लनागे वात्स्यायनसुरेभयो हे दीर्घाध्वग स्यादुष्ट्रेऽपि, त्रि

**दीर्घायुस्**—दीर्घायु शाल्मलीवृक्षे वायसे जीवकद्रुमे । मार्कण्डेये च पुंसि स्याच्चिरजीविनि वाच्यवत्, मे दीर्घायुर्नृपि काकश्च शाल्मलि, त्रि दीर्घायु शाल्मलौ काके मार्कण्डेयेऽतिजीविनि, वि दीर्घायुर्जीवके द्विके । मार्कण्डेये शाल्मलितरौ हे

**दीर्ण**—दीर्ण विदारिते भीते, मे दीर्ण दारितभीतयो, वि

**दु स्पर्श**—दु स्पर्शो धन्वयासे ना कण्टकार्यां स्त्रिया त्रिपु । खरस्पर्शे, मे दु स्पर्शाख्या खरस्पर्शे कण्टकार्यां च यासके, वि

**दु स्थ**—दु स्थ स्याद्दुर्गते मूर्खे दु खेन तिष्ठति त्रिपु, मे दु स्थ स्याद्दुर्गते मूर्खे, वि दु स्थो दुर्गतमूर्खयो, हे

**दुकूल**—दुकूल श्लक्ष्णवस्त्रे स्यात् क्षौमे, मे दुकूल तु क्षौमे सूक्ष्मांशुकेऽपि च, वि दुकूल सूक्ष्मवाससि । क्षौमवस्त्रे, हे दुकूल श्लक्ष्णवस्त्रेऽपि च, त्रि

**दुग्ध**—दुग्ध प्रपूरिते क्षीरे दुग्धी क्षीराविकौपधौ, मे दुग्ध प्रपूरिते क्षीरे, वि दुग्ध क्षीरे पूरिते च, हे दुग्ध क्षीरे प्रपूरिते, त्रि

**दुग्धतालीय**—दुग्धतालीयमित्येतद् दुग्धाम्रक्षीरफेनयो , मे दुग्धतालीय-मित्येतद् दुग्धाम्रे दुग्धफेनके, वि दुग्धतालीय दुग्धाम्रदुग्धफेनयो , हे

**दुन्दुभि**—दुन्दुभि पुमान् । वरुणे दैत्यभेर्योश्च स्त्र्यक्षबिन्दुत्रिकद्वये, मे दुन्दुभिर्दितिजे भेर्यामक्षबिन्दुत्रिकद्वये, वि दुन्दुभिस्तु भेर्या दितिसुते विषे। अक्षबिन्दुत्रिकद्वन्द्वे, हे स्याद् भेर्या दुन्दुभि पुसि स्यादक्षे दुन्दुभि स्त्रियाम्, अ दुन्दुभिर्दैत्यभेदेऽपि, त्रि द्वन्द्वे दुन्दुभिरक्षे तु दुन्दुभि स्यात्तथानक , अने

**दुर्**—दुर्निषेधे च दुष्टे च, मे दु स्यात् कष्टनिषेधयो , वि

**दुरोदर**—दुरोदर द्यूतभेदे द्यूतकृत्पणयो पुमान्, मे दुरोदर पुनर्द्यूते द्यूतकारे पणेऽपि च, हे दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्, अ पणेऽक्षे कितवे द्यूते दुरोदर इति स्मृत , अने

**दुर्गति**—दुर्गतिर्नरके नै स्वे स्त्री, मे दुर्गतिर्नरके नै स्वे, वि , त्रि दुर्गति । नरके नि स्वतायाञ्च, हे

**दुर्ग**—दुर्गो मानील्यो स्त्री दुर्गमे त्रिपु, मे दुर्ग भवद् दुर्गमे तु दुर्गा स्यान्नीलिकोमयो , हे. दुर्ग स्याद् दुर्गमे दुर्गा गौरीनीलिकयोरपि, वि

**दुर्जात**—दुर्जात व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्, मे दुर्जात व्यसने प्रोक्तमसम्यग्जातवस्तुनि, वि दुर्जात व्यसनासम्यग्जातयो , हे दुर्जात व्यसनेऽपि च, त्रि

**दुर्द्धर**—दुर्द्धर पुसि नरकान्तरे स्यादृषभौषधौ, मे दुर्द्धर वाच्यवद् दु ख-धार्ये स्यादृषभौषधे । दुर्द्धर , वि दुर्द्धरस्त्वृषभौषधौ । दु खधार्ये, हे

**दुर्नामन्**—दुर्नामाऽख्यातिर्गुदजदीर्घकोशिकयोरपि, वि दुर्नाम क्लीव-मर्शसि । स्याद्दीर्घकोशिकाया स्त्री, मे दुर्नाम पुनरर्शसि । दुर्नामा दीर्घकोशी स्यात्, हे

**दुर्मुख**—दुर्मुख कपिभिन्नागभिदोर्ना मुखरे त्रिपु, मे. दुर्मुखो नागराजेऽपि मुखरे वानराश्वयो , वि दुर्मुखो मुखरे नागराजे वाजिनि वानरे, हे सर्पेऽपि दुर्मुख , त्रि

**दुर्लभ**—दुर्लभस्त्रिपु दुष्प्राप्ये कच्छुरे, मे दुर्लभ. कच्छुरे ज्ञेयो दुष्प्रापे वल्लभेऽपि च, वि दुर्लभ कच्छुरे प्रिये । दुष्प्रापे, हे दुर्लभ कच्छुरे काम्ये, त्रि

**दुर्वर्ण**—दुर्वर्णं त्रिप्वसद्वर्णे क्लीबमेलेयरूप्ययो , मे दुर्वर्णञ्च कुवर्णे स्या-द्वालुके रजतेऽपि च, वि दुर्वर्णं कलधौतकुवर्णयो , हे दुर्वर्ण रजतेऽपि स्यात्, त्रि

**दुर्विध**—दुर्विधो वाच्यलिङ्ग स्याद् दुर्गतेऽपि खलेऽपि च, मे दुर्विधो दुर्गते खले, वि दुर्विधो दुर्जने नि स्वे, हे दुर्विधौ खलदुर्गतौ, त्रि

**दुलि**—दुलि स्त्रिया कमठ्या ना मुनौ, मे ४ डुलि

**दुष्कक**—दुष्कको गन्धकुट्या स्याद् विहाराद्यवकाशके, मे, वि

**दुष्ठु**—दुष्ठु स्याद् दुर्बलेऽधमे, वि

**दूत्य**—दूत्य दूतस्वभावे च भावे कर्मण्यपि स्मृतम्, मे

**दूपिका**—दूपिका तूलिकायाञ्च मले स्याल्लोचनस्य च, मे दूपिका तूलिका स्मृता। नयनस्य मलेऽपि स्यात्, हे

**दूष्य**—दूष्य त्रिषु दूषणीये क्लीव वस्त्रे च तद्गृहे, मे दूष्यन्तु दूषणीये स्याद् दूष्य वस्त्रे च तद्गृहे वि दूष्य वाससि तद्गृहे। दूपणीये, हे निन्द्ये वस्त्रगृहे दूष्यम् त्रि

**दृग्भू**—दृग्भू स्त्री सर्पवज्रयो मे दृग्भू पन्नगवज्रयो, वि दृग्भू पवी भास्करे च, हे

**दृढ**—दृढ स्थूले नितान्त च प्रगाढे बलवत्यपि मे दृढ स्थूले भृशे शक्ते प्रगाढेऽपि दृढो मत वि दृढ शक्ते भृशे स्थूल शक्तस्थूलौ त्रिषु दृढौ, अ

**दृति**—दृतिश्चर्मपुटे मत्स्ये ना म दृतिश्चर्मपुटे झषे, वि

**दृश्**—दृक् स्त्रिया दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके, मे दृग्दर्शने लोचने च दृग् बुद्धौ वीक्षकेऽपि च वि दृग्द्रष्टरि दर्शनेऽध्यक्षे हे दृग्ज्ञाने ज्ञातरि त्रिपु, अ ज्ञान च लोचने दर्शने च दृक त्रि

**दृशान**—दृशान ज्योतिषि प्रोक्त दृशानश्च विरोचने, वि दृशान ज्योतिपि क्लीव पुलिङ्ग स्याद्विरोचने मे

**दृषद्**—दृपन्निष्पेपणशिलापट्टप्रस्तरयोरपि मे दृपद् पेपणपट्टे स्याद् दृपद् पाषाणमात्रके वि दृपद् पाषाणमात्रके। निष्पेपणार्थपट्टे स्यात्, हे

**दृषद्वती**—दृषद्वती नदीभेदे कात्यायन्यामपि स्त्रियाम्, मे

**दृष्टान्त**—दृष्टान्त उदाहृतौ। शास्त्रे च मरणे, मे दृष्टान्त स्यादुदाहृतौ। शास्त्रे, हे दृष्टान्तावुभौ शास्त्रनिदर्शने, अ

**दृष्टि**—दृष्टि स्त्रिया बुद्धौ लोचने दर्शनेऽपि च, मे दृष्टिर्ज्ञानेऽक्षिण दर्शने, हे दृष्टिर्धीदर्शनाक्षिपु वि दृष्टिरक्षिण तथा मतौ, अने

**देव**—देवो मेघे सुरे राज्ञि स्यात्पुसकमिन्द्रिये। देवी कृताभिषेकाया तेजनी-स्पृक्कयोरपि, मे देव सुरे घने राज्ञि देवमाख्यातमिन्द्रिये। देवी भट्टारिकायाञ्च तेजनीस्पृक्कयोरपि, वि देव हृषीके देवस्तु नृपतौ तोयदे सुरे। देवी कृताभिषेकाया तेजनीस्पृक्कयोरपि, हे मेघे राज्ञि सुरे देव, त्रि पर्जन्ये राज्ञि गीर्वाणे व्यवहर्तरि। मूर्खे बले जिगीषौ च देवोक्तिर्नरि कुष्ठिनि, अने

**देवताड**—देवताड सैंहिकेये जीमूते च हुताशने, मे देवताडस्तु घोषके। सैंहिकेयग्रहे चापि देवताडो हुताशने, वि देवताडो घोषकेऽग्नौ राहौ, हे

**देवन**—देवन व्यवहारे स्याज्जिगीषाक्रीडयोरपि। देवनोऽक्षेषु पुंसि स्यात्, मे देवन व्यवहारे स्याज्जिगीषाक्रीडयोरपि। अक्षेषु देवन प्रोक्त, वि देवनोऽक्षेऽथ देवनम्। व्यवहारे जिगीषाया क्रीडायाम्, हे क्रीडादावपि देवनम्, अ क्रीडादौ देवन नाऽक्षे, त्रि

**देवमणि**—अथ देवमणिर्भर्गेऽश्वावर्ते कौस्तुभेऽपि च, मे देवमणि शिवेऽश्वस्य कण्ठावर्ते च कौस्तुभे, वि देवमणिर्विष्णुवक्षोमणौ हरे। अश्वस्य कण्ठावर्ते च, हे

**देवयु**—देवयुर्वाच्यलिङ्गस्तु धार्मिके लोकयात्रिके, मे देवयुर्धार्मिके ख्यातो देवयुर्लोकयात्रिके, वि

**देववृक्ष**—देववृक्ष सप्तपर्णे मन्दारादिषु गुग्गुलौ, मे, वि देववृक्षो मन्दारादौ गुग्गुलौ विषमच्छदे, हे

**देवसहा**—भवेद् देवसहाभिख्या सूते दण्डोत्पलौषधे, वि

**देवसेना**—देवसेना तु वज्रिण। सुतायामपि सेनाया देवतानाञ्च योषिति, मे देवसेनेन्द्रवाहिन्या सेनायाञ्च दिवौकसाम्, वि देवसेनेन्द्रकन्याया सैन्ये दिविषदामपि, हे

**देष्णु**—देष्णुर्दातरि दुर्गमे, मे, वि, हे

**देहयात्रा**—देहयात्रा यमपुरीगमने भोजनेऽपि च, मे, हे देहयात्रा भोजने स्यात् कृतान्तागमनेऽपि च, वि देहयात्राऽशने मृतौ, त्रि

**दैत्य**—दैत्योऽसुरे मुरायान्तु दैत्या चण्डौषधावपि, मे, वि दैत्योऽसुरे मुरौषधौ, हे

**दैत्यारि**—दैत्यारि पुंसि सामान्यदेवे च गरुडध्वजे, मे दैत्यारिस्त्रिदशे विष्णौ, वि

**दैवज्ञ**—दैवज्ञो गणके पुमान्। दैवज्ञे गणिकाया स्त्री, मे. दैवज्ञो गणकेऽपि च, वि.

**दोग्धृ**—दोग्धाऽर्थोपजीविकवौ वत्सगोपालयो पुमान्, मे दोग्धा गोपालके वत्से कवौ अर्थोपजीविनि, वि दोग्धा गोपालवत्सयो। अर्थोपजीविनि कवौ, हे दोग्धा गोपे कवौ वत्से, त्रि

**दोला**—दोला नील्या यानान्तरेऽपि च, मे दोला यानान्तरे नील्याम्, वि

**दोष(षा)**—दोष स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च, मे, वि दोषा

रात्रौ च तन्मुखे, मे दोषा रात्रिमुखे रात्रौ अत्राऽनव्ययमप्यसौ, वि दोषा निशि निशामुखे, हे

**दोपज्ञ**—दोपज्ञ प्राज्ञवैद्ययो , हे

**दोहदलक्षण**—दोहदलक्षणमुक्त वय सन्धौ च गर्भे च, मे दोहदलक्षण गर्भे स्यात् सन्धौ यौवनस्य च, हे दोहदलक्षण गर्भे वय सङ्ग्रे च दृश्यते, त्रि

**दौर्वीण**—दौर्वीण मृष्टपर्णे स्याद् दूर्वाया सुरसेऽपि च, मे , वि दौर्वीण मृष्टपर्णे स्याद्धरितालीरसेऽपि च, हे

**द्यु**—द्यु क्लीवमह्नि गमने च। ना ज्वलने, मे द्युरग्नौ दिवसेऽपि स्यात् वि द्युर्दिने वह्नौ, हे

**द्युति**—द्युति स्त्री रश्मिशोभयो म द्युतिश्च शोभादीधित्यो , हे

**द्युम्न**—द्युम्न वित्ते बलेऽपि च, मे द्युम्न वित्ते पराक्रमे, वि द्युम्न द्रविण-वद्धनौजसो , हे द्युम्न बले धने, त्रि

**द्युवन्**—द्युवा त्वभिनवे भानौ वि

**द्यो**—द्यौस्त्रिदशालयत्रिदशवर्त्मनोर्योपिति, मे द्यौ स्वर्गसुरवर्त्मनो , वि द्यौस्तु स्वर्गे विहायसि, हे

**द्रव**—द्रव प्रद्रावनर्मणो । रसेऽपि, मे द्रव प्रद्रावरसयोर्गतौ नर्मणि विद्रवे, वि द्रवो विद्रवनर्मणो । प्रद्रावे रसगत्योश्च, हे

**द्रवन्ती**—स्रवन्ती च द्रवन्त्याप । नद्यामोपधिभेदे च, हे v स्रवन्ती

**द्रविण**—द्रविण न द्वयोर्वित्ते काञ्चने च पराक्रमे, मे द्रविण काञ्चने वित्ते द्रविणञ्च पराक्रमे वि द्राविणन्तु बल धनम्, अ v द्रविण

**द्रव्य**—द्रव्य स्यात् पित्तले वित्ते पृथ्व्यादौ च विलेपने। क्लीबे च भेपजे भव्ये द्रुविकारे च वाच्यवत्, मे द्रव्य स्याद् द्रविणे भव्ये पृथिव्यादौ च पित्तले। भेपजे चापि विनये जतुद्रुमविकारयो , व द्रव्य भव्ये धने क्ष्मादौ जतुद्रुम-विकारयो । विनये भेपजे वीर्यां, हे द्रव्य भव्ये गुणाश्रये, अ भेपजे द्रुविकारे च द्रव्य भव्ये च पित्तले, त्रि

**द्रावक**—द्रावको ग्रावभेदे स्याद् विदग्धे घोपकेऽपि च, मे द्रावकस्तु शिला-भेदे स्याद् घोपकविदग्धयो , हे द्रावकस्तु शिलाभेदे विदग्धे घोपकेऽपि च, त्रि

**द्राविड**—द्राविडो देशभिज्जाते सङ्ख्याभिद्वेधमुख्ययो , मे द्राविड स्याज्जान-पदे वेधमुख्यकसङ्ख्ययो , वि

**द्रुघण**—द्रुघणो मुद्गरेऽपि स्याद् द्रुहिणे च परश्वधे, मे , वि द्रुघण पर्शु-वेधसो । मुद्गरेऽपि, हे

**द्रुण**—द्रुण चापेऽलिनि द्रुण । द्रुण्यम्बुद्रोणीकच्छप्यो, मे द्रुण चापे च खड्गे च द्रुणो वृश्चिकभृङ्गयो । द्रुणी कच्छपिकायाञ्च जलद्रोण्यामुदाहृता, वि द्रुण स्याद् वृश्चिके भृङ्गे द्रुण चापकृपाणयो । द्रुणी कूर्म्या जलद्रोण्याम् हे द्रुणोऽलि कच्छपी द्रुणी, त्रि

**द्रुत**—द्रुत रिपु । शीघ्र विलीने विद्राणे मे द्रुत शीघ्रविलीनयो, ह, त्रि द्रुत शीघ्रे विलीने च विद्राणे चाभिधेयवत्, वि

**द्रुम**—द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे, म द्रुमस्तरौ पारिजाते द्रुम किम्पुरुषेश्वरे वि द्रुमस्तु पादपे पारिजाते किम्पुरुषेश्वरे, हे द्रुमो यज्ञेश्वरे वृक्षे, त्रि द्रुमो वृक्षेषु शैलेषु, अने

**द्रू**—द्रू स्वर्णे कामरूपिणि, वि द्रू कामरूपिणि स्वर्णे, हे

**द्रोण**—द्रोणोऽस्त्रियामाढके स्यादाढकाना चतुष्टये । पुमान् कृपीपतौ दग्धकाके स्त्री नीवृदन्तरे । तथा काष्ठाम्बुवाहिन्या गवादन्यामपीष्यते मे द्रोण कृपीपतौ कृष्णकाके स्यादाढकेऽपि च । आढकाना चतुष्के च द्रोणी स्यान्नीवृदन्तरे । द्रोणी काष्ठाम्बुवाहिन्या गवा घासभुजि स्थितौ, वि द्रोण पार्थगुरौ काके माने द्रोणी तु नीवृति । नौभेदे शैलभेदे च, हे अथ द्रोण कावेऽपि अ काष्ठागावेऽम्बुवाहिन्या शैलसन्धौ च योषिति । द्रोणी न स्त्री मानभेदे द्रोण काव कृपीपतौ त्रि द्रोण स्यात् कौरवाचार्यो द्रोण काव इतीरित । द्रोणो गिरिविशेषश्च द्रोण स्याच्चतुराढक, अने

**द्रोहाट**—द्रोहाट कथितो गाथाप्रभेदे मृगलुब्धके । वैडालव्रतिके च, मे, वि द्रोहाटा मृगलुब्धके । चतुष्पदीप्रभेदे च विडालव्रतिकेऽपि च, हे

**द्वन्द्व**—द्वन्द्व रहस्ये कलह तथा मिथुनयुग्मयो, मे द्वन्द्वो रहस्ये कलहे द्वन्द्व मिथुनयुग्मयो, वि द्वन्द्व से द्वन्द्वमाहवे । रहस्ये मिथुने युग्मे, हे द्वन्द्व कलहयुग्मयो, अ

**द्वापर**—द्वापर सशये युगे, मे, वि, हे द्वापरौ युगसशयौ, अ सन्देहेऽपि द्वापरमाहु, ह

**द्वार**—द्वार निर्गमनेऽपि स्याद् अभ्युपाये, मे द्वार पुनर्निर्गमनेऽभ्युपाये, वि द्वार निर्गमेऽभ्युपाये, हे उपाये निर्गमे द्वारम् त्रि

**द्विक**—द्विक स्यात्काककोकयो, मे, ह द्विक काके च कोके च, वि द्विकौ काकचक्रवाकौ, त्रि

**द्विज**—द्विज स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना । द्विजा भार्ग्या हरेणौ च, मे द्विजो विप्रेऽण्डजे दन्ते भाण्डारेणुकयोर्द्विजा, वि द्विजो विप्रक्षत्रियवैश्ये

दन्ते विहङ्गमे । द्विजा भार्गीरेणुकयो , हे दन्तविप्राण्डजा द्विजा अ दन्तविप्रौ तथा द्विजौ, अने

**द्विजन्मन्**—दिजन्मा दशने विप्रे, मे , वि द्विजन्मानौ रदविप्रौ, हे द्विजन्मा दन्तविप्रयो , त्रि

**द्विजाति**—द्विजातिर्विप्राण्डजयोश्च पुलिङ्ग , मे द्विजातिरण्डजे विप्रे, वि द्विजातिर्ब्राह्मणेऽण्डजे, हे

**द्विजराज**—द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति, म द्विजराज शशधरे सुपर्णेऽनन्तभोगिनि, वि द्विजराजस्तु शशाङ्के गरुडेऽपि च, हे हसेऽग्नौ गरुडे चन्द्रे द्विजराज इति ध्वनि , अने

**द्विजिह्व**—(ह्व) द्विजिह्वस्तु खले सर्पे, मे द्विजिह्वो भुजगे खले, वि द्विजिह्व खलसर्पयो हे द्विजिह्वौ सर्पसूचकौ, अ द्विजिह्व सूचको ज्ञेयो द्विजिह्वस्तु भुजङ्गम , अने दृष्टिविष सूचके च द्विजिह्व परिकीर्तित , हा

**द्वितीय**—द्वितीया तिथिभित्पत्न्यो पूरणे तूभये त्रिषु, मे द्वितीया तिथिभित्पत्न्यो पूरण्यामपि च द्वयो , वि द्वितीया तिथिगेहिन्योर्द्वितीय पूरणे द्वये, हे द्वितीया तिथिभित्पत्न्यो , त्रि सपत्न्यामपि द्वितीया, ह

**द्वीपवत्**—द्वीपवान् सिन्धुनदयोर्द्वीपवत्यापगाभुवो , मे , वि

**द्वैमातुर**—द्वैमातुरो जरासन्धवारणाननयो पुमान्, मे द्वैमातुरो जरासन्धवारणाननयोर्मत , वि

**ध**—धो ना धर्मे कुवेरे च क्लीव तु वसुनि स्मृतम् । धो धा च ब्रह्मणि ख्यातो धा तु स्याद धारकेऽपि च, मे मीनेश सात्वत प्रीतिर्वामपादाङ्गुलीगत । धनेशो धरणीशश्च धकारो दान्तिम स्मृत , मा

**धट**—धटो दिव्यतुलाया स्याद् धटी चीरे च वासस , मे धटी खण्डे च वासस । परीक्षार्थतुलाया च धट शूरिभिरिष्यते, वि

**धन**—धन तु गाधन वित्ते मे धन गोधनवित्तयो , वि धन वित्ते गोधने च स्यात्, हे

**धनञ्जय**—धनञ्जयोऽर्जुने वह्निनागदिग्देहमारुते, मे धनञ्जयोऽर्जुने वह्नौ ककुभे देहमारुते। नागान्तरे च, वि धनञ्जयो नागभेदे ककुभे देहमारुते। पार्थेऽग्नौ, हे पार्थेऽग्नौ च धनञ्जय , त्रि

**धनद**—धनदस्तु कुवेरे स्यात् पुलिङ्गो दातरि त्रिषु, मे धनदो दातरि श्रीदे, वि धनदौ दातृगुह्यकौ, हे

**धनिक**—धनिका साधुनार्या ना धन्याके त्रिषु साधुधनिनोश्च, मे धनिर

साधुधन्याकधवेषु धनिका स्त्रियाम्, वि. धनिको धन्याके धवे। धनाढ्ये धनिका वध्वाम्, हे.

धनु—धनुः पुमान् पियालद्रौ राशिभेदे शरासने, मे. धनुसंज्ञा पियालद्रौ राशिभेदे शरासने, वि. धनुशब्द. पियालद्रौ राशिभेदे धनुष्यपि, हे.

धनुस्—धनु पियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु, मे. धनु पियालद्रुमराशिभेदयोः शरासने चापि धनुर्धनुर्धरे, वि धनु शरासने राशौ पियालद्रौ धनुर्धरे, हे

धन्य—धन्या धात्र्यामलक्यो स्याद् धन्य पुण्यवति त्रिषु, मे. धन्यो धनवति स्मृत। धन्या धान्यामलक्योश्च, वि. धन्य पुण्ययुते धन्यामलक्यामुपमातरि, हे

धन्वन्—धन्वा तु मरुदेशे ना क्लीव चापे स्थलेऽपि च, मे. धन्वा जाङ्गलदेशे स्याद् धन्व चापे स्थलेऽपि च, वि धन्व स्थलचापयो, हे धन्वा मरौ धन्व चापे, त्रि

धन्विन्—धन्वी धनुर्धरेऽपि स्यादर्हुणे ककुभद्रुमे, मे धन्वी धनुर्धरे पार्थे विदग्धे ककुभद्रुमे, वि. धन्वी पार्थे च्छेके ककुभचापिनो, हे

धमन—धमनो नाऽनले भस्त्राध्मापकक्रूरयोस्त्रिषु। धमनी तु शिराहट्ट-विलासिन्योश्च योषिति, मे धमनोऽप्यनले भस्त्राध्मापकक्रूरयो स्मृता। धमनी तु हरिद्रायां कन्धराशिरयोरपि, वि. धमनोऽनले। क्रूरे भस्त्राध्मापके च धमनी कन्धरा शिरा। हरिद्रा च, हे

धर—धरो गिरौ। कार्पासतूलके कूर्मराजे वस्वन्तरेऽपि च। धरा विश्वम्भ-रायाञ्च स्त्री गर्भाशयमेदसोः, मे. धरस्तु शैले कार्पासतूलके कमठाधिपे। धरा मेदसि भूम्यां च स्त्रीणां गर्भाशयेऽपि च, वि. धर कूर्माधिपे गिरौ। कार्पासतूलेऽप्य धरा मेदोभूमिजरायुषु, हे धरा पृथ्वी धरा धारा धरः शैलो धरा धृतिः, अने. (धरो धूर्ते च पर्वते, अने.) धरा पृथ्वी धरो गिरिः, त्रि.

धरण—धरण मानभेदेऽपि धारणे धरणी भुवि, मे., वि. धरण धारणे मान-विशेषे धरणी भुवि, हे.

धराधर—धराधरो हरौ शैले, मे. धराधरः क्ष्माभृति चक्रपाणौ, वि. धरा-धरः। कृष्णेऽद्रौ च, हे. हरिशैलौ धराधरौ, त्रि.

धरुण—धरुण. सम्मते नीरे स्वर्लोके परमेष्ठिनि, मे, वि

धर्म—धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे, मे. धर्म. पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ। उपमाया-

महिसायां चापे चोपनिगद्यते, वि. धर्मो यमोपमापुण्यस्वभावाचारधन्वसु। सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि। धर्म दानादिके, हे. धर्मोऽहिंसोपमायोगोपनिषत्सु धनुष्यपि, त्रि.

**धर्मण**—धर्मणस्तु पुमान् वृक्षभेदसर्पप्रभेदयो., मे. धर्मणोऽहिद्रुभेदयोः, वि.

**धर्मराज**—धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्, मे. धर्मराजो यमे बुद्धे धर्मराजो युधिष्ठिरे, वि धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे, हे. धर्मराजौ जिनयमौ, अ.

**धर्षण**—धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षणी, मे., वि. धर्षणं रतेऽभिभवे धर्षणी त्वभिसारिका, हे असती स्याद् धर्षणी च धर्षणा निकृतौ रते, त्रि.

**धव**—धव पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च, मे. धवः पत्यौ नरे धूर्ते वृक्षभेदेऽपि कीर्तित', वि. धवो धूर्ते नरे पत्यौ द्रुभेदे, हे. पतिशाखिनरा धवाः, अ. धवो धूर्तेऽपि, त्रि धव पतिर्धवो मर्त्यो वृक्षजातिर्धवो मत', अने.

**धवल**—धवला गवि। वृषश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे, मे. धवल सुन्दरे सिते। महोक्षे चाथ धवली सौरभेय्यामुदीरिता, वि. धवलो महोक्षे सुन्दरे सिते। धवली गौ, हे धवला गवि ना शण्ढे शुक्लसुन्दरयोस्त्रिषु, त्रि.

**धातु**—धातुर्नेन्द्रियेषु च। शब्दयोनिमहाभूततद्गुणेषु रसादिषु। मन.-शिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च, मे. धातू रसादौ श्लेष्मादौ भ्वादिग्रावविकारयो। महाभूतेषु लोकेषु शब्दादाविन्द्रियेऽस्थनि, हे. धातु' स्यादश्मविकृतौ विषयेष्विन्द्रियेषु च। भुवादिरसरक्तादिश्लेष्मादिवसुधादिषु। वर्तते धातुशब्दोऽयं विशेषादस्ति गैरिके, वि श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातव, अ वातादिप्रकृतिर्धातुर्धातुर्देहरसादिकः। *क्रियाभाव स्मृतो धातुर्धातु शैलोपलोद्भवः,* अने. पृथिव्यादिषु भूतेषु शरीरेषु रसादिषु। लोहेषु च स्मृतो धातुः स्वभावे गैरिकादिषु, ह. राशौ च धातुः, त्रि.

**धातृ**—धाता हिरण्यगर्भे ना पालके त्रिषु, मे. धात्री जनन्यामलकीवसुमत्युपमातृषु, मे. धाता हिरण्यगर्भः स्यात् पालके त्वभिधेयवत्, वि. धात्री जनन्यामलकीवसुमत्युपमातृषु, वि. धात्री भुव्युपमातरि। आमलक्यां जनन्या च, हे. धाता वेधसि पालके, हे. धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि, अ. धात्री भुव्यामलक्यां च, त्रि धातकी प्रोच्यते धात्री धात्री चामलकी तथा। धात्री वसुन्धरा ज्ञेया धात्री स्यात् स्तनदायिनी, अने.

**धाना**—धाना भृष्टयवेऽपि च। धान्याकेऽभिनवोद्भिन्ने, मे धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि, वि धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु हे

**धान्य**—धान्य व्रीहिषु धान्याके, मे वि धान्य तु व्रीहौ धान्यके हे

**धामन्**—धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयो मे, वि धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयो, हे गृहदेहत्विट्प्रभावा धामानि, अ प्रभावे तेजसि *स्थाने धामशब्दो निगद्यते,* अने

**धामार्गव**—धामार्गवस्तु पुसि स्याद् अपामार्गे च घोषके मे धामार्गवस्त्वपामार्गे देवदाल्यामपि स्मृत, वि धामार्गवस्तु घोषके। अपामार्गेऽपि, हे

**धार**—धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके। घटादिच्छिद्रसन्तत्यो प्रपाते स्याद्द्रवस्य च। खड्गादेर्निशितमुखे धारो ग्रावान्तरेऽप्यृणे मे धारा सैन्याग्रिमस्कन्धसन्तत्यो पतनान्तरे। द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके। खड्गादीना च निशितमुखे धाराऽपि कीर्त्यते। धार क्वचिद्घनासारवर्षणे स्यादृणेऽपि च, वि धारो जलधरासारवर्षणे स्यादृणेऽपि च। धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिना गतौ। जलादिपात सन्तत्याम्, हे धारा हरिद्राश्वगतिनिशाम्बुसृतिराजिषु, त्रि

**धारण**—धारणी नाडिकाया स्याद् बुद्धोक्तमन्त्रभिद्यपि। धारणाङ्गे च योगस्य न पुसि स्याद्विधारणे, मे धारणी नाडिकाया स्यादयुद्धोक्तमन्त्रभिद्यपि, वि बुद्धमन्त्रे नाडिकाया धारणी, त्रि

**धाराङ्कुर**—धाराङ्कुरस्तु नासीरे शीकरेऽपि घनोपले, मे, वि धाराङ्कुर शीकरे स्यान्नासीरे जलदोपले हे धाराङ्कुरो वायुफले नासीरे शीकरेऽपि च, हा

**धाराङ्ग**—धाराङ्गोऽसौ च तीर्थे च, मे धाराङ्ग खड्गतीर्थयो, वि धाराङ्गस्तीर्थखड्गयो, हे

**धाराट**—धाराटश्चातकाश्वयो, मे, वि धाराटश्चातकेऽश्वे च हे धाराटौ चातकहयौ, त्रि धाराटश्चातके वाहे हा

**धाराधर**—धाराधरोऽसिमेघयो, मे धाराधरस्तोयधरे कृपाणे, वि धाराधरस्तु पयोदकरवालयो, हे धाराधरौ खड्गमेघौ त्रि

**धार्तराष्ट्र**—धार्तराष्ट्रोऽसितास्याङ्घ्रिहसे कौरवसर्पयो, मे धार्तराष्ट्रोऽसितास्याङ्घ्रिहसकौरवभोगिषु, वि धार्तराष्ट्र कौरवेऽह्रौ कृष्णास्याङ्घ्र्यसितच्छदे, हे

**धावन**—धावन गमने शुद्धौ पृश्निपर्ण्यां तु योषिति, मे धावन प्रगमे शुद्धौ पृश्णिपर्ण्यां तु धावनी, वि धावन तु गतौ शौचे, हे धावन गतिशौचयो, त्रि धावन शोधन प्रोक्त धावन शीघ्रवर्तनम्, अने

**धिक्**—धिग् भर्त्सने च निन्दायाम्, मे. धिग् भर्त्सननिन्दयोः, वि, हे. धिङ्निर्भर्त्सननिन्दयोः, अ.

**धिषण**—धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति, मे. धिषणस्त्रिदशाचार्ये धिषणा धियि सम्मता, वि. धिषणस्त्रिदशाचार्यो धिषणा तु मनीषिका, हे.

**धिष्ण्य**—धिष्ण्यं स्थानाग्निसद्मसु। शक्तावृक्षेऽपि, मे. धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्तौ च पावके, वि. धिष्ण्यं स्थानोडुवेश्मसु। बले धिष्ण्योऽग्नौ, हे. धिष्ण्य स्थाने गृहे भेऽग्नौ, अ. तारास्वग्नौ गृहे स्थाने धिष्ण्यमाहुर्मनीषिण, अने.

**धी**—धीर्ज्ञाने ज्ञानभेदेऽपि, मे.

**धीदा**—धीदा पुत्रीमनीषयोः, मे धीदा कन्यामनीषयोः, वि., हे.

**धीमत्**—धीमान् पण्डिते च बृहस्पतौ, मे धीमान् वाचस्पतौ धीरे, वि.

**धीर**—धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे। स्त्रिया श्रवणतुल्यायाम् मे. धीरो ज्ञे धैर्यसंयुते। स्वैरे धीर तु घुसृणे, हे. धीर पण्डितमन्दयोः। धीरं च कुङ्कुमम्, त्रि. धीरौ सात्त्विकधीमन्तौ, अने

**धीवर**—धीवरो लुब्धके बुधे, वि

**धुत**—अथो धुतम्। त्यक्ते विधूते, मे धुत त्यक्ते विधूते च, वि. धुतं त्यक्ते कम्पिते च, हे.

**धुन्धुमार**—धुन्धुमार शक्रगोपे गृहधूमे पदालिके, मे., वि. धुन्धुमारः शक्रगोपे गृहधूमे गृहालिके, हा धुन्धुमारो गृहधूमे नृपभेदेन्द्रगोपयो.। पदालिके, हे.

**धुर्**—धूर्यानिमुखभारयो, हे

**धुरन्धर**—धुरन्धरो धवद्रौ ना वाच्यलिङ्गस्तु धूर्वहे, मे. धुरन्धरो धवतरौ धूर्वहेऽपि धुरन्धरः, वि. धुरन्धरो धुर्ये धवद्रुमे, हे

**धू**—धूः स्मृता धुनने स्त्रियाम्, मे

**धूत**—धूतं तु कम्पिते भर्त्सिते त्रिषु, मे. धूतौ कम्पितभर्त्सितौ, हे. धूतं कम्पितभर्त्सिते, वि.

**धूमकेतन**—स्याद् धूमकेतनः पुंसि केतुग्रहहुताशयोः, मे. धूमकेतनमिच्छन्ति हुताशग्रहभेदयोः, वि धूमकेतनोऽनले। ग्रहभेदे च, हे.

**धूमकेतु**—स्याद् धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्, मे. धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः, वि. धूमकेतू वह्न्युत्पातौ, हे. अग्न्युत्पातौ धूमकेतू, अ.

**धूर्त**—धूर्तं तु खण्डलवणे धुस्तूरे ना विटे त्रिषु, मे. धूर्तः स्यात् खण्डलवणे खलधुस्तूरयोरपि, वि. धूर्तं तु खण्डलवणे धूर्तो धत्तूरमायिनोः, हे.

**धूलि**—धूलिः संख्यान्तरे रेणौ, वि.

**धूलिकदम्ब**—धूलिकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे, मे., वि धूलिकदम्ब-स्तिनिशे नीपे वरुणपादपे, हे.

**धूसर**—धूसरी किन्नरीभेदे ना खरे त्रिपु पाण्डुरे, मे. धूसरः पाण्डुरे खरे, वि. धूसरस्तु रासभे स्तोकपाण्डुरे, हे.

**धृतराष्ट्र**—धृतराष्ट्रः सुराज्ञि स्यान्नागक्षत्रियभेदयोः। धृतराष्ट्री हंस-पद्याम्, मे. धृतराष्ट्र सुराज्ञि स्यात् पक्षिक्षत्रियभेदयो.। धृतराष्ट्री हसपद्याम्, वि धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे। धृतराष्ट्री हंसपद्याम्, हे

**धृति**—धृतिर्नेष्टौ स्त्रिया तुष्टौ योगभिद्धैर्यधारणे, मे. धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु, वि. धृतिर्योगविशेषे स्याद् धारणाधैर्ययो सुखे। सन्तोषा-ध्वरयोश्चापि, हे धृतिर्धारणधैर्ययोः, श्र धृतिस्तुष्टौ क्रतावपि, त्रि

**धेन**—धेनी नद्या नदे पुमान्, मे धेनः समुद्रे नद्यां तु धेनी, वि धेन· समुद्रे धेना तु नद्यां स्याद्भारतीभिदि, हे.

**धेनु**—धेनुर्गोमात्रके दोग्ध्र्या गवि, हे. पयस्विन्यर्जुनी धेनुर्धेनुः कुञ्जर-कामिनी। असिपुत्री मता धेनुर्वृत्तिः शुभङ्करी, अने.

**धेनुक**—स्याद् धेनुका करिण्या धेनावपि ना तु दानवविशेषे, मे. धेनुका धेनुरित्यपि, हे. धेनुका तु करेण्वा च, अ. हस्तिन्या धेनुका, ह.

**धैनुक**—धैनुकं करणे स्त्रीणां धेनूनामपि संहतौ, मे., वि. धैनुकं धेनुसहत्या करणेऽपि च योषिताम्, हे.

**धौम्र**—धौम्रं धूम्रत्व ईरितम्। तथा वास्तुस्थानभेदे, मे.

**ध्याम**—ध्याम दमनके गन्धतृणेऽथ श्यामले त्रिपु, मे. ध्यामो दमनके गन्धतृणे, वि

**ध्रुव**—ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे। वसुयोगभिदोः पुंसि क्लीवं निश्चिततर्कयो.। स्त्री मूर्व्याढक्यो. शालपर्ण्यां गीतिस्रुग्भेदयोस्त्रिपु। सन्तते शाश्वते च, मे. ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ। ध्रुवा मूर्वाशालपर्ण्यो-र्गीतिस्रुग्भेदयोरपि। ध्रुवन्तु निश्चले तर्के निश्चिते शाश्वतेऽन्यवत्, वि ध्रुवो वटे। वसुयोगभिदो. शम्भौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुव खेऽजस्रतर्कयो·। ध्रुवा मूर्वाशालपर्ण्योः स्रुग्भेदे गीतभिद्यपि, हे. ध्रुवो भभेदे क्लीवं तु निश्चिते शाश्वते त्रिपु, अ. ध्रुवो वटे स्मरारौ च गीतिस्रुग्भेदयोर्ध्रुवा, त्रि. ध्रुवौ नक्षत्रनिश्चयौ, अने.

**ध्वज**—ध्वजः स्याच्छौण्डिके पुमान्। न स्त्रियां तु पताकाया खट्वाङ्गे मेढ्रचिह्नयोः, मे. ध्वजं चिह्ने पताकाया ध्वजः शौण्डिकशेफसोः। खट्वाङ्गे च,

वि ध्वज पूर्वदिशो गृहे। शिश्ने चिह्ने पताकाया खट्वाङ्गे शौण्डिकेऽपि च, हे चिह्नशेफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम्, त्रि

**ध्वजिन्**—ध्वजी तु पृथिवीधरे। रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयो, मे ध्वजी शैले रथे विप्रे भुजङ्गमतुरङ्गयो, वि

**ध्वनिनाला**—ध्वनिनाला तु वीणाया वेणुकाहलयोरपि, मे ध्वनिनाला स्मृता वेणौ काहलावीणयोरपि, वि ध्वनिनाला तु वल्लक्या वेणुकाहलयोरपि, हे काहलावेणुवीणासु ध्वनिनालाध्वनिं विदु, हा

**ध्वाङ्क्ष**—धाङ्क्षो मत्स्यात्खगे काके तर्कटे भिक्षुकेऽपि च। ध्वाङ्क्षी कक्कोलिकायाम्, मे ध्वाङ्क्षस्तु काकबकयोस्तर्कके भिक्षुके गृहे। ध्वाङ्क्षी कक्कोलिकाया स्यात् वि ध्वाङ्क्ष काके बकेऽर्थिनि। गृहे ध्वाङ्क्षी तु काकोल्याम्, हे काकमत्स्यात्खगौ ध्वाङ्क्षौ अ ध्वाङ्क्ष काको बको ध्वाङ्क्ष, अने वके धाङ्क्ष, ह

**न**—न पुमान् सुगते बन्धे द्विरण्डे प्रस्तुतेऽपि च, मे न स्यान्निषेधोपमयो, हे शौरी मेषेश्वरो दीर्घो वामपादाङ्गुलीगत। नटो नटी नो नादी च नकारश्चानुनासिक मा नेता नश्च समाख्यातस्तरणौ न प्रकीर्तित। नकार सौगते वृद्धौ स्तुतौ वृक्षे प्रकीर्तित, ए v नञ्

**नकिर्**—नकिर्निषेधोपमयो, मे

**नकुल**—नकुली कुक्कुटीमास्यो पशुपाण्डवयो पुमान्, मे नकुली कुक्कुटीमास्योर्नकुल पाण्डवे पशौ वि नकुलस्तु पाण्डवप्राणिभेदयो। नकुली कुक्कुटीमास्यो, हे

**नक्षत्रनेमि**—नक्षत्रनेमिरुक्ता रेवत्या ना ध्रुवे चन्द्रे, मे नक्षत्रनेमि शीतांशौ रेवत्या च ध्रुवे क्वचित, वि नक्षत्रनेमि शीतांशुरेवत्यौत्तानपादिषु हे

**नख**—नखी स्त्रीक्लीवयो शुक्तौ नखरे पुनपुंसकम्, मे नख करुहे पण्डे गन्धद्रव्ये नख नखी, वि नख पुनर्गन्धद्रव्ये नख करजपण्ढयो, हे नख शुक्तौ करुहे, त्रि

**नग**—नग शैलो नगो द्रुम, अने v अग

**नगौकस्**—नगौका पुंसि शरभे पक्षिपञ्चास्ययोरपि, मे v अगौकस्

**नग्न**—नग्नो वन्दिक्षपणयो पुंसि त्रिषु विवाससि, मे नग्नोऽपि च क्षपणके विवस्त्रे चाभिधेयवत् वि नग्नो विवाससि। मागधे च क्षपणके, हे नग्नौ क्षपणवन्दिनौ, त्रि

**नग्निका**—नग्निकापि कुमार्यां स्यात् पुमान् क्षपणवन्दिनो, मे नग्निकाऽ-

नृतुकन्यायां नग्नको जिनवन्दिनो., हे नग्निका तु कुमार्यां स्यादथ क्षपणवन्दिनो । नग्नकः, वि.

**नञ्**—नञ्भावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः, मे., वि. नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययो. । व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि, हे. नञ्भावे निगद्यते । तद्विरुद्धे तदन्ये च निषेधेऽपि च दृश्यते । सादृश्ये चेषदर्थे च, त्रि.

**नट**—नटी नल्यौषधे स्त्री स्यात् शैलूषाशोकयोः पुमान्, मे. नटो हट्टविलासिन्या शोनके नर्तके नट , वि. नटौ भरतकामुकौ, त्रि.

**नत**—नतं तगरपाद्या स्यात् क्लीबं कुटिलनम्रयोः । त्रिषु, मे. नतस्तगरनम्रयोः, हे. नतं स्याद्वाच्यवन्नम्रे नतस्तगरपादपे, वि.

**नदी**—नदी सरिति शोणादौ ना, मे. नदः समुद्रे निनदे नदी तु सरिति स्मृता, वि. नदी हृदेऽब्धौ निनदे, हे.

**नदीकान्त**—नदीकान्तः समुद्रे स्याद् इज्जले सिन्धुवारके । नदीकान्ता स्त्रियां जम्ब्वा काकजङ्घौषधावपि, मे नदीकान्त. समुद्रे स्यात् सिन्धुवारेऽपि हिज्जले । नदीकान्ता स्मृता जम्बूकाकजङ्घालतासु च, वि. नदीकान्तो निर्गुण्डीनिचुलादिषु । नदीकान्ता लताजम्बूकाकजङ्घौषधेऽपि च, हे. जम्ब्वां स्त्री ना नदीकान्त. सिन्धुवारेज्जलाब्धिषु, त्रि.

**नद्ध**—नद्धो बद्धे तयोद्वृत्ते, मे: नद्धमुद्वृत्तबद्धयोः, वि.

**ननु**—ननुशब्दो विनिग्रहे । ननु प्रश्ने परकृतावधिकारे च सम्भ्रमे । आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञावधारणे, मे. ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे । आमन्त्रणे चापि ननु, वि नन्वाक्षेपे परिप्रश्ने प्रत्युक्ताववधारणे । वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि, हे ननु प्रश्नेऽवधारणे, ह. प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु, अ.

**ननुच**—ननुच प्रश्नदुष्टोक्त्यो., मे., वि ननुच प्रश्ने दुष्टोक्तौ, हे.

**नन्द**—नन्दा स्यादलिञ्जरे । गौर्या तिथिविशेषे स्त्री निधिराजभिदोः पुमान्, मे नन्दा मणिकसम्पदोः, वि. नन्दा सम्पदलिञ्जरे । तिथिभेदे च, हे.

**नन्दक**—नन्दको हरिखड्गे च हर्षके कुलपालके, मे. नन्दको हरिखड्गे स्याद्धर्षके कुलपालके, वि. नन्दकः कुलपालके । हर्षके हरिखड्गे च, हे.

**नन्दन**—नन्दनं वासवोद्याने नन्दनो हर्षके सुते, मे., वि. नन्दनम् । इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि, हे. अथ नन्दनम् । देवोद्याने सुते पुंसि, त्रि. नन्दनः सज्जनः पुत्रो नन्दनं स्वर्गवाटिका, अने.

**नन्दि**—नन्दिर्द्यूताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान्, मे नन्दिरानन्दने द्यूते प्रतीहारे हरस्य च, वि नन्दिस्तु प्रतीहारे पिनाकिन । आनन्दने च द्यूते च, हे

**नन्दिघोष**—नन्दिघोषोऽर्जुनरथे घोषे वन्दिजनस्य च, मे, वि नन्दिघोषो वन्दिघोषे स्यन्दने च किरीटिन , हे

**नन्दिन्**—नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे । नन्दिन्युमाया गङ्गाया ननान्दृ धेनुभेदयो मे नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे । नन्दिनी तु ननन्दाया धेन्वा सुरसरित्यपि वि नन्दी गिरिशवेत्रिणि । गर्दभाण्डे वटे, हे

**नन्दिवर्द्धन**—स्यान्नन्दिवर्द्धनो भर्गे पक्षान्ते तनयेऽपि च, मे

**नन्द्यावर्त**—नन्द्यावर्त पुमान वेश्मप्रभेदे तगरद्रुमे, मे नन्द्यावर्त स्मृतो वेश्मप्रभेदे तगरद्रुमे, वि नन्द्यावर्त गृहान्तरे । तगरे, हे v मोक्ष

**नभस्**—नभ क्लीव व्योम्नि पुमान् घने । घ्राणश्रावणवर्षासु विसतन्तौ पतद्ग्रहे, मे नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभा स्मृत , वि नभो व्योम्नि नभा घ्राणे विसतन्तौ पतद्ग्रहे । प्रावृषि श्रावणे, हे नभ ख श्रावणे नभा , अ

**नभश्चमस**—स्यान्नभश्चमसश्चन्द्रे चित्रापूपेन्द्रजालयो , मे, वि नभश्चमसश्चन्द्रमाययो । चित्रापूपे, हे

**नभश्चर**—नभश्चरो विहङ्गमे । विद्याधरे घने वाते, मे नभश्चरो घने वाते विद्याधरविहङ्गयो , वि नभश्चर खगेऽम्बुदे । विद्याधरे समीरे च, ह नभश्चरौ पक्षिदेवौ त्रि

**नभस**—नभसस्तु नदीपतौ । गगने ऋतुभेदे च, हे

**नमुचि**—नमुचिस्तु पुमान् दैत्यभेदे कुसुमकार्मुके, मे नमुचि स्मरदैत्ययो वि नमुचिर्दितिजे काम, हे नमुचिर्दितिजस्मरे, त्रि

**नय**—नयो नीतिद्यूतविशेषयो मे नयो नीतौ द्यूतभेदे, वि नय स्यान्नैगमादिषु । नीतिद्यूतभिदो , हे

**नर**—नरोऽजे मनुजेऽर्जुने । क्लीवन्तु रामकर्पूरे, मे नरन्तु रामकर्पूरे नरोऽजे मानवेऽर्जुने वि नरो मर्त्येऽर्जुनेऽच्युते । नरन्तु रामकर्पूरे, हे नरोऽजे मानवेऽर्जुने त्रि

**नरक**—नरक पुंसि निरयदेवारातिप्रभेदयो , मे नरको दैत्यनिरयौ, हे नरको निरये दैत्ये, वि , त्रि

**नरङ्ग**—नरङ्गस्तु वरण्डके । मेहने न द्वयोश्च, मे नरङ्ग तु वरण्डके । शेफे नरङ्गमप्याहु , वि नरङ्ग शेफे वरण्डे, हे

नरेन्द्र—नरेन्द्रस्तु महीपाले विपवैद्ये च पुस्ययम्, मे नरेन्द्रो वार्तिके राज्ञि विपवैद्ये च कथ्यते, वि नरेन्द्रो वार्तिके राज्ञि विपवैद्ये च, हे नरेन्द्रो राजिके राज्ञि विपवैद्येऽपि दृश्यते, नि नरेन्द्रौ नृपवाचकौ, ह

नर्तक—नर्तक केलके पोटगलचारणयोर्नटे। नर्तकी लासिकायाञ्च करेण्वामपि योषिति, मे नर्तक केलके नटे। द्विपे पोटगले चापि नर्तकी लासिका द्विपी, हे नर्तकी लासिकायाञ्च करेण्वामपि नर्तकी। नर्तक खेलके पोटगल-चारणयोर्नटे, वि

नर्मठ—नर्मठश्चूचुके पिङ्गे, मे, वि नर्मठौ पिङ्गचूचुकौ, हे नर्मठ चूचुके पिङ्गे, हा

नर्मद—नर्मद केलिसचिवे नर्मदा सरिदन्तरे, मे, वि नर्मदा रेवानर्माल्यो, हे

नर्मरा—नर्मरा तु दरीभाण्डमुरलानिष्कलासु च, मे, वि

नल—नल पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि कुनटयाञ्च क्रमेण क्लीवयोषिति, मे नल पोटगले राज्ञि पितृदेवे कपीश्वरे। नली मन-शिलायान्तु नलिने तु नल मतम्, वि नलो राज्ञि कपौ नडे। पितृदेवे नलन्तु स्यात् पद्म नली मन शिला, हे

नलद—नलद स्यात् पुष्परसोशीरमासीपु न द्वयो, मे नलद स्यात् पुष्परसे मासिकोशीरयोरपि, वि नलदा मास्या नलदमुशीरमकरन्दयो, हे

नलिन—नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे। नपुसक नीलिकाया न पुसि सरसीरुहे, मे नलिनी पद्मिनीपद्मव्योमसिन्धुसरोवरे। नलिवायाञ्च नलिनी नलिन कमले जले, वि नलिन नलिकातोयाम्बुजेपु नलिनी पुन । पद्माकरे गङ्गाब्जिन्यो, हे स्वगङ्गाया नलिनी, त्रि

नव—नव नव्ये पुमान् स्तुतौ, मे नव नव्ये स्तवे विदु, वि नवो नव्ये स्तुतौ, हे

नवफलिका—नवफलिका स्त्री नव्ये नवजातरजोऽङ्गनायाञ्च, मे स्यान्न-वफलिका नव्ये नवजातरज स्त्रियाम्, वि नवफलिका तु नवे नवरज स्त्रियाम्, हे नवफलिका नवरजस्यपि, त्रि.

नवाह—नवाह स्यान्नवदिने नवाह प्रतिपत्तियौ, वि नवाहस्त्वाद्यतियौ नववासरे, हे

नह—प्रत्यारम्भे नह प्रोक्त, ह

नहुष—नहुषो नागभेदे स्यात् सोमवशनृपेऽपि च, मे नहुषो राज्ञि भुजगे, वि नहुषो राजविशेषे नागभिद्यपि, हे

**नाक**—नाकस्तु त्रिदिवेऽम्बरे, मे नाक स्व खे, हे नाक स्वर्गान्तरीक्षयो, वि आकाशे त्रिदिवे नाक, अ कथ्यतेऽम्बरे नाक ह

**नाकुली**—कुक्कुटीकन्दे रास्नाया चविके स्त्रियाम्, मे नाकुली कुक्कुटीकन्दे नाकुली चव्यरास्नयो, वि नाकुली चव्यरास्नयो। कुक्कुटीकन्दे, हे

**नाग**—नाग नपुसके रङ्गे सीसके करणान्तरे। नाग पन्नगमातङ्गक्रूराचारिपु तोयदे। नागकेशरपुन्नागनागदन्तकमुस्तके। देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरे स्थित, मे नागन्तु सीसके रङ्गे स्त्रीवन्धे करणान्तरे। नाग पन्नगमातङ्ग-क्रूराचारिपु तोयदे। नागकेसरपुन्नागे नागदन्तकमुस्तके। देहानिलप्रभेदेऽथ श्रेष्ठे स्यादुत्तरस्थित, वि नाग रङ्गे सीसपत्रे स्त्रीवन्धे करणान्तरे। नागो मतङ्गजे सर्पे पुन्नागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च। देहानिल-विशेषे च श्रेष्ठे स्यादुत्तरस्थित, हे गजेऽपि नागमातङ्गौ, अ नाग श्रेष्ठेभसर्पेपु क्लीव सीसकरङ्गयो, त्रि नागो वृक्षविशेषे स्यान्नागौ वारणपन्नगौ, अने कुञ्जरे नाग, ह

**नागदन्त**—नागदन्तो द्विपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भाया श्रीहस्तिन्यामपि स्त्रियाम्, मे नागदन्तो द्विपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भाया श्रीहस्तिन्यामपीष्यते, वि नागदन्तो हस्तिदन्ते गेहान्नि सृतदारुणि। नागदन्ती श्रीहस्तिन्या कुम्भाख्यभेपजेऽपि च, हे

**नागपाश**—नागपाश पुमान् स्त्रीणा करणे वरुणायुधे, मे नागपाश स्मृत स्त्रीणा करणे वरुणायुधे, वि नागपाशस्तु योपिताम्। करणे वरुणास्त्रे च, हे

**नागपुष्प**—नागपुष्पस्तु पुनागनागकेसरचम्पके, मे, वि नागपुष्पस्तु पुन्नागे चम्पके नागकेसरे, हे

**नागर**—नागर मुस्तके शुण्ठ्या विदग्धे नगरोद्भवे, मे नागर मुस्तके शुण्ठ्या विदग्धे नागरोऽन्यवत्। गसन्ति नगरोद्भवे रतवन्धे च नागरम्, वि नागरम्। शुण्ठीमुस्तकपौरेपु, हे राजकशेरण्यपि नागरम्, अ

**नागवारिक**—नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे। गणस्थराजे गरुडे चित्रमेखलकेऽपि च, मे नागवारिको गणस्थराजे राजेभहस्तिपे। चित्रमेखले गरुडेऽपि, हे नागवारिक उद्दिष्टो राजकुञ्जरहस्तिपे। गणस्थराजे गरुडे चित्र-मेखलके क्वचित्, वि

**नागाञ्जना**—नागाञ्जना नागयष्टि करिमुद्गरिका क्वचित्, हा नागाञ्जना नागयष्टिकरिमुद्गरिकाख्ययो, वि नागञ्जना नागयष्टौ द्विरदस्य च मुद्गरे, हे, मे

**नाट्य**—नाट्यं तौर्यत्रिके लास्ये, मे नाट्यं लास्ये तौर्यत्रिकेऽपि च, हे.

**नाडी**—नाडी नाले व्रणान्तरे। शिराया न गण्डदूर्वायां चर्याया कुहनस्य च। तथा षट्क्षणकालेऽपि, मे. नाडी नाले शिरागण्डदूर्वयोः स्याद्व्रणान्तरे। नाडी षट्क्षणकालेऽपि चर्याया कुहनस्य च, वि. नाडी कुहनचर्चाया घटिका-गण्डदूर्वयोः। नाले गुणान्तरे स्नायौ, हे नाडी नालेऽपि षट्क्षणे, अ.

**नाडीतरङ्ग**—नाडीतरङ्ग काकोले हिण्डके रतहिण्डके, मे., वि., हे

**नादेयी**—नादेयी नागरङ्गे स्याज् जयायामम्बुवेतसे। भूमिजम्ब्वा जवायाञ्च व्यङ्गुष्ठेऽपि च योषिति, मे. नादेयी नागरङ्गे स्याज् जयाया जलवेतसे। भूमिजम्ब्वा जवायाञ्च व्यङ्गुष्ठे च समीक्ष्यते, वि, नादेयी जलवानीरे भूजम्बू-नागरङ्गयो.। व्यङ्गुष्ठे च जपायाञ्च, हे.

**नाना**—नानाशब्दो विनार्थेऽपि तथाऽनेकोभयार्थयो, मे, वि नाना विनो-भयानेकार्थेषु, हे अनेकार्थे भवेन्नाना, ह

**नाभि**—नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो. पुमान्। द्वयो प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे, मे. नाभि. प्राण्यङ्गजे क्षत्रे चक्रान्तश्चक्रवर्तिनो। नाभिः प्रधाने कस्तूरीमदे च क्वचिदीरित, वि. नाभि क्षत्रप्रधानयो। चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराज्ञि च, हे. क्षत्रियेऽपि च नाभिर्ना, अ मुख्यराट्क्षत्रयो पुंसि नाभि. प्राण्यङ्गके द्वयोः। चक्रमध्ये प्रधाने च स्त्रिया कस्तूरिकामदे, त्रि आदिष्टः क्षत्रियो नाभिर्नाभिश्चक्रस्य पिण्डिका। कुटुम्बस्याग्रणीर्नाभिर्नाभि-र्निम्नोदरी तथा, अने.

**नाभील**—नाभीलं वङ्क्षणे नार्या कृच्छ्रगर्भण्डियोरपि, मे. नाभील तूत्तम-स्त्रियाः। वङ्क्षणे नाभिगर्भण्डे, हे नाभीलं नाभिगर्भण्डे वङ्क्षणे चोत्तम-स्त्रियाम्, वि.

**नाम**—नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्य-विकल्पेऽपि च दृश्यते, मे. नाम प्राकाश्यसम्भाव्यकुत्साभ्युपगमेषु च, वि. नाम प्राकाश्यकुत्सयो.। सम्भाव्याभ्युपगमयोरलीके विस्मये क्रुधि, हे. नाम प्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने, अ.

**नायक**—नायको नेतरि श्रेष्ठे हारमध्यमणावपि, मे., वि. नायको मणि-भिन्नेतृप्रधानेषु, हे.

**नार**—नारस्तर्णकनीरयोः, मे., वि.

**नारकीट**—नारकीटोऽश्मकीटे स्यात्स्वदत्ताशाविहन्तरि, मे., वि. नारकीटः स्वदत्ताशाविहन्त्र्यश्मकीटके, हे.

**नारङ्ग**—नारङ्ग पिप्पलीरसे। यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च, मे नारङ्ग पिप्पलीरसे। नागरङ्गे विटे जन्तौ यमजेऽपि प्रकीर्तितम्, वि नारङ्गो विटजन्मिनो। कणारसे नागरङ्गे, हे

**नाराच**—नाराच्येपणिकाया ना लोहबाणाम्बुहस्तिनो, मे नाराचो लोहवाणे स्यान्नाराचो जलहस्तिनि। नाराच्येपणिकायाञ्च, वि नाराचो लोहसायके। जलेभे नाराच्येपण्याम्, हे

**नारायण**—नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी मता, मे नारायणोऽच्युतेऽभीरुगौर्योर्नारायणी विदु, वि नारायणस्तु केशवे। नारायणी शतावर्युमा श्री, हे

**नाला**—नाला दण्डे सरोजस्य नाली शाककलम्बके, वि नाला न ना पद्मदण्डे नाली शाककडम्बके, मे नाल काण्डे मृणाले च नाली शाके कडम्बके, हे

**नालिका**—अथ नालिका। नाले काले चुल्लिरन्ध्रे विवरे वेणुभाजने, हे

**नालीक**—नालीक शरशल्याङ्गेष्वब्जखण्डे, मे नालीकोऽङ्गे शरे शल्ये नालीक पद्मवर्द्धने, हे नालीक शरखण्डेऽब्जे नालीक शरशल्ययो, वि नालीकौ पद्मनाराचौ, त्रि

**नाश**—नाश पलायनेऽपि स्यान्निधनानुपलम्भयो मे नाश पलायने प्रोक्तो निधनानुपलम्भयो, वि नाश पलायने मृत्यौ परिध्वस्तावदर्शने, हे नाश पलायने मृत्यौ, त्रि

**नासा**—नासा तु नासिकायाञ्च द्वारोर्ध्वदारुणि स्त्रियाम्, मे नासा तु नासिकाया स्यान्नासा द्वारोर्ध्वदारुणि वि नासा घोणा। द्वारोर्ध्वदारुणो, हे

**नाह**—नाहस्तु बन्धने कूटे, मे नाहो बन्धनकूटयो, वि

**नि**—नि निवेशभृशार्थयो। नित्यार्थे सशयक्षेपकौशलोपरमेषु च। सामीप्याश्रयदानेषु मोक्षान्तर्भावबन्धने। राश्यधोभावविन्यासे, मे नि स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि। सन्निधानोपरमयो सश्रयाश्रयराशिषु। मोक्षेऽन्तर्भावेऽधोभावे बन्धने कौशलेऽपि च, हे नि निवेशभृशार्थाधोभावविन्यासराशिषु। आश्रये बन्धने मोक्षे दानकर्मणि दर्शने। अन्तर्भावे च सामीप्यकौशलोपरमेषु च। नित्यार्थे सशये च, वि

**निःश्रेणि**—निःश्रेणिरधिरोहिण्या खर्जूरीपादपे स्त्रियाम्, मे निःश्रेणिस्त्वधिरोहिण्या खर्जूरीपादपेऽपि च, वि निःश्रेणिरधिरोहिण्या खर्जूरीपादपेऽपि, हे

**निःश्रेयस**—निःश्रेयसन्तु कल्याणमोक्षयो शङ्करे पुमान्, मे निःश्रेयसन्तु कल्याणे चन्द्रचूडापवर्गयो, वि निःश्रेयसन्तु कल्याणमोक्षयो, हे

**नि सरण**—अथ नि सरण मृत्यूपायमोक्षेषु निर्गमे, मे नि सरण स्यान्मरणो पायनिर्याणमुक्तिषु, वि नि सरण मृतौ। उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च, हे

**निकर**—निकरो निवहे सारे न्यायदेयधने निधौ, मे निकरो निवहे सार न्यायदेयधनान्तरे, वि निकर सारसङ्घयो । न्यायदातव्यवित्ते च, हे

**निकष**—निकष शाणफलके निकषा यातुमातरि, मे, हे निकषाऽन्तिक-मध्ययो, मे निकषा त्वन्तिके मध्ये रक्षोऽम्बाया त्वनव्ययम्, वि

**निकाय**—निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसहतौ। समुच्चये सहताना निलये परमात्मनि, मे निकायो निलये लक्ष्ये सहताना समुच्चये। एकार्थभाजि निवहे परमात्मनि चेष्यते, वि निकाय सद्मसङ्घयो । परमात्मनि लक्ष्ये च हे

**निकार**—निकार स्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च मे निकार स्यात् परिभवे धान्यस्योत्किरणेऽपि च, वि निकारस्तु पराभव। धान्योत्क्षेप, हे धान्योत्क्षेपे निकार स्यात्, नि

**निकुम्भ**—निकुम्भ कुम्भकर्णस्य तनये दन्तिकौषधौ, मे निकुम्भ कथितो दन्त्या कुम्भकर्णसुतेऽपि च, वि निकुम्भ कुम्भकर्णजे। दन्त्याञ्च, हे

**निकृत**—निकृत विप्रलब्धे स्यान्नीचे विप्रकृतेऽपि च वि म निकृत विप्रलब्ध विप्रकृतेऽधमे, हे

**निकृति**—निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम् मे निकृति-र्भर्त्सने क्षेपे वदन्ति शठशाठ्ययो, वि निकृति शठशाठ्ययो । भर्त्सनेऽभिभवे क्षेपे, हे

**निगम**—निगमो वाणिजे पुर्या कटे वेदे वणिक्पथे, मे निगमो वाणिजे पुर्या कटे वेदे वणिक्पथे, वि निगमा पूर्वणिक्वेदनिश्चयाध्ववणिक्पथा, हे वणिक्पथ पुर वेदो निगम, अ कटे लुण्ड्याञ्च निगम, त्रि श्रुतौ निगम, ह

**निगरण**—अथ निगरण क्लीव भोजने स्याद् गले पुमान्, मे निगरण भोजनेऽपि गले निगरणो मत, वि निगरण भोजने स्यान्निगरण पुनर्गले, हे

**निग्रह**—निग्रहो भर्त्सनेऽपि स्यान्मर्यादायाञ्च बन्धने, मे निग्रहा भर्त्सने प्रोक्तो मर्यादायाञ्च बन्धके, वि निग्रह । बन्धके भर्त्सने सीम्नि, हे

**निचुल**—निचुलस्तु निचोले स्याद् इज्जलाख्यमहीरुहे, मे निचुलो हिज्जल तरौ निचुलश्च निचोलके, वि निचुलस्त्विज्जलद्रौ निचोलके, हे

**निज**—निज स्वीये च नित्ये च, मे निजमात्मीयनित्ययो, वि निजा नित्ये स्वकीये च, हे स्वके नित्ये निज त्रिषु, अ नित्य स्वञ्च निज प्रोक्तम्, अने

**नितम्ब**—नितम्ब. स्कन्धरोधसोः । स्त्रिया. पश्चात्कटितटे कटके कटिमात्रके, मे. नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरके, वि. नितम्बः कटिरोधसोः। स्त्रियाः पश्चात्कटौ सानौ, हे.

**नित्य**—नित्य स्यात्सन्ततेऽपि च । शाश्वते त्रिषु, मे. नित्यन्तु सतते ध्रुवे, वि. नित्यं सते ध्रुवे, हे नित्ये सततशाश्वते, त्रि.

**निदाघ**—निदाघो ग्रीष्मकाले स्याद् उष्णस्वेदाम्बुनोरपि, मे., वि. प्रस्वेदोऽपि निदाघ स्यान्निदाघो ग्रीष्म उच्यते, ग्रने निदाघौ स्वेदतापौ च, त्रि. v. घर्म

**निदान**—निदानं कारणे वत्सदामादिकारणक्षये, मे. निदानं कारणे रोगनिर्णये वत्सदामनि, वि निदानं कारणे शुद्धौ तपस. फलयाचने । वत्सदाम्न्यवसाने च, हे. निदानमवसानेऽपि, ह.

**निदेश**—निदेश शासनोपान्तभाषणेषु प्रयुज्यते, वि. निदेशः शासनेऽपि स्यात् कथनोपान्तयोरपि, मे निदेश स्यादुपकण्ठे शासने परिभाषणे, हे.

**निधन**—निधन स्यात् कुले नाशे, मे , वि निधन कुलनाशयो., हे., अ.

**निधुवन**—भवेन्निधुवन कम्पे सुरते च नपुसकम्, मे. निधुवनं सुरते कम्पनेऽपि च, वि निधुवनं रते कम्पे, हे

**निन्दा**—निन्दा स्यादपराधेऽपि कुत्सायामपि योषिति, मे. निन्दापवादे कुत्सायाम्, वि निन्दा कुत्सापवादयो , हे.

**निपाक**—निपाक पचने स्वेदेऽप्यसत्कर्मफलेऽपि च, वि. निपाकः पचने स्वेदासत्कर्मफलयोरपि, हे

**निभ**—निभस्तु कथितो व्याजे पुंलिङ्ग सदृशे त्रिषु, मे. निभो व्याजसदृशयोः, वि. निभः स्यात् सदृशे व्याजे, हे. सदृशव्याजयोर्निभः, त्रि.

**निमित्त**—निमित्तं हेतुलक्ष्मणोः, मे., वि., हे., अ. निमित्तं हेतुचिह्नागन्तुदेवादेशपर्वसु, त्रि.

**निमिष, निमेष**—निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने, मे., त्रि. निमेषनिमिषौ नेत्रमीलने कालभिद्यपि, हे

**निम्ब**—निम्ब. स्यात् पिचुमर्देऽपि तिक्तके च चिरायते, त्रि

**नियति**—नियतिर्नियमे दैवे, मे , वि. नियती दैवसयमौ, हे.

**नियम**—नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते, मे. नियमो यन्त्रणाया स्यात् प्रतिज्ञायाञ्च सयमे, वि नियम. स्यात् प्रतिज्ञाया निश्चये यन्त्रणे व्रते, हे. नियमो निश्चये व्रते । यन्त्रणाबन्धयोश्च, त्रि.

**नियामक**—नियामक कर्णधारे पोतवाहे नियन्तरि, मे, वि नियामको नियन्तरि। पोतवाहे कर्णधारे, हे नौवाहे स्यान्नियामक। सभ्ये गुरौ च, त्रि

**निर्**—निर्निर्णयनिषेधयो, मे निर्निश्चये क्रान्ताद्यर्थे निर्निःशेषनिषेधयो, वि निर्निश्चये क्रान्ताद्यर्थे विशेषप्रतिषेधयो, हे निर्निश्चयनिषेधयो, अ

**निरसन**—निरसन वधे प्रतिक्षेपे। निष्ठीवने, मे निरसन निरासे स्याद्वधे निष्ठीवनेऽपि च, वि निरसन निमूदने। निष्ठीवने निरासे च, हे

**निरस्त**—निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते। सन्त्यक्ते च प्रतिहते, मे निरस्त प्रेषितेषौ स्यान्निष्ठ्यूते त्वरितोदिते। सन्त्यक्ते च प्रतिहते, वि निरस्त प्रेषितशरे सन्त्यक्ते त्वरितोदिते। निष्ठ्यूते प्रतिहते च, हे

**निराकृति**—निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे। स्त्रियाम्, मे निराकृति प्रतिक्षेपेऽप्यस्वाध्यायेऽप्यनाकृतौ, वि निराकृतिरस्वाध्याये निराकारनिषेधयो, हे अस्वाध्याये कुरूपे च प्रत्युक्तौ स्त्री निराकृति, नि

**निरामय**—निरामयस्तु पुंसि स्यादिडिक्के त्रिषु नीरुजि, मे निरामयोऽन्यवत् कल्ये स्यादिडिक्के निरामय, वि निरामयस्तु स्यादिडिक्के गतामये, हे

**निरूपण**—निरूपण स्यादालोके विचारे च निदर्शने, मे, वि निरूपण विचारावलोकनयोर्निदर्शने, हे

**निरूह**—निरूहो वस्तिभेदे स्यादूहशून्ये च निश्चिते, मे निरूहो वस्तिभेदे स्यात्तर्कनिश्चितयोरपि, वि निरूहो निग्रहे तर्के वस्तिभेदे, हे

**निरोध**—निरोधो नाशरोधयो, मे, हे निरोधो रोधनाशयो, वि

**निर्ऋति**—निर्ऋति स्यादलक्ष्म्या स्त्री दिशा पालान्तरे पुमान्, मे निर्ऋति स्यादलक्ष्म्या च दिक्पाले निरुपद्रवे, वि निर्ऋतिर्निरुपद्रवे। अलक्ष्म्या दिक्पतौ चापि, हे

**निर्गुण्डी**—निर्गुण्डी नीलशेफाल्या सिन्धुवारद्रुमेऽपि च, मे निर्गुण्डी सिन्धुवारक। नीलशेफाल्यब्जकन्द, हे निर्गुण्डी सिन्धुवारके। नीलशेफालिकायाञ्च करहाटे च कुत्रचित्, वि

**निर्ग्रन्थ**—निर्ग्रन्थो नग्नकेऽपि स्यान्नि स्ववालिशयोरपि, मे, वि निर्ग्रन्थो नि स्वमूर्खयो। श्रमणे च, हे

**निर्ग्रन्थक**—निर्ग्रन्थक स्यात्क्षपणे निष्फलेऽप्यपरिच्छदे, मे निर्ग्रन्थक स्यात्क्षपणे निष्फलेऽप्यपरिग्रहे, वि

**निर्जर**—निर्जर स्यात्पुमान् देवे जरात्यक्ते च वाच्यवत्। निर्जरा तु गुडूच्याञ्च तालपर्ण्यामपि स्त्रियाम्, मे निर्जरस्तु जरात्यक्ते वाच्यवन्निर्जर

सुरे। निर्जरा तु गुडुच्या स्यात्तालपत्र्यामपि क्वचित्, वि निर्जरो निर्जरे सुरे। निर्जरा तु तालपत्र्या गुडुच्या तत्त्वभिद्यपि, हे गुडुच्यामपि निर्जरा, त्रि

**निर्दट**—निर्दटस्तु दयाशून्ये कथितो निष्प्रयोजने। परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते, मे निर्दटो निर्दये स्मृत । परापवादसरक्ते निर्दटो निष्प्रयोजने, वि निर्दटो निष्प्रयोजने। निर्दयेऽन्यदोषरते, हे

**निर्दर, निर्वर**—निर्दर निर्भरे सारेऽन्यवत् तु कठिनेऽत्रपे, मे निर्वर सारे निर्भरे कठिनेऽत्रपे, वि निर्वरस्तु गतत्रपे। कठिने निर्भरे सारे, हे

**निर्देश**—निर्देश शासनेऽपि स्यात्कथनोपान्तयोरपि, मे निर्देश कथनाज्ञयो , हे

**निर्नर**—निर्नरोऽर्काश्वे तुषाग्नौ ह निर्नरस्तु सहस्राशुतुरङ्गे तुषपावके, वि मे

**निर्भर्त्सन**—निर्भर्त्सन खलीकारेऽलक्तकेऽपि नपुसकम्, मे निर्भर्त्सन खलीकारेऽलक्तके च वि निर्भर्त्सनमलक्तके। खलीकारे, हे निर्भर्त्सन खलीकारालक्तयो , त्रि

**निर्मल**—निर्मल स्यात्तु निर्माल्य चाभ्रक च नपुसकम्। मलहीनेऽन्यलिङ्गञ्च, म निर्मल विमल विद्यान्निर्माल्याभ्रकयोरपि, वि निर्मल विमलेऽभ्रके। निर्माल्ये च ह

**निर्माण**—निर्माण निर्मितौ सारे समञ्जसे नपुसकम्, मे निर्माण निर्मितौ सार निर्माणञ्च समञ्जसे वि निर्माण सारनिर्मित्यो कर्मभेदे समञ्जसे, हे

**निर्मुट**—निर्मुट खर्पर सूर्ये, हा v हर्मुट

**निर्मुक्त**—निर्मुक्तस्त्यक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि, मे, वि निर्मुक्तो मुक्तनिर्मोकभुजङ्गे निष्परिग्रहे, हे

**निर्मोक**—निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके, मे निर्मोका मोक्षके व्योम्नि सन्नाहे सर्पकञ्चुके, वि निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकञ्चुके, हे

**निर्याण**—निर्याण वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे, मे निर्माण वारणापाङ्गदेशे मोक्षे च निर्गमे, वि निर्याण निर्गमे मोक्षे गजापाङ्गप्रदेशयो , हे

**निर्यातन**—निर्यातन वैरशुद्धौ दाने न्यासार्पणेऽपि च, मे, अ निर्यातन वैरशुद्धौ दाने न्यासार्पणे मतौ वि निर्यातन वैरशुद्धौ दाने न्याससमर्पणे, हे

**निर्यूह**—निर्यूह शेखरे द्वारे निर्यास नागदन्तके, वि, मे निर्यूहो द्वारि निर्यासे शेखरे नागदन्तके, हे v निर्व्यूह

**निर्वर**—v निर्दर

**निर्वाण**—निर्वाणमस्तंगमने निर्वृतौ गजमज्जने। सङ्गमेऽप्यपवर्गे च, मे. निर्वाणमस्तंगमने निर्वृतौ गजमज्जने। अपवर्गे च, वि. निर्वाणं मोक्षनिर्वृत्योर्विश्रान्ते करिमज्जने, हे. अथ मज्जने। निर्वाण निर्वृतौ मोक्षे, त्रि.

**निर्वाद**—निर्वादः स्याल्लोकवादे परिनिष्ठितवादयोः, मे. निर्वादः स्यात्परीवादे परिनिष्ठितवादयो., वि. निर्वादस्तु लोकवादेऽपवादे हे. निर्वादो जनवादेऽपि, अ.

**निर्वासन**—निर्वासनं हिंसने स्यान्नगरादेर्वहिष्कृतौ, मे. निर्वासन हिंसने च नगरादेवहिष्कृतौ, वि. निर्वासनन्तु मारणे पुरादेशश्च वहिष्कारे, हे.

**निर्वृति**—निर्वृतिः। मोक्षे मृत्यौ सुखे सौस्थ्ये, हे. निर्वृति सुस्थताया स्यादस्त गमनसौख्ययोः, वि. निर्वृतिः सुस्थितावस्तंगमने च सुखे स्त्रियाम्, मे निर्वाणे सुस्थितत्वे च निवृति., त्रि.

**निर्व्यूह**—द्वार्यापीडे क्वाथरसे निर्व्यूहो नागदन्तके, अ. निर्व्यूहो निर्गतापीडनिर्यासद्वारभूमिषु, अने. *v.* निर्यूह.

**निर्वेश**—निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च, मे. निर्वेशो मूर्च्छने भोगे निर्वेशो वेतनेऽपि च, वि. निर्वेश उपभोगे स्यान्मूर्छने वेतनेऽपि च, हे निर्वेशो भूतिभोगयोः, अ.

**निवात**—निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये, मे. निवातो दृढसन्नाहे वातान्ते चाश्रयेऽपि च, वि. निवातो वातरहिते दृढसन्नाह आश्रये, हे. निवातावाश्रयावातौ शस्त्राभेद्यञ्च वर्म यत्, अ. निवातमाश्रय विद्यादभिन्न कवचं तथा, अने.

**निवेश**—निवेशः पुंसि विन्यासे शिविरोद्वाहयोरपि, मे. निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्तित., वि. निवेशः सैन्यविन्यासे शिविरोद्वाहयोरपि, हे.

**निशमन**—निशमनमुक्तं दृष्टौ श्रुतौ, मे. श्रुतौ दृष्ट्यां निशमनम्, त्रि. निशमन श्रुतौ दृष्टौ, वि. v. निशामन.

**निशा**—निशा दारुहरिद्राया स्यात् त्रियामाहरिद्रयोः, मे., वि. निशा रात्रौ हरिद्रायाम्, हे. निशा रात्रिर्हरिद्रा च, त्रि.

**निशाचर**—निशाचरस्तु रक्षसि। फेरुपेचकसर्पेषु पांशुलाया निशाचरी, मे. निशाचरः पेचकाहियातुधानेषु फेरवे। निशाचरी पांशुलायाम् वि. निशाचरस्तु राक्षसः। सर्पे घूके सृगाले च। निशाचरी तु पांशुला, हे. पांशुला च निशाचरी, त्रि.

**निशान्त**—निशान्तं त्रिषु शान्ते स्यात्क्लीवन्तु भवनोषसोः, मे. निशान्तं सदने शान्ते प्रभातेऽपि, हे. निशान्तः कथितः शान्ते निशान्तं भवनोषसोः, वि.

**निशामन**—निशामन दर्शने स्यादालोचने न द्वयो, मे दृष्ट्यालोचे निशामनम्, वि निशमननिशामने। निरीक्षणश्रवणयो, हे

**निशीथ**—निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके, मे निशीथोऽप्यर्द्धरात्रे स्यान्निशीथो रात्रिमात्रके, वि निशीथस्तु रात्रिमात्रार्धरात्रयो, हे

**निश्चारक**—निश्चारक पुरीषस्य क्षये स्वैरे समीरणे, मे, वि निश्चारक समीरणे। पुरीषस्य क्षये स्वैरे, हे

**निषङ्ग**—निषङ्ग सङ्गते तूणे, मे निषङ्ग सङ्गतूणयो, वि, त्रि निषङ्ग-स्तूणसङ्गयो, हे

**निषद्वर**—निषद्वरस्तु जम्बाले निशायान्तु निषद्वरा, मे निषद्वरस्तु जम्बाले निशायाञ्च निषद्वरी, वि निषद्वर स्मरे पङ्के निषद्वरी पुनर्निशि, हे

**निषध**—निषध कठिने देशे तद्राजे पर्वतान्तरे, मे निषध कठिने देशे तद्राजे च नगान्तरे, वि निषधस्तु पर्वते कठिने स्वरे। देशतद्राजयोश्चापि, हे

**निषाद**—निषाद स्वरभेदे स्याच्चण्डाले धीवरान्तरे, मे निषाद श्वपचे स्वरे, वि, हे निषादौ श्वपचस्वरौ, त्रि

**निष्क**—निष्कमस्त्री साष्टहेमशते दीनारकर्षयो। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, मे निष्क कर्षे हेमनि तत्पले। दीनारे साष्टसुवर्णशते वक्षोविभूषणे, हे निष्कमष्टाधिकस्वर्णशते दीनारकर्षयो। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, वि साष्टे शते सुवर्णाना हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री, अ पलमण्डनयोर्निष्को निष्को दीनाररुक्मयो, अने

**निष्कल**—निष्कलस्तु कलाशून्ये नष्टवीर्य्ये च वाच्यवत्, मे निष्कलस्तु नष्टवीजे कलोज्झिते, हे निष्कलस्तु कलाशून्ये नष्टवीजे तु वाच्यवत्, वि

**निष्काशित**—निष्काशितो निर्गमितेऽप्याहिते धिक्कृतेऽपि च, मे, वि

**निष्कुट**—निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयो, मे, वि निष्कुटो गृहवाटिका। केदारक कपाटश्च, हे कपाटेऽपि च निष्कुट। कोटरेऽपि, त्रि गृहवाद्याञ्च निष्कुट, ह

**निष्क्रम**—निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च, मे, वि निष्क्रमो दुर्गमे बुद्धिसम्पत्तौ दुष्कुलेऽपि च, हे

**निष्ठा**—निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च, मे, वि निष्ठोत्कर्षव्य-वस्थयो। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते, हे निष्ठा निष्पत्तिनाशान्ता, अ निष्ठा क्लेशेऽवसाने च व्यवस्थोत्कर्षयोर्व्रते, ह

**निष्ठुर**—निष्ठुर कठिनेऽन्नपे, हा

**निष्पाव**—निष्पाव. शूर्पपवने राजमाषे कडङ्गरे। पवने शिम्बिकाया ना निर्विकल्पेऽन्यलिङ्गकः, मे. निष्पाव सूर्पपवने राजमाषे कडङ्गरे। पवने सिम्बिकायां च निष्पावो निर्विकल्पके, वि. निष्पाव. पवने शूर्पपवने निर्विकल्पके। वल्लै कडङ्गरे शिम्ब्याम्, हे. निष्पाव. सूर्पवातेऽपि, हा.

**निस्**—निर्निषेधे च निश्चये। साकल्यातीतयो, मे. निर्निश्चये निषेधे च साकल्यातीतयोरपि, वि. v. निर्.

**निसर्ग**—निसर्गो रूपसर्गयोः, मे निसर्ग. सर्गशीलयो, वि निसर्ग सर्गे स्वभावे, हे.

**निस्तरण**—स्यान्निस्तरणमुपाये निस्तारे तरणेऽपि च, मे. निस्तरणं स्यादुपाये निस्तारे निर्गमेऽपि च, वि. निस्तरणन्तु निस्तारे तरणोपाययोरपि, हे.

**निस्तल**—निस्तलं वर्तुले चले, मे, वि. निस्तलन्तु तले वृत्ते, हे.

**निस्तुषित**—अथ निस्तुषितं त्यक्ते त्वग्विहीने लघूकृते, मे. निस्तुषितं निस्त्वचि स्याद्वर्जिते च लघूकृते, वि. निस्तुषितं वर्जिते स्याद् गतत्वचि लघूकृते, हे.

**निस्त्रिंश**—अथ निस्त्रिंशः खड्गे ना निर्दये त्रिपु, मे. निस्त्रिंशो निर्दये खड्गे, वि. निस्त्रिंशो निर्घृणे खड्गे, हे. निस्त्रिशौ खड्गनिर्दयौ, त्रि. निस्त्रिंशौ खड्ग-पापिष्ठौ, अने. निस्त्रिशोऽकरुणेऽपि च, हा

**निह्नव**—निह्नव पुसि निकृताववश्वासापलापयो, मे. निह्नवं निकृतौ विद्यादविश्वासापलापयो, वि. निह्नव स्यादविश्वासेऽपलापे निकृतावपि, हे अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः, अ.

**नीकाश**—नीकाशो निश्चये तुल्ये, वि., मे, हे.

**नीच**—नीचः पामरे वामनेऽपि च, मे नीचस्तु वामने पामरे स्मृतः, वि. नीच. पामरखर्वयोः, हे. वामने पामरे नीचः, त्रि.

**नीचैस्**—नीचैः स्वैराल्पयोर्मतम्, मे., वि. नीचैः स्वैराल्पनीचेषु, हे.

**नीड**—नीडं स्थानकुलाययोः, मे. नीडं स्थाने कुलाये च सकारपूर्वकोऽन्तिके, वि. नीड स्थाने खगालये, हे.

**नीति**—नीतिर्नयेऽपि स्यात्प्रापणेऽपि च योषिति, मे. नीतिस्तु प्रापणे नये, वि. नीतिर्नये प्रापणे च, हे.

**नीध्र**—नीध्रं नेमौ वलीके द्वौ रेवतीभे च कानने, वि. नीध्रन्तु वलीवनने-मिषु। चन्द्रे च रेवतीभे च, हे. नीध्रं नेमौ वलीके द्वौ रेवतीभेऽपि कानने, मे. वलीकवनयोर्नीध्रम्, त्रि.

**नीप**—नीप कदम्वबन्धूकनीलाशोकद्रुमेषु च, मे नीपो धूलिकदम्बे स्यान्नीलाशोके च धन्विनि, वि

**नीरज**—नीरज कुष्ठपद्मयो, मे नीरज कमले कुष्ठे वि त्रि नीरज पद्मकुष्ठयो, हे

**नील**—नीलन्तु नीलीरक्ते ना निध्यद्रिवानरान्तरे। नीली रुग्भेदनीलिन्यो मे, नील कृष्णे नगान्तरे। नील कपीश्वरे नीली वृक्षलाञ्छनभेदयो वि नीलो वर्णे मणौ शैले निधिवानरभेदयो। नीलौपध्या लाञ्छने च, हे

**नीलकण्ठ**—v कालकण्ठ

**नीलङ्गु, नीलाङ्गु**—नीलाङ्गु स्यात्क्रमौ पुसि भम्भराल्या तु योपिति मे नीलाङ्गु कृमिजातिके। भम्भराल्या प्रसूते च हे नीलगु कृमिभेदे स्याद्भम्भरालीसुसारयो, वि

**नीलाञ्जसा**—नीलाञ्जसाऽप्सरोभेदे सरिद्भेदे च विद्युति, मे नीलाञ्जसाऽप्सरोभेदे सरिद्भेदेऽपि विद्युति वि नीलाञ्जसा नदीभेदेऽप्सरोभेदे तडित्यपि हे

**नीलाम्बर**—नीलाम्वर प्रलम्वघ्ने कौणपे च शनैश्चरे मे नीलाम्बर प्रलम्बघ्ने कौणपे क्रूरलोचने वि नीलाम्बरो वलभद्रे राक्षसे क्रूरलोचन, हे

**नीलिका**—नीलिका नीलिनीक्षुद्रारोगशेफालिकासु च मे नीलिका नीलिनी क्षुद्रारोगशेफालिकास्वपि वि

**नीवर**—स्यान्नीवरो वणिजके वास्तव्ये च पुमानयम मे स्यान्नीवरो वाणिजके वास्तव्येऽपि च नीवर वि नीवरस्तु वास्तव्येऽपि वणिज्यपि, हे

**नीवी**—नीवी परिपणे स्त्रीणा कटीवसनवन्धने, मे नीवी परिपणे ग्रन्थौ स्त्रीणा जघनवासस वि नीवी स्त्रीकटीवस्त्रवन्धने। मूलद्रव्ये परिपणे, हे स्त्रीकटीवस्त्रवन्धेऽपि नीवी परिपणेऽपि च अ नीवी परिपणेऽप्युक्ता ह

**नीहार**—नीहारो हिमशीतयो, अन

**नु**—नु वितर्कावमानयो। विकल्पानुनयातीते प्रश्नहत्वपदेशयो, मे नु प्रश्नेऽनुशये तीर्थे स्याद्विकल्पवितर्कयो हे नु स्यात्प्रश्ने विकल्पार्येऽप्यतीतानुनयार्थयो, वि नु पृच्छाया विकल्पे च अ

**नुचित**—नुचित प्रश्नवितर्कयो ह

**नूनम्**—नूनन्तु निश्चिते तर्के स्मरणे वाक्यपूरणे, मे नून निश्चिततर्कयो, वि नून तर्के निश्चिते च, हे तर्कनिश्चितयोर्नूनम्, ह नून तर्केऽर्थनिश्चये, अ

**नृशस**—पापीयासो नृशसा स्युर्नृशसा वन्दिन स्मृता, अने

**नेत्**—नेद्विकल्पनिषेधयो, मे

**नेत्र**—नेत्र मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्यान्तु नेत्री नेतरि वाच्यवत्, मे नेत्र मथिगुणे वस्त्रे तरुमूले विलोचने। नेत्र रथे च नाडचाञ्च नेत्रो नेतरि वाच्यवत्, वि नेत्र वस्त्रे मथो गुणे। मूलाक्षिनेतृषु, हे स्याज्जटाशुकयोर्नेत्रम्, अ नेत्रो नेतरि नेत्रञ्च गुणे मूले विलोचने, त्रि नेत्र वस्त्रविशेषश्च नेत्र चक्षुरुदाहृतम्। परिवर्तगुणो नेत्रो नेत्र कस्तूरिकामृग, अने नेत्र मूले, ह

**नेपथ्य**—नेपथ्य स्यादलङ्कारे रङ्गज्याया नपुसकम्, मे नेपथ्य रङ्गभूमौ स्यान्नेपथ्यञ्च प्रसाधने, वि

**नेम**—नेम कालेऽवधौ खण्डे प्राकारे कैतवेऽपि च, मे नेम कालेऽवधौ गर्ते प्राकारे कैतवेऽपि च, वि नेमस्त्वर्द्धे प्राकारगर्तयो। अवधौ कैतवे काले, हे

**नेमि**—नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयो स्त्रियाम्, मे नेमिस्त्रिकाया कूपस्य चक्रान्ते तिनिसद्रुमे, वि नेमि कूपत्रिका प्रधि। तिनिशोऽरिष्टनेमिश्च, हे

**नैगम**—नैगम स्यादुपनिषद्वणिजोर्नागरेऽपि च, मे, वि नैगमो नयपौरोपनिषद्वृतिषु वाणिजे, हे नागरो वणिक्। नैगमौ द्वौ, अ

**नैपाली**—नैपाली तु नवमालीकुनटीसुवहासु च, मे नैपाली नवमालीमन शिलासुवहासु च, वि नैपाली मन शिला स्यात्सुवहा नवमाल्यपि, हे

**न्यच्(ञ्च्)**—न्यड नीचनिम्नयो, मे न्यड् निम्ने नीचकात्स्न्ययो, हे न्यड नीचे निम्नकात्स्न्ययो, वि

**न्यक्ष**—न्यक्ष परशुरामे स्यान्न्यक्ष कार्त्स्न्यनिकृष्टयो, वि न्यक्ष कार्त्स्न्यनिकृष्टयो। जामदग्न्येऽपि, हे न्यक्ष कार्त्स्न्यनिकृष्टयो अ न्यक्ष कार्त्स्न्ये तृणेऽपि च। क्लीबेऽथ पुसि महिषे निकृष्टे पुनरन्यवत्, मे

**न्यग्रोध**—न्यग्रोधस्तु पुमान् व्यामवटयोश्च शमीतरौ। न्यग्रोधी तूपचित्रायाम्, मे न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ। न्यग्रोधी विषपर्ण्याञ्च मोहनाख्यौषधावपि, वि न्यग्रोधो वटपादपे। शम्या व्यामे न्यग्रोधी तु मोहनाख्यौषधीभिदि। वृषपर्ण्याम्, हे व्यामो वटश्च न्यग्रोधौ, अ न्यग्रोधौ वटव्यामुकौ, अने,

**न्यङ्कु**—न्यकुर्मुनौ मृगे पुसि, मे न्यकुर्मृगे मुनौ, हे न्यकुर्मृगे ऋषौ, वि

**न्युब्ज**—न्युब्जो दर्भमये स्रुचि। कर्मरङ्गफले क्लीव कुब्जाधोमुखयोस्त्रिषु, मे न्युब्जन्तु कर्मरङ्गे स्यानुचब्ज प्रोक्त कुशस्रुचि। अधोमुखे च कुब्जे च न्युब्जो वाच्यवदिष्यते, वि न्युब्ज कुब्जे कुशस्रुचि। अधोमुखेऽपि च न्युब्ज कर्मरङ्गतरो फले, हे

भिदि। आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी, वि. पक्षिणी पूर्णिमाखग्यो. शाकिनीरात्रिभेदयोः, हे.

**पक्ष्मन्**—पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि, मे., वि. पक्ष्माक्षिलोम्नि तन्त्वादिसूक्ष्मांशे कुसुमच्छदे। गरुत्किञ्जल्कयोश्चापि, हे. पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि, अ.

**पङ्क**—पङ्कोऽस्त्री कर्दमे पापे, मे पङ्कः कर्दमपापयो , वि पङ्कोऽघे कर्दमे, हे. पङ्कोऽस्त्री कर्दमाहसोः, त्रि.

**पङ्कार**—पङ्कारः शैवले सेतौ सोपाने जलकुब्जके, मे., वि , हा. पङ्कारो जलकुब्जके। सोपाने शैवले सेतौ, हे.

**पङ्किल**—पादालिन्देऽपि पङ्किलः, हा.

**पंक्ति**—पंक्तिर्दशाक्षरच्छन्दोदशसंख्यालिपु स्त्रियाम्, मे. पक्तिर्दशाक्षरच्छन्दोदशसंख्यावलीष्वपि, वि पंक्तिश्छन्दःश्रेण्योः, हे. पक्तिश्छन्दोऽपि दशमम्, अ. श्रेणिर्दश च पक्तिः स्यात्, त्रि.

**पञ्चगुप्त**—पञ्चगुप्तस्तु चार्वाकदर्शने कमठेऽपि च, वि. पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान्, मे. पञ्चगुप्तश्चार्वाकदर्शने। कमठे, हे.

**पञ्चता**—पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति, मे., वि. पञ्चता पञ्चभावे स्यात्पञ्चता मरणेऽपि च, हे.

**पञ्चत्व**—पञ्चत्वं पञ्चानां भावे प्राणानामत्ययेऽपि च, मे. पञ्चत्वं निधनं स्मृतम्। पञ्चानामपि भावे च, वि पञ्चत्वं भावे पञ्चाना प्राणानामत्ययेऽपि च, हे.

**पञ्चदशी**—पञ्चदशी त्वमावास्यापौर्णमास्योश्च योषिति, मे. भवेत् पञ्चदशी पौर्णमास्यमावास्ययोरपि, वि.

**पञ्चनख**—पञ्चनखो गजे कूर्मे, वि. पञ्चनखस्तु कच्छपे। गजे, हे. कूर्मे पञ्चनखो गजे, त्रि.

**पञ्चम**—पञ्चमो रागभेदे स्यात्स्वरभेदे च पञ्चमी। पाण्डवानाञ्च पत्न्या स्त्री पञ्चाना पूरणे त्रिपु, मे. पञ्चमो रागभेदे स्यात्पञ्चानामपि पूरणे। पञ्चमश्चतुरे हृद्ये पञ्चमी पाण्डवस्त्रियाम्, वि. पञ्चमो रुचिरे दक्षे पञ्चानामधिपूरणे। रागभेदे पञ्चमी तु द्रौपद्याम्, हे. पञ्चमः स्वरसख्ययोः, त्रि.

**पञ्चानन**—पञ्चाननः शिवे सिंहे, मे., वि., हे.

**पञ्चाली**—पञ्चाली पुत्रिकागीत्योः स्त्रिया पुभूम्नि नीवृति, मे. पञ्चाली पुत्रिकागीत्योः पञ्चालो जनदेशयोः, वि. पञ्चालो नीवृदन्तरे। पञ्चाली पुत्रिकागीत्योः, हे.

**पतङ्ग**—पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः, मे, शा. पतङ्ग शलभे शालिप्रभेदे विहगे रवौ, वि. पतङ्गः सूर्यपक्षिणोः। पारदे शरभे शालौ, हे. पतङ्गौ पक्षिसूर्यौ च, अ. पतङ्गः शलभे रवौ, त्रि. पतङ्गौ शलभादित्यौ, अने.

**पतत्**—पतन्पातुके खगे, मे. पतन्पातुकपक्षिणो., वि.

**पताका**—पताका वैजयन्त्याञ्च सौभाग्यनाटकाङ्कयो, मे पताकाङ्के ध्वजे केतौ सौभाग्ये नाटकांशके, हे. पताका वैजयन्त्याञ्च सौभाग्येऽङ्के ध्वजेऽपि च, वि.

**पति**—पतिर्धवे ना त्रिष्वीशे, मे. पतिः प्रभौ गतौ मूले, वि.

**पत्ति**—पत्तिर्ना पदगे स्त्रियाम्। गतावेकरथैकेभत्र्यश्वपञ्चपदातिके, मे. पत्तिः पदातौ गमने वीरसैन्यप्रभेदयोः, वि. पत्तिः सेनाभित्पद्गयोर्मता, हे. पत्तिर्गतौ च, अ.

**पत्र**—पत्रन्तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः, मे. पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणाम्, वि. पत्रं यानं पक्षश्छदश्छुरी, हे. पत्रं वाहनपक्षयो., अ. पादत्राणे दले पक्षे लेख्यवस्तुनि पत्रवाक्, अने.

**पत्राङ्ग**—पत्राङ्गो न द्वयोर्भूर्जे पद्मके रक्तचन्दने, मे. पत्राङ्ग पद्मके भूर्जे पत्राङ्गं रक्तचन्दने, वि. पत्राङ्गं रक्तचन्दने। भूर्जपद्मकयोश्चापि, हे.

**पत्रिन्**—पत्री श्येने पत्ररथे काण्डद्रुरथिकाद्रिषु, मे. पत्री काण्डे खगे द्रुमे। रथेऽद्रौ रथिके श्येने, हे. पत्रिणौ शरपक्षिणौ, अ. श्येनाख्यो विहग. पत्री पत्रिणौ शरपक्षिणौ, शा.

**पत्रोर्ण**—पत्रोर्णं धौतकौशेये क्लीवं स्याच्छोणके पुमान्, मे. पत्रोर्णं धौतकोशेये पत्रोर्णः शोणकेऽपि च, वि. पत्रोर्णं धौतकौशेये स्यात्पत्रोर्णस्तु शोणके, हे

**पथ्या**—पथ्या स्त्री हरीतक्यां हिते त्रिषु, मे. पथ्यं हिते हरीतक्यां पथ्या, वि. पथ्यं हितं पथ्या हरीतकी, हे. पथ्यं हितेऽभया पथ्या, त्रि.

**पद**—पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः, वि., मे. श्लोकपादेऽपि च क्लीवं पुलिङ्गः किरणे पुनः, मे. पदं स्थाने विभक्तयन्ते शब्दे वाक्यैकवस्तुनोः। त्राणे पादे पादचिह्ने व्यवसायापदेशयोः, हे. पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु, अ. वाक्ये शब्देऽपदेशे च, त्रि. व्यवसाये परित्राणे पदं पञ्चिह्नयोरपि। वर्त्मस्थानापदेशेषु पदं स्याद्वाक्यशब्दयोः, शा.

**पदार**—पदारः पादधूलौ स्यात्पादालिन्देऽपि पुंस्ययम्, मे. पदारः पादधूलिषु। पादालिन्दे, हे., वि.

**पद्धति**—पद्धतिः पंक्तिवर्त्मनोः, मे., वि. पद्धतिः पथि पंक्तौ च, हे. अथ पद्धतिः पंक्तौ मार्गे च, त्रि.

**पद्म**—पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे। ना नागे स्त्री फञ्जिकाश्रीचारटीपन्नगीषु च, मे पद्म स्यात्पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे। पद्मके विन्दुजालेऽपि पद्मा भार्गीश्रियोरपि, वि पद्मो व्यूहे निधावहौ। सङ्ख्याब्जयो पद्ममिभविन्दौ, हे पद्मोऽस्त्री विन्दुजालेऽब्जे व्यूहे सङ्ख्यान्तरे निधौ, त्रि पद्मा लक्ष्मीर्निधि पद्म पद्मानि गजविन्दव। सङ्ख्यागणविशेषौ च पद्मौ पद्म सरोरुहम्, शा v मोक्ष

**पद्मक**—पद्मक स्यात्पद्मकाष्ठविन्दुजालकयोरपि, मे, हे पद्मक पद्मकाष्ठेभविन्दुजालकयोरपि, वि

**पद्मलाञ्छन**—स्यात्पद्मलाञ्छनो लोकेश्वरे ब्रह्मणि भास्करे। धनदे च स्त्रिया तारालक्ष्मीवाग्देवतासु च, मे स्यात्पद्मलाञ्छनाभिख्या विधौ लोकेश्वरार्कयो। धनदे च सरस्वत्या तारालक्ष्म्योरपि स्मृता, वि पद्मलाञ्छनो धनदे लोकेशे रविवेधसो। पद्मलाञ्छना ताराया सरस्वत्या श्रियामपि, हे

**पद्मिनी**—पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोरुहे, मे पद्मिनी स्त्रीविशेषे स्यात्सरस्यामम्बुजेऽपि च वि पद्मिनी योषिदन्तरे। अब्जेऽब्जिन्या सरस्याञ्च, हे

**पद्य**—पद्य श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्तिता, मे पद्य श्लोके सृतौ पद्या पद्य शूद्र निगद्यते, वि पद्योऽन्त्यवर्णे स्यात्पद्य श्लोके पद्या तु वर्त्मनि, हे

**पनस**—पनस कण्टकिफले कण्टके वानरान्तरे। स्त्रिया रोगप्रभेदे स्यात्, मे पनस कण्टकिफले कण्टके कपिरग्भिदो, वि पनस कपिरग्भिदो। कण्टके कण्टकिफले, हे

**पन्नग**—पन्नगश्चौषधीभेदे तथैव पवनाशने, मे पन्नगस्तु पद्मकाष्ठे भुजङ्गमे, हे पन्नग पद्मकाष्ठे स्यात्पन्नगोऽपि भुजङ्गमे, वि

**पयस्**—पय स्यात्क्षीरनीरयो, मे, वि पय क्षीरे च नीरे च, हे पय क्षीर पयोऽम्बु च, अ पय क्षीर पयो जलम् अने

**पयस्य**—पयस्यन्तु पयोजातहितयोर्वाच्यलिङ्गकम्। दुग्धिका क्षीरकाकोल्यो स्वर्णक्षीर्यामपि स्त्रियाम्, मे पयस्या क्षीरकाकोल्या पयोहितभवेऽन्यवत्। पयस्या दुग्धिकायाञ्च स्वर्णक्षीर्याञ्च कथ्यते, वि पयस्यन्तु पयोभवे। पयोहिते पयस्या तु काकोली दुग्धिकापि च, हे

**पयस्विनी**—पयस्विनी नदीधेन्वोर्विभावर्याञ्च योषिति, मे पयस्विनी तु गोधेन्वा विभावर्या पयस्विनी, वि पयस्विनी। विभावर्यां गोधेन्वाञ्च, हे

**पयोधर**—पयोधर कोषकारे नालिकेरे स्तनेऽपि च। कशेरुमेघयो पुंसि,

में पयोधर स्यात्कुचकोपकारकसेरुकाम्भोधरनारिकेले, वि पयोधर कुचे मेघे कोपकारे कशेरुणि। नारीकेरे, हे स्त्रीस्तनाब्दौ पयोधरौ, अ स्तनमेघौ पयोधरौ, अने

**पर**—पर श्रेष्ठारिदूरान्योत्तरे क्लीबन्तु केवले, मे पर स्यादुत्तमानात्मवैरिदूरेषु केवले। परमव्ययमिच्छन्ति, वि परो दूरान्यश्रेष्ठशत्रुषु। परन्तु केवले हे दूरानात्मोत्तमा परा, अ पर नियोगे क्षेपे च, मे

**परञ्ज**—परञ्जस्तैलयन्त्रे स्यात्क्षुरिकाफलफेनयो, मे परञ्जस्तैलयन्त्रके। फेन च करवाले च परञ्ज क्षुरिकाफले, वि परञ्जोऽसौ तैलयन्त्रे क्षुरिकाफल फेनयो, हे खड्गधेनुफले फेने परञ्जस्तैलयन्त्रके, हा

**परपुष्ट**—परपुष्ट परभृते वारनार्यान्तु योषिति मे परपुष्ट परभृते परपुष्टा पणस्त्रियाम्, वि परपुष्ट कलकण्ठे परपुष्टा पणाङ्गना हे

**परम**—परम स्यादनुज्ञायामव्यय परम परे, म परम स्यादनुज्ञानऽप्यव्यय परम परे। परम *स्यात्प्रधानाद्योरोङ्कारेऽपि तयोच्यते, वि परम परे। अग्रे-*सरप्रथमयोरोङ्कारे परम पुन। स्यादव्ययमनुज्ञायाम्, हे

**परम्पर**—परम्परो मृगभेदे प्रपौत्रे तनयस्य च। परम्परा परीपाटचा हिसा सन्तानयोरपि, मे परम्पर प्रपौत्रादौ मृगभद परम्पर। परम्परा परीपाटचा सन्तानेऽपि वधे क्वचित्, वि परम्पर। मृगभदे प्रपौत्रादौ परम्परान्वये वधे। परीपाट्याम्, हे

**परवाणि**—परवाणि पुमान्धर्माध्यक्षवत्सरयोरपि मे परवाणि स्मृतो धर्माध्यक्षवत्सरयोरपि, वि परवाणिर्धर्माध्यक्ष वर्षे, हे

**परा**—परा विमोक्षप्राधान्यप्रातिलोम्येषु धर्षणे। आभिमुख्ये भृशार्थे च विक्रमे च गतौ वधे, मे, वि पराभिमुख्ये प्राधान्ये विमोक्षप्रातिलोम्ययो। गति-धर्षणशुण्ठ्यासु(?) भृशार्थे विक्रमेऽपि च हे

**पराक**—पराकस्तु व्रते खड्गे, मे पराको व्रतखड्गयो, वि, त्रि

**पराक्रम**—पराक्रमो विक्रमे स्यात्सामर्थ्योद्योगयोरपि, मे, वि पराक्रमस्तु विक्रमे। सामर्थ्ये चाभियोगे च, हे शौर्योद्योगौ पराक्रमौ, अ वीर्योद्योगौ पराक्रमौ, अने

**पराग**—पराग सुमनोरेणौ धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने, मे परागश्चन्दने रेणौ गिरौ स्यात्युपरागयो। स्नानीयपुष्परजसो, हे पराग कौसुमे रेणौ स्नानीयादौ रजस्यपि, अ रजस्यपि पराग इ पुष्परेणौ पराग स्यात्स्नानीयरजसोरपि, शा पराग पुष्परजसि धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने, वि

**पराभव**—पराभव । तिरस्कारे विनाशे च पुसि, मे पराभवस्तिरस्कारे विनाशे च पराभव , वि पराभवस्तिरस्कारे नाशे, हे

**परायण**—परायणमभीष्टे स्यात्तत्पराश्रययोरपि, मे , वि परायण स्यादभीष्टे तत्पराश्रययोरपि, हे परायण रिपो स्थान तत्परश्च परायण , अने

**परि**—परि स्यात्सर्वतोभावे वर्जने व्याधिशोकयो । इत्थम्भूताख्यानभागवीप्सालिङ्गनलक्षणे । दोपाख्याने निवसने पूजाव्याप्त्योश्च भूपणे, मे परि स्यात्सर्वतोभावे वर्जने लक्षणादिपु । पूजालिङ्गनवीप्सासु भूपणे व्याधिशोकयो । दोपारयानेऽप्युपरमे व्याप्तौ निवसनेऽपि च, वि परि व्याधावुपरमे वर्जने लक्षणादिपु । आलिङ्गने च शोके च पूजाया दोपकीर्तने । भूपणे सर्वतोभावे व्याप्तौ निवसनेऽपि च, ह

**परिकम्प**—परिकम्पो भये कम्प, मे , वि

**परिकर**—भवत्परिकर सङ्घे पर्यङ्कपरिवारयो । प्रगाढगात्रिकाबन्धे समारम्भविवेकयो मे भवेत्परिकरो व्रात पर्यङ्कपरिवारयो । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि वि परिकर पर्यङ्कपरिवारयो । प्रगाढे गात्रिकाबन्धे विवेकारम्भयोर्गणे, ह परिकर पयङ्कपरिवारयो अ प्रगाढगात्रिकाबन्धे पर्यङ्कपरिवारयो । प्रयुज्यत परिकर समूहारम्भयोरपि, शा

**परिगत**—परिगत त्रिपु प्राप्ते विस्मृतज्ञानचष्टित मे भवेत्परिगत लाभे प्रयाते चेष्टितऽपि च वि परिगत गते लाभचेष्टितयोर्ज्ञाते, हे प्राप्त ज्ञात परिगतम् त्रि

**परिग्रह**—परिग्रह परिजन पत्न्या स्वीकारमूलया । शापे मे, वि परिग्रह परिजने पत्न्या मूले च सग्रहे हे पत्नीपरिजनादानमूलशापा परिग्रहा अ ? परिग्रहो द्विजग्राह्ये सैन्यपृष्ठ परिग्रह । परिग्रहोऽनुबन्धे स्यात्तनद्ग्राहे परिग्रह , अने ? परिग्रह सैन्यपृष्ठभागेऽपि, ह परिग्रह परिजने शपथे च परिग्रह । परिग्रह कलत्रे च मूलस्वीकारयोरपि, शा

**परिघ**—परिघो योगभेदेऽस्त्रविशेपेऽर्गलघातयो , मे परिघो योगभेदे स्यान्मुदगरेऽर्गलघातयो , वि परिघाऽस्त्रयोगभेदे परिघातेऽर्गलेऽपि च, हे परिघ परिघातेऽस्त्रे अ परिघो योगभेदऽपि त्रि परिघ परिघात स्यात्परिघा दण्ड उच्यते अने

**परिघात**—परिघातोऽस्त्रघातयो वि परिघातस्तु घातने। अस्त्रे च हे

**परिघोष**—परिघोषो निनादे स्यादवाच्ये जलदध्वनौ, मे त्रि परिघोष स्यादवाच्ये निनादे जलदध्वनौ हे

**परिज्मन्**—परिज्वा तु पुमानिन्दौ याज्ञिके परिचारके, मे परिज्वा (प्रदृश्वा) ऋतुकर्मज्ञे याज्ञिके परिचारके, वि

**परिताप**—परितापस्तु पुंसि स्याद्दुःखे च नरकान्तरे, मे

**परिधाय**—परिधायो जलस्थाने परिच्छदनितम्बयो, मे, वि परिधाय परिकरे जलस्थाननितम्बयो, हे

**परिधि**—परिधिर्ना यज्ञियद्रुशाखायामुपसूर्यके, मे परिधिर्यज्ञियतरो शाखायामुपसूर्यके, वि, हे, अ शाखायामपि परिधि, ह

**परिप्लव**—परिप्लवश्चञ्चले स्यादाकुलेऽपि परिप्लव, वि v पारिप्लव

**परिभाषण**—परिभाषणमालापे नियमे परिभाषणम्, मे निन्दोपालम्भवचने परिभाषणमिष्यते, वि परिभाषणन्तु जल्पने। नियमे निन्दोपालम्भोक्तौ, हे

**परिमल**—स्यात्परिमलोऽभिमर्दातिमनोहरगन्धयोश्चापि। सुरतोपमर्दविकसच्छरीररागादिसौरभे पुंसि, मे परिमलो विमर्दे च स्यान्मनोहरगन्धवत्। रतोपमर्दविकसद्देहरागादिसौरभे, वि परिमलो विमर्दोत्थे हृद्यगन्धे विमर्दने, हे

**परि(री)वर्त**—परिवर्तो विनिमये कूर्मराजेऽपवर्तने, मे परिवर्तो विनिमये कूर्मराजे पलायने, वि परिवर्तस्तु कर्मराजे पलायिते युगान्ते विनिमये च हे सवर्त परिवर्तश्च हायने, ह

**परिवर्ह**—परिवर्हो राजयोग्यद्रव्यपरिच्छदे, मे परिवर्हस्तु राजार्हवस्तुन्यपि परिच्छदे, वि परिच्छदे नृपार्हेऽर्थे परिवर्ह, अ

**परि(री)वाद**—परिवादोऽपवादेऽपि वीणावादनवस्तुनि, मे परिवाद कलङ्के स्याद्वीणावादनवस्तुनि, वि परिवादस्तु निन्दाया वीणावादनवस्तुनि, हे

**परि(री)वाप**—परिवापस्तु पर्युप्तौ जलस्थाने परिच्छदे, मे, वि परिवापो जलस्थाने पर्युप्तिपरिवारयो, हे परिच्छदे परीवाप पर्युप्तौ सलिलस्थितौ, अ

**परि(री)वार**—परिवार परिजने खड्गकोशे परिच्छदे, मे, वि परिवार परिजनेऽसिकोषे, हे स्याज्जङ्गमे परीवार खड्गकोशे परिच्छदे, अ

**परिवेश**—परिवेशो वेष्टने स्यात्परिधानेऽपि पुंस्ययम्, मे परिवेश परिवृतौ भानो परिधिमण्डले, वि

**परिवेष**—परिवेषस्तु पुलिङ्ग परिधौ परिवेषणे, मे परिवेष परिवृतौ परिधौ परिवेषणे, हे परिवेष विजानीयादुपसूर्यकमण्डलम्। परिवेषणमप्याहु परिवेष मनीषिण, शा

**परिव्याध**—परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले, मे परिव्याधो वेतसे स्यात्परिव्याधो द्रुमोत्पले, वि परिव्याधो द्रुमोत्पले। वेतसे, हे

**परि(री)सर**—भवेत्परिसरो मृत्यौ विधावपि च पुंस्ययम्, मे. स्मृतः परिसरो मृत्यौ देवोपान्तप्रदेशयोः, वि. परिसरः प्रान्तभूदेवयोर्मृतौ, हे.

**परिस्रुत**—परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत्, मे.

**परीरण**—परीरणः स्यात्कमठे दण्डे च पट्टशाटके, मे. परीरणः स्यात्कमठे दण्डे च पटशाटके, वि.

**परि(री)वाह**—परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि, मे., वि.

**परीष्टि**—परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्, मे. परिचर्या परीष्टिः स्यात्परीष्टिश्च गवेषणा, शा.

**परुष**—परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्, मे. परुष कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि, वि., हे. परुष कर्बुरो ज्ञेय परुषं निष्ठुर वच., शा

**परेत**—परेतो वाच्यलिङ्ग स्यान्मृते भूतान्तरे पुमान्, मे. परेतो भूतभेदे स्यात्परेतो वाच्यवन्मृते, वि.

**पर्कटी**—पर्कटी नूतनफले पूगादे· प्लक्षपादपे, मे., वि. स्यात्पर्कटी प्लक्षतरौ पूगादेर्नूतने फले, हे. पर्कटी प्लक्षवृक्षे च पूगादेश्च नवे फले, त्रि.

**पर्जन्य (पर्यन्य)**—सध्वानमेघ पर्जन्य पर्जन्यो मेघवाहन·, शा. पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशत्रयो, मे पर्जन्यो मेघशब्दे स्याद्ध्वनदम्बुदशत्रयोः, वि पर्जन्यो गर्जदम्बुदे। वासवे मेघशब्दे च, हे. पर्जन्यौ रसदब्देन्द्रौ, अ. गर्जन्मेघेऽपि पर्यन्य·, ह.

**पर्ण**—पर्णं पत्रे किंशुके ना, मे. पर्ण स्यात्किंशुके पत्रे, वि. पर्णस्त्रिपर्णे· पर्णन्तु पत्रे, हे.

**पर्पट**—पर्पट पिष्टभेदे स्यात्पर्पटो भेषजान्तरे, मे. पर्पटः पिष्टविकृतौ पर्पटो भेषजान्तरे, वि. पर्पटो भेषजान्तरे। स्याच्चैव पिष्टविकृतौ परीक्षा-परिचर्ययोः, हे.

**पर्परीण**—पर्परीणश्च पर्णस्य शिराया घृतकम्बले। पर्णवृन्तरसेऽपि स्यात्पर्परीणन्तु पर्वणि, मे. पर्परीणन्तु पर्वणि। पर्णवृन्तरसे पर्णशिराया घृतकम्बले, हे. पर्परीणस्तु पर्णस्य शिराया घृतकम्बले। पर्णवृन्तरसेऽपि स्यात्पर्परीणञ्च पर्वणि, वि.

**पर्यस्त**—पर्यस्तः पतिते हते, मे., वि. पर्यस्तन्तु हते स्रस्ते, हे.

**पर्याप्त**—पर्याप्तन्तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे, मे., वि. शक्ते निवारणे तृप्तौ पर्याप्त स्याद्यथेप्सिते, त्रि., शा. पर्याप्तं तु शक्ते तृप्तौ निवारणे यथेष्टे, हे.

**पर्याप्ति**—पर्याप्ति प्रकामप्राप्तिरक्षणे स्त्रियाम्, मे पर्याप्ति स्यात्प्रकामेऽपि प्राप्तौ च परिरक्षणे, त्रि

**पर्याय**—पर्याय प्रकारेऽवसरे क्रमे, मे पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे, वि पर्यायोऽवसरे क्रमे। निर्माणे द्रव्यधर्मे च, हे पर्यायोऽवसरे क्रमे, अ पर्याय स्यात्प्रकारेऽपि, त्रि

**पर्वत**—पर्वत पादपे पुंसि शाकमत्स्यप्रभेदयो। देवमुन्यन्तरे शैले, मे पर्वत शैलदेवर्ष्यो, वि पर्वतो गिरिदेवर्ष्यो, हे

**पर्वन्**—पर्व क्लीव महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदो सन्धौ विपुवत्प्रभृतिष्वपि, मे पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदो सन्धौ विपुवत्प्रभृतिष्वपि, वि पर्व प्रस्तावोत्सवयोर्ग्रन्थौ च विपुवादिपु। दर्शप्रतिपत्सन्धौ च लिथिग्रन्थविशेपयो, हे तिथिभेदे क्षणे पर्व, अ ग्रन्थिप्रस्तावयो पर्व विपुवत्प्रभृतिष्वपि, त्रि दर्शप्रतिपदो सन्धौ ग्रन्थिप्रस्तावयोरपि। पर्वशब्द विजानीयाद्विपुवत्प्रभृतिष्वपि, शा

**पल**—पलमुन्मानमासयो, मे, हे पल चोन्मानमासयो, वि आमिषे पलम्, अ पल मास पल मान पलो मूर्ख पलस्तुला, अने

**पलङ्कप**—पलङ्कपा गोक्षुरके रास्नागुग्गुलुकिंशुके। मुण्डीरीलाक्षयोश्च स्त्री राक्षसे तु (ऽपि, वि) पलङ्कप मे, वि पलङ्कपो यातुधाने पलङ्कपा तु किंशुके। *गोक्षुरे गुग्गुलौ लाक्षारास्नामुण्डीरिकासु च, हे*

**पलल**—पलल तिलचूर्णे च पङ्के मासे नपुंसकम्। ना राक्षसे, मे पलल तिलचूर्णे स्यात्पलल पङ्कमासयो। पललो यातुधाने स्यात्, वि पलल मासपङ्कयो। तिलचूर्णे पललस्तु राक्षसे, हे तिलपिष्टे मले मासे जम्बाले कोमलेऽश्मनि। शवे क्षीरे बले प्राज्ञा पलल परिचक्षते, अने

**पलाश**—पलाश छदने मतम्। शठीकिंशुकरक्ष सु पुंसि स्याद्धरिते त्रिपु, मे पलाश किंशुके शठ्या हरिते राक्षसेऽपि च। पत्रे पलाशम्, वि पलाश किंशुकेऽस्त्रपे। हरिते पलाशपत्रे शासने परिभाषणे, हे वृक्षपत्रे पलाश स्यात्पलाशो राक्षस स्मृत। पलाशो हरितो वर्ण पलाश पाश उच्यते, अने

**पलाशिन्**—पलाशी वृक्षरक्षसो, मे, वि रक्षोवृक्षौ पलाशिनौ, त्रि

**पलिघ**—पलिघ काचकलसे घटे प्राकारगोपुरे, मे, वि, हे

**पलित**—पलित शैलजे तापे केशपाके च कर्दमे, मे पलित शैलजे तापे पाण्डुकेशे च कर्दमे, वि पलित पङ्कतापयो। पक्वकेशे केशपाके, हे पलित कर्दमेऽपि स्यात् त्रि

**पल्यङ्क**—पल्यङ्को मञ्चपर्यङ्कवृषीपर्यस्तिकासु च, मे., वि. पल्यङ्को मञ्च-पर्यस्त्योः, हे. पर्यस्त्यामपि पल्यङ्कः, त्रि.

**पल्ल(ल्लि)**—पल्ल्यल्पग्रामकुट्योः स्त्री पल्लः स्थूलकुसूलके, मे. पल्ली कुटीग्रामकयोः पल्लः स्थूलकुसूलके, वि. पल्लिस्तु ग्रामके कुट्याम्, हे.

**पल्लव**—पल्लवोऽस्त्री किसलये विटपे विस्तरे वने। शृङ्गारेऽलक्तरागेऽस्त्री, मे. पल्लव स्यात्किसलये विटपे विस्तरे बले। शृङ्गारेऽलक्तरागे च, वि. पल्लव किसले बले। विटपे विस्तरेऽलरक्तरागे शृङ्गारपिङ्गयोः, हे. पल्लवो विस्तरे पिङ्गे किसले विटपे वने, त्रि.

**पल्लवित**—अथ पल्लवितं लाक्षारक्ते सपल्लवे तते, मे. भवेत्पल्लवित लाक्षारक्ते सप्रसवे तते, वि पल्लवितं सपल्लवे। लाक्षारक्ते, हे.

**पवन**—पवनं कुम्भकारस्य पाकस्थाने नपुसकम्। निष्पावमरुतोः पुसि, मे. पवनाख्या कुलालस्य पाकस्थानेऽपि मारुते। निष्पावे च, वि पवनो वायुवल्लयोः। पवन पुनरापाके, हे पाकस्थाने कुलालस्य वाते च पवनः पुमान्, त्रि.

**पवित्र**—पवित्र वर्षणे कुशे। ताम्रे पयसि च क्लीव मेध्ये स्यादभिधेयवत्, मे. पवित्र वर्षणे कुशे। पवित्रं ताम्रपयसोर्मेध्ये चापि तदन्यवत्, वि. पवित्रं तु मेध्ये ताम्रे कुशे जले। अर्घोपकरणे चापि पवित्रा तु नदीभिदि, हे. पवित्रं कुशमेध्ययो , त्रि. दर्भेऽपि पवित्रम्, ह

**पशु**—पशुर्मृगादिदेवाजे नाऽव्यय पशु दर्शने, मे. पशुश्छागे मृगादिपु। प्रमथेऽपि च, हे. मृगादौ प्रमथे पशु., त्रि.

**पशुपति**—पशुपति पिनाकिनि हुताशने, हे

**पश्चात्**—पश्चात्प्रतीच्या परमेऽप्यधिकारेऽपि दृश्यते, मे. पश्चात्प्रतीच्या चरमे, वि., हे. प्रतीच्या चरमे पश्चात्, अ.

**पश्य**—पश्यशब्दस्तु विस्मये। प्रशंसायामपि तथा, मे.

**पश्यत्**—पश्यत्स्यात् प्रशंसाया विस्मये च निगद्यते, मे.

**पांशु**—पांशुर्धूलौ च शस्यार्थचिरसञ्चितगोमये, मे., वि.

**पांशुल**—पांशुलः पुश्चले शम्भो. खट्वाङ्गे स्त्र्यसतीभुवोः, मे. पांशुलः पुश्चले शम्भोः खट्वाङ्गे पांशुला भुवि, हे. पांशुलो हरखट्वाङ्गे पुश्चले पांशुला भुवि, हे

**पांशुचामर**—स्यात्पांशुचामर. पुसि दूर्वाञ्चिततटीभुवि। वर्द्धापके प्रशंसाया पुरोटौ धूलिगुच्छके, मे. इत्येप दूर्वाञ्चिततटीभुवि। वर्द्धापके प्रशंसाया पुरोटौ धूलिगुच्छके, वि. पांशुचामरः। वर्द्धापके प्रशंसाया दूर्वाञ्चिततटीभुवि। पुरोटौ धूलिगुच्छे, हे

**पाक**—पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि मे. पाकः पचने शिशुदैत्ययोः, हे. पाकः शिशौ जरानिष्ठापचनक्लेदनेषु च, पाकौ पचनशावकौ, त्रि.

**पाकल**—पाकलं कुष्ठभैषज्ये पुंसि स्यात्कुञ्जरज्वरे, मे. पाकलं कुष्ठ-ज्ये पाकलः कुञ्जरज्वरे, वि. पाकलो द्विरदज्वरे। पाकलं कुष्ठभैषज्ये,

**पाक्य**—पाक्यं विटाख्यलवणे यवक्षारे पुन पुमान्, मे पाक्यं विडाख्यलवणे वक्षारे च दृश्यते, वि.

**पाचन**—पाचनं दशमूल्यादौ प्रायश्चित्ते च नानले। वाच्यवत्पाचयितरि रीतकयान्तु योषिति, मे. v. पावन.

**पाचल**—पाचलं पाचने नाग्नौ राधनद्रव्यवातयो , मे. पाचलो राधनद्रव्ये-ष्यनिलानलयोरपि, वि. पाचलोऽनिले। अनले राधनद्रव्ये, हे.

**पाञ्चजन्य**—पाञ्चजन्यस्तु कृष्णशङ्खे हुताशने, मे. पाञ्चजन्यः पोटगले शङ्खे दामोदरस्य च, हे.

**पाटक**—पाटकः स्यान्महाकिष्कौ कण्टकान्तरवाद्ययो ॱ। अक्षादिचालने मूल-द्रव्यापचयरोधसोः, मे., वि. पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके। वाद्यभेदे महाकिष्कौ मूल्यस्यापचयेऽपि च, हे.

**पाटल**—पाटला पाटलौ स्त्री स्यादस्याः पुष्पे पुनर्न ना। आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्, मे. पाटलः श्वेतरक्ते स्यादाशुव्रीहौ च पाटल.। पाटलो पाटलापि स्यादस्या. पुष्पेऽपि पाटलम्, वि. पाटलन्तु कुङ्कुमश्वेतरक्तयो । पाटलः स्यादाशुव्रीहौ पाटला पाटलीद्रुमे, हे. आशुव्रीहिश्च पाटलः, त्रि.

**पाटलिक**—पाटलिकोऽन्यमर्मज्ञे छात्रे स्यात्कालदेशिनि, हा.

**पाटीर**—स्यात्पाटीरस्तु मूलके। केदारे वेणुसारे च वारिदे तितउन्यपि। स्याद्रङ्गे वातिके पुंसि, मे. पाटीरो वातिके रङ्गे मूलके तितउन्यपि। धाराधरेऽपि केदारे वेणुसारेऽपि चेष्यते, वि. पाटीरो मूलके रङ्गे तितउवातिकाम्बुदे। केदारे वेणुसारे च, हे.

**पाठ**—पाठश्च पठने स्याते विद्धपर्ण्याञ्च योषिति, मे. पाठ. स्यात्पठने विद्धपर्ण्या पाठापि पठ्यते, वि.

**पाठीन**—पाठीनो मीनभेदे स्यात्पाठके गुग्गुलुद्रुमे, मे., वि. पाठीनो गुग्गुलु-द्रुमे। पाठके मीनभेदेऽपि, हे. पाठीनो गुग्गुलुद्रौ च, त्रि.

**पाण्डु**—पाण्डुर्ना नृपतौ सिते, मे. पाण्डुः कुन्तीपतौ सिते, वि., हे., त्रि.

**पाण्डुकम्बल**—स्यात्पाण्डुकम्बल श्वेतप्रावारग्रावभेदयो, मे, हे स्यात्पाण्डुकम्बल श्वेतकम्बले च शिलान्तरे, वि

**पाण्डुर**—पाण्डुर स्यान्मरुवके वर्णे ना तद्वति त्रिपु, मे पाण्डुरो वर्णतद्वतो। पाण्डुरन्तुमरुवके, हे

**पात**—पातो निपातने त्राते, मे पात स्यात्पतने त्राते, वि पातो भ्रशे च रक्षिते, त्रि

**पाताल**—पाताल नागलोके स्याद्विवरे वडवानले, मे पाताल नागलोके स्यात्पाताल वडवानले, वि पाताल वडवानले। रसातले, हे श्रौर्वानलेऽपि पातालम्, अ

**पातिली**—पातिली वागुराया स्यान्नारीपात्रप्रभेदयो, मे पातिली वागुराया स्यान्नारीमृत्पात्रभेदयो, वि पातिली मृत्तिकापात्रे नारीवागुरयोरपि, हे

**पातुक**—पातुक पतयालौ स्यात्प्रपातजलहस्तिनो, मे, वि पातुको जलमातङ्गे पतयालुप्रपातयो, हे

**पात्र**—पात्रन्तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि। तीरद्वयान्तरे च, मे पात्रञ्च भाजने योग्ये पात्र तीरद्वयान्तरे। पात्र स्रुवादौ पर्णेऽपि राजमन्त्रिणि चेष्यते, वि पात्रन्तु कुलयोर्मध्ये पर्णे नृपतिमन्त्रिणि। योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि, हे योग्यभाजनयो पात्रम्, अ नद्यन्तराले पात्र स्याद्भाण्डे च, त्रि शिष्टभाजनदेहेषु पात्रशब्द प्रवर्तते, अने

**पात्रट**—पात्रट कर्परे पुसि देशे स्यादभिधेयवत्, मे

**पात्रटीर**—पात्रटीरस्तु पुलिङ्ग मुक्तव्यापारमन्त्रिणि। लोहकास्यरजतपात्रे सिङ्घाणे पावकेऽपि च, मे पात्रटीरो बुधैरुक्तो मुक्तव्यापारमन्त्रिणि। लोहकास्ये रजतपात्रे पिङ्गले पावकेऽपि च, वि पात्रटीरस्त्वपव्यापारमन्त्रिणि। लोहकास्ये रजतपात्रे सिङ्घाणकहुताशयो, हे

**पाद**—पादो बुध्ने तुरीयाशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च, मे, वि पादो मूलोस्रतूर्याशाङ्घ्रिषु प्रत्यन्तपर्वते, हे पादा रश्म्यङ्घ्रितूर्याशा, अ पादस्तु न द्वयो। मूले प्रत्यन्तशैले च, त्रि

**पादचत्वर**—स्यात्पादचत्वरश्छागे सैकते पिप्पलेऽपि च। करके परदोषैकप्रवक्तृपुरुषेऽपि च, मे स्यात्पादचत्वरश्छागे सैकते पिप्पलेऽपि च। करके परदोषैकभाजि पूरपकेऽपि च, वि पादचत्वर करके परदोषैकभाषिणि। सैकते च्छगलेऽश्वत्थद्रुमे, हे

**पादप**—पादप पादपीठादौ पादुकाया तु पादपा, मे पादप पादपीठे द्रौ

पादुकाया तु पादपा, वि पादपो द्रौ पादपीठे पादपा पादरक्षणे, हे पादुकाया स्त्रिया वृक्षे पादपीठे च पादप, त्रि पादपीठेऽपि पादप, हा

**पादपाशी**—पादपाशी खण्डकाया शृङ्खलायामपि स्त्रियाम् मे पादपाशी खण्डकाया शृङ्खलाकटकेऽपि च, वि

**पान**—पान पीतिभाजनरक्षणे, मे पान पीतौ च रक्षणे, वि

**पानीय**—पानीयन्तु जले क्लीव पातव्ये वाच्यलिङ्गकम् मे पानीय पेयवारिणो, वि पानीय पेयजलयो, हे पानीय पेयनीरयो, त्रि

**पामर**—पामर खलनीचयो, मे, वि पामरो नीचमूर्खयो, हे

**पायस**—पायसस्तु क्लीवपुसो श्रीवासपरमान्नयो, मे पायस परमान्ने स्याच्छ्रीवासेऽपि च पायस, वि पायस पायस श्रीवासपरमान्नयो हे

**पाय्य**—पाय्य पानीयके निन्द्ये, त्रि

**पार**—पार परतटे प्रान्ते न स्त्री पारा नदीभिदि। पारी पूरे च कर्कर्या पादरज्जौ च दन्तिन मे पार परतटे प्रान्ते पारी पात्रीतडागयो । गर्गरीपूरयो पारी पादरज्ज्वा च दन्तिन वि पार प्रान्ते परतटे पारी पूरपरागयो । पात्र्या कर्करिकायाञ्च पादबन्धे च हस्तिनाम्, हे

**पारशव**—पारशव पुमान्। परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च मे भवेत्पारशव पारस्त्रैणे शूद्रासुते द्विजात्। शस्त्रेऽपि, वि पारशवोऽयसि। शूद्राया विप्रतनये तनये च परस्त्रियाम् हे शूद्राया विप्रतनये शस्त्रे पारशवो मत श्र

**पारायण**—पारायण समासङ्गे कात्स्न्र्ये पारगतावपि, वि, मे पारायण पुन । कात्स्न्र्ये पारगतौ सङ्गे, हे

**पारावत**—पारावती गोपगीते नदीभिल्लवलीफले। पारावत कलरवे तथा मर्कटतिन्दुके मे पारावती गोपगीतिलवलीलतयोर्मता। पारावत कलरवे शैले मर्कटतिन्दुके, वि पारावत कलरवे गिरौ मर्कटतिन्दुके। पारावती तु लवलीफलगोपालगीतयो, हे पारावती गोपगीतिलवलीफलयोरपि, त्रि

**पारावार**—पारावार समुद्रे ना तटद्वये नपुसकम् मे पारावार समुद्रे च पारावार तटद्वये, वि पारावार पयोराशौ पारावार तटद्वये, हे

**पारिजात**—पारिजात सुरतरौ पारिभद्रतरावपि, मे पारिजात सुरतरौ मन्दारे पारिभद्रके, वि पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे, हे पारिजातो देवतरौ मन्दारे पारिजातके, त्रि

**पारिप्लव**—पारिप्लवश्चाकुले स्याच्चञ्चले च, मे पारिप्लवावाकुलचञ्चलौ, हे

**पारिभद्र**—पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि, मे पारिभद्रस्तु मन्दार-निम्बपादपयोर्मत , वि पारिभद्रौ तु मन्दारनिम्बौ, हे

**पारुष्य**—पारुष्य पुरुषत्वे च दुर्वाक्ये पुसि गोष्पतौ, मे पारुष्य पुरुषत्वे स्या द्वने शक्रस्य गोष्पतौ । पारुष्य , वि पारुष्यस्तु वृहस्पतौ । पारुष्य सन दनवनेऽपि च, हे

**पार्थ**—पार्थस्तु ककुभे जिष्णौ, वि

**पार्थिव**—पार्थिवो नृपे । पार्थिवी तु सीताया स्त्री पृथिव्या विकृतौ त्रिपु मे पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत् । पार्थिवी स्यादुमाया च वि पार्थिवो नृपतौ भूमिविकारे पार्थिवी तु मा हे घटादौ पार्थिवे राज्ञि, त्रि

**पार्पर**—पार्परो भक्तसिक्थे स्यात्कीनाशे राजयक्ष्मणि । जराटेऽपि कदम्बस्य केशरे च गदान्तरे मे पार्परो भक्तसिक्थे स्यात्कीनाशे राजयक्ष्मणि । जराटेऽपि कदम्बस्य कसरेऽपि च भस्मनि वि पार्परो भस्मनि यमे जराटे नीपकेसरे । क्षय रोगे भक्तसिक्थ, हे

**पार्वत**—पार्वती सल्लकीदुर्गागोपालपुत्रिकासु च, मे पार्वती सल्लकीदुर्गा द्रौपदीजीवनीषु च वि

**पार्श्व**—पार्श्वं कक्षान्तरे चक्रोपान्ते पर्शुगणेऽपि च मे वि पार्श्वमन्तिके। कक्षाधोऽवयवे चक्रोपान्तपर्शुसमूहयो , हे

**पार्ष्णि**—पार्ष्णि स्यादुन्मदस्त्रियाम् । स्त्रिया द्वयो सैन्यपृष्ठ पादग्रन्थ्य धरेऽपि च म पार्ष्णि पाश्चात्यभागे स्यात्पादमूलोन्मदस्त्रियो । सेनापृष्ठे च कुम्भ्या च वि पार्ष्णि कुम्भ्या चमूपृष्ठे पादमूलोन्मदस्त्रियो , हे पार्ष्णि पादे व्यूहपृष्ठे त्रि पार्ष्णि प्रत्यासारे चरणस्य पश्चिमे भागे ह पादग्रन्थेरध पार्ष्णि पार्ष्णि स्याद्वाहिनीकटि शा

**पालङ्क**—पालङ्क शल्लकीशाकभेदयोर्वाजिपक्षिणि मे वि पालङ्क शाकभेदे स्याच्छल्लक्या वाजिपक्षिणि हे

**पालि**—पालि कर्णलताग्रेऽस्त्री पक्तावङ्कप्रभेदयो । छानादिदेये स्त्री पाली यूकासश्मश्रुयोपिति मे पालि कर्णलताग्रेऽस्त्री पक्तावङ्कप्रभेदयो । पालि प्रस्थ च यूकाया जातश्मश्रुस्त्रियामपि वि पालिर्यूकासिपक्तिपु । जातश्मश्रुस्त्रिया प्रान्ते सेतौ कल्पितभोजने । प्रशसाकर्णलतयोरुत्सङ्गे प्रस्थचिह्नयो , हे पालि स्त्र्यस्त्रङ्क पक्तिपु श्र सश्मश्रुयुवती पालि पक्ति कर्णलताऽपि च त्रि चिह्नमाहु र्बुधा पालि पालि पक्तिप्रदेशयो । कर्णस्य लतिका पालि पालिरस्त्रिरपि स्मृता शा

**पावक**—पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके। भल्लातके विडङ्गे (च) मे, वि, हे शोधयितृनरेऽपि च, हे

**पावन**—पावनन्तु जले कृच्छ्रे, ना व्यासे पावके त्रिषु, मे पावनन्तु जले कृच्छ्रे, पावकाध्यासयोर्विदु । पावन सिह्लके वह्नौ प्रायश्चित्ते च पावनम् ।। वाच्यवत्पावयितरि हरीतक्यान्तु पावनी, वि पावन जलकृच्छ्रयो । पावन पावके सिह्लेऽध्यासे पावयितर्यपि ।। पावनी तु हरीतक्याम्, हे

**पाश**—पाश केशादिपूर्वे स्यात्तत्सङ्घे कर्णपूर्वक । सुकर्णे च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने मे पाश कचान्ते सङ्घार्थे कर्णान्ते शोभनार्थक । छात्राद्यन्ते च निन्दार्थ पाश पक्ष्यादिबन्धने, वि पाशस्तु मृगपक्ष्यादिबन्धने। कर्णान्ते शोभनार्थ स्यात्कचान्ते निकरार्थक । छात्राद्यन्ते च निन्दार्थ, हे पाश कचान्ते सङ्घार्थ कर्णान्ते शोभनार्थक । छात्राद्यन्ते च निन्दार्थ पाश पश्वादिबन्धने, त्रि

**पाशिन्**—पाशी व्याधे च वरुणे, मे पाशी पाशधरेऽप्पतौ, वि

**पाशुपत**—पाशुपतो बकपुष्पे स्यात्पशुपत्यधिदैवते च तद्भक्ते, मे पाशुपतो बकपुष्पे पशुपत्यधिदैवते, वि पाशुपत शिवमल्ल्या पशुपत्यधिदैवते, हे

**पिङ्ग**—पिङ्गा गोरोचनाहिङ्गुनालिकाचण्डिकासु च। पिङ्गी शम्या पिशङ्गे ना वालके तु नपुसकम्, मे पिङ्गी शमी पिङ्गा हिङ्गुनाल्या गोरोचनोमयो । पिङ्ग वालके पिशङ्गे, हे पिङ्ग पिशङ्गे पिङ्गी तु शम्या पिङ्गन्तु वालके। रामठ नाडिकायाञ्च पिङ्गा गोरोचनोमयो, वि

**पिङ्गल**—पिङ्गलो नागभिद्रुद्रचण्डाशुपारिपार्श्वके। निधिभेदे कपावग्नौ पुसि स्यात्कपिलेऽन्यवत। स्त्रिया वेश्याविशेषे च करिण्या कुमुदस्य च मे पिङ्गल स्यान्मुनौ रुद्रे चण्डाशो पारिपार्श्वके। निधिभेदे कपावग्नौ पिङ्गल कपिलेऽन्यवत्। करापिकाया वेश्याया पिङ्गला कुमुदस्त्रियाम वि पिङ्गल कपिले वह्नौ रुद्रेऽर्कपारिपार्श्विके। कपौ मुनौ निधिभेदे पिङ्गला कुमुदस्त्रियाम्। करापिकाया वेश्याया नाडिभेदे, हे पिङ्गल स्यात्कपावग्नौ, त्रि वेश्यायामपि पिङ्गला, हा

**पिङ्गाश**—पिङ्गाशी नीलिकाया नपुसकम्। जात्यस्वर्णे पुमान् पल्लीपतौ मत्स्यान्तरेऽपि च, मे पिङ्गाशो मत्स्यभेदे स्यात्तथा पल्लीपतावपि। पिङ्गाशी नीलिकायाञ्च पिङ्गाश जात्यकाञ्चने, वि पिङ्गाशो मत्स्यपल्लीशौ पिङ्गाशी स्यात्तु नीलिका, हे

**पिचण्ड**—पिचण्ड उदरे पशोरवयवे पुमान्, मे पिचण्डमुदरे विद्यात्पशोरवयवेऽपि च, वि पिचण्डोऽवयते पशो । उदरे च, हे

पिचु—पिचुर्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे, मे पिचुस्तूले च कर्षे च कुष्ठ रोगेऽसुरान्तरे। भैरवस्यास्यभेदेऽपि पिचु क्वापि प्रकीर्तित, वि

पिचुल—पिचुलो भावुकेऽपि स्यादिज्जले जलवायसे, मे, वि पिचुलो निचुले तोयवायसे भावुकद्रुमे, हे

पिच्चट—पिच्चटो नेत्ररोगे स्यात् क्लीव सीसकरङ्गयो, मे पिच्चटो नेत्ररोगे स्यात्पिच्चट त्रपुसीसयो, वि पिच्चटस्तु नेत्ररोगे पिच्चट त्रपुसीसयो, हे

पिच्छ—पिच्छा पूगच्छटाकोशमोचाशाल्मलीवेष्टके। भक्तसम्भूतमण्डे च पक्तावश्वपदामये। स्त्रिया पुसि तु लाङ्गूले न द्वयोर्बर्हचूडयो, मे पिच्छा तु शाल्मलीवेष्टे मण्डे चाश्वपदामये। पक्तौ पूगच्छटाकोशमोचाविचक्लिपु च। पिच्छ पुच्छे वि पिच्छ पुच्छे पिच्छ वाजे पिच्छा शाल्मलिवेष्टके। पक्तिपूग च्छटाकोशमण्डेष्वश्वपदामये। मोचाया पिच्छिले, हे पिच्छा स्त्री भक्तमण्डेऽपि लाङ्गूले पिच्छमस्त्रियाम्, त्रि पिच्छा पूगच्छटाकोपे कोलिकफलनालयो, हा

पिच्छिल, (पिच्छल)—पिच्छलो विज्जलेऽन्यवत्। स्त्री पोतिकाशिशपयो शाल्मलीसिन्धुभेदयो, मे पिच्छिला शाल्मलीसिन्धुभेदपोतकिकासु च। पिच्छिला शिशपायाञ्च पिच्छिलो विज्जलेऽन्यवत्, वि पिच्छल। विज्जले पिच्छिला पोतकिकाया सरिदन्तरे। शाल्मलौ शिशपायाञ्च, हे शाल्मली शिशपा चैव पोतिका चापि पिच्छिला त्रि पिच्छला स्फोटिकावार्तावामावाताम्बुपाशव, हा

पिञ्ज—पिञ्जा तूलहरिद्रयो। वले क्लीव वधे पुसि व्याकुले त्रिपु मे पिञ्जा तूले हरिद्राया पिञ्जस्तु व्याकुलेऽन्यवत्। पिञ्जो वले चये पिञ्जम्, वि पिञ्जा तूलहरिद्रयो। पिञ्जो व्यग्रे वधे पिञ्ज वले, हे पिञ्जा हिंसाहरिद्रयो, त्रि

पिञ्जर—पिञ्जरोऽश्वान्तरे क्लीव स्वर्णे पीते च वाच्यवत मे पिञ्जर कनके वाजिभेदे पीते च पिञ्जर, वि पिञ्जरस्तु पीतरक्तेऽश्वभिद्यपि। पिञ्जर शातकुम्भे स्यात्, हे

पिटक—पिटकस्त्रिपु विस्फोटे मञ्जूपाया पुन पुमान्, मे पिटक स्यात्तु विस्फोटे मञ्जूपायामपीष्यते, हे

पिठर—पिठर स्थाल्या ना क्लीव मुस्तामन्थानदण्डयो, मे पिठरो मुस्ता-मन्थानदण्डयो। पिठर स्यादुखायाञ्च, वि पिठर मथि मुस्तके। उखायाञ्च, हे मुस्तेऽपि पिठरम्, अ स्थाल्या मन्थेऽपि पिठरम्, त्रि

पिण्ड—पिण्डो बोले वले सान्द्रे देहागारैकदेशयो। देहमात्रे निवापे च गोलसिह्लकयोरपि। ओड्रपुष्पे च पुसि स्यात् क्लीवमाजीवनायसो। पिण्डी तु

पिण्डतगरेऽलाबूखर्जूरीभेदयो', मे. पिण्डं सान्द्रे बले वोले गृहांशे जीवनायसो.। पिण्डो देहे जवापुष्पे निवापे सिह्लकेऽपि च। पिण्डी स्यात्तगरेऽलाबूखर्जूरीभेदयोरपि, वि. पिण्डो वृन्दे जवापुष्पे गोले वोलेऽङ्गसिह्लयोः। कवले पिण्डन्तु वेश्मैकदेशे जीवनायसोः। बले सान्द्रे पिण्डचलाबूखर्जूर्योस्तगरेऽपि च, हे. पिण्डः सान्द्रे गृहांशेऽङ्गे, त्रि.

**पिण्डपुष्प**—पिण्डपुष्पमशोके च जवायाञ्च कुशेशये, मे. पिण्डपुष्पमशोके च जपायाञ्च कुशेशये, वि. पिण्डपुष्प जपायां स्यादशोके सरसीरुहे, हे. पिण्डपुष्पौ जवाशोकौ, त्रि.

**पिण्डार**—पिण्डारः क्षपणे गोपे महिषीरक्षके द्रुमे, मे. पिण्डार क्षपणे क्षेपे महिषीरक्षके द्रुमे, वि. पिण्डारो भिक्षुके द्रुमे। महिषीपालके क्षेपे, हे

**पिण्डित**—पिण्डितं गुणिते घने, मे, हे, त्रि. पिण्डित गुणिते सान्द्रे, वि.

**पिण्डिल**—पिण्डिलो गणनापटौ। स्थूलजङ्घे, हे.

**पिण्डीतक**—पिण्डीतक. स्यात्तगरे मदनाख्यमहीरुहे, मे. पिण्डीतक स्यात्तगरे मदनद्रौ फणिज्जके, वि पिण्डीतकः फणिज्जके। तगरे मदनद्रौ च, हे.

**पिण्याक**—पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके, मे. पिण्याक सिह्लके हिङ्गौ तिलचूर्णेऽपि कुङ्कुमे, वि. पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके, हे. अथ सिह्लके। तिलकल्के च पिण्याक, अ.

**पितामह**—पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च, मे. पितामहो विरञ्चे स्यात्तातस्य जनकेऽपि च, वि. पितामह पद्मयोनौ जनके जनकस्य च, हे. ब्रह्मण्यपि पितामह., त्रि.

**पित्तल**—पित्तला तोयपिप्पल्यां स्त्र्यन्यवत् पित्तसंयुते। क्लीबन्तु तैजसद्रव्ये, मे. पित्तलं तैजसद्रव्ये पित्तल. पित्तसङ्गते। पित्तला तोयपिप्पल्याम्, वि पित्तलम्। पित्तवत्यारकूटे च पित्तला तोयपिप्पली, हे. पित्तयुक्ते च पित्तल', त्रि.

**पित्सत्**—पित्सन् विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिषु, मे. पित्सन् पिपतिषन्यथा। पतनेच्छौ विहङ्गे च, हे. पित्सन्यातेच्छुपक्षिणो', त्रि. पित्सन् पिपतिषन्तौ पतनेच्छुविहङ्गयोः, वि.

**पिनाक**—पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः, मे. पिनाको हरकोदण्डे पांशुवर्षत्रिशूलयो', वि. पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयो., हे. पिनाकोऽस्त्री शूलशङ्करधन्वनोः, अ.

**पिपतिषत्**—भवेत्पिपतिषन् पित्सौ त्रिषु पुंसि विहङ्गमे, मे. v. पित्सत्.

**पिप्पल**—पिप्पल सलिले वस्त्रच्छेदभेदे च ना तरौ। निरशुके पक्षिभेदे कणाया पिप्पली स्मृता, मे पिप्पलो बोधिवृक्षे स्यात्पक्षिभेदे निरशुके। पिप्पल वसनच्छेदभेदेऽपि सलिले मतम्। कणाया पिप्पली चोक्ता, वि पिप्पल सलिले वस्त्रच्छेदभेदेऽथ पिप्पल । निरशुके वृक्षपक्षिभेदयो पिप्पली कणा, हे पिप्पलाख्या जलाश्वत्थवस्त्रे कैवर्तवस्तुपु, अने अथ तरौ पिप्पल पिप्पल जले, नि

**पिप्पलक**—स्यात्पिप्पलक वक्षोजवृन्ते सीवनसूत्रके, मे पिप्पलक स्तनवृन्ते मत सीवनसूत्रके वि पिप्पलक पुन । चूचुके सीवनसूत्रेऽपि, हे स्तनवृन्ते पिप्पलक तथा सीवनसूत्रके, हा

**पिल्ल**—पिल्ल पुमान् क्लिन्ननेत्रे क्लिन्नाक्षे पुनरन्यवत्, मे v चिल्ल

**पिशित**—पिशित मासे मास्या स्त्री मे पिशिता मासिकाया स्यादामिषे पिशित मतम् वि पिशित मास पिशिता मासिका हे

**पिशुन**—पिशुन कुङ्कुमेऽपि च। कपिवक्त्रे च काले ना सूचकक्रूरयोस्त्रिषु। पृक्काया पिशुना स्त्री स्यात्, मे पिशुन कुङ्कुमे क्रूरे सूचके चाभिधेयवत्। पिशुन कपिवक्त्रे स्यात्पृक्काया पिशुना मता, वि पिशुन सूचके खले। कप्यास्ये पिशुना पृक्का स्यात्पिशुनन्तु कुङ्कुमम् हे पिशुनौ खलसूचकौ, अ

**पिष्टक**—पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च मे पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेऽपि च वि हे

**पीठमर्द**—पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च मे पीठमर्दोऽतिधृष्टे स्यान्नादचोक्त्या नायकप्रिये वि हे

**पीडा**—पीडा कृपाशिरोमालाऽपमर्दसरलद्रुपु मे वि पीडार्तिमर्दनोत्तस-कृपासु सरलद्रुमे हे व्यथा कृपा च पीडे द्वे नि

**पीडित**—पीडित करणे स्त्रीणा यन्त्रिते बाधितेऽपि च मे पीडित बाधिते स्त्रीणा करणे चापि यन्त्रिते वि पीडित पुन । बाधिते करणे स्त्रीणा यन्त्रिते मर्दितेऽपि च हे

**पीत**—पीत पाने हरिद्राया स्त्रिया गौरेऽभिधेयवत मे पीतो वर्णनिपीतयो । पीता हरिद्रा, हे पीता स्मृता हरिद्राया पीत स्याद्गौरपीतयो, वि

**पीतकावेर**—पीतकावेरमित्येतत्कुङ्कुमे पित्तलेऽपि च, मे पीतकावेर मिच्छन्ति पित्तले कुङ्कुमेऽपि च वि पीतकावेरन्तु कुङ्कुमे। पित्तले, हे

**पीतचन्दन**—पीतचन्दनमुद्दिष्ट कालीयकहरिद्रयो, मे पीतचन्दनमित्येत-त्कालेयकहरिद्रयो, वि पीतचन्दन स्याद्धरिद्राया कश्मीरजन्मनि, हे

**पीतन**—पीतन पीतदारुणि। कुङ्कुमे हरिताले च पुमानाम्रातके मत, मे

पीतनं हरिताले स्यात्कुङ्कुमे पीतदारुणि। आम्रातके पीतनश्च, वि, पीतनं हरिताले स्यात्पीतदारुणि कुङ्कुमे। पीतनः पुनराम्राते, हे.

**पीतसार**—पीतसारो मलयजे गोमेदकमणावपि, मे., वि.

**पीताम्बर**—पीताम्बरस्तु शैलूषे पुंसि कैटभसूदने, मे. पीताम्बरः पद्मनाभे भवेत्पीताम्बरो नटे, वि. पीताम्बरोऽच्युते। नटे च, हे.

**पीति**—पीतिर्नाऽश्वे स्त्रियां पाने, मे. पीति पाने तुरङ्गे च, वि. पीति पानेऽश्वे, हे. अथ घोटके। पाने च पीति, त्रि.

**पीथ**—पीथोऽर्के पीथमम्बुनि, हे. पीथोऽर्केऽग्नौ जले पीथम्, मे. पीथोऽर्के पीथमम्भसि, वि.

**पीयु**—पीयु. काले रवौ घूके ना, मे. पीयुः काले रवौ घूके, वि

**पीयूष**—पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते, मे. पीयूषममृते नव्यसूतधेनो पयस्यपि, हे.

**पीलु**—पीलुपदं परमाणौ मतङ्गजे। अस्थिखण्डे च तालस्य काण्डपादपभेदयो., मे. पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयो.। पीलुस्तालास्थिखण्डे च, वि पीलुः पुष्पद्रुमे काण्डे परमाणौ मतङ्गजे। तालास्थिखण्डे, हे. द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलव., अ परमाणौ च पीलुः स्यात्, त्रि. पीलु. स्याद्गजवृक्षयो, हृ. वृक्षजातिगजे पीलु., अने.

**पीलुपर्णी**—पीलुपर्णी विम्बिकायां मूर्वायामौषधीभिदि, मे. पीलुपर्णी तु बिम्बाया मूर्वायामोषधीभिदि, वि पीलुपर्ण्यौषधीभिदि। मूर्वाया बिम्बिकायाञ्च, हे.

**पीवर**—पीवरः कच्छपे स्थूले, मे., वि. पीवर स्थूलकूर्मयोः, हे.

**पुक्कस**—पुक्कसी कालिकानील्योः पुक्कसः श्वपचेऽधमे, मे, वि. v. बुक्कस.

**पुङ्ख**—पुङ्खः स्यान्मङ्गलाचारे शराङ्गश्येनयोरपि, हे.

**पुङ्गव**—पुङ्गव. स्याद्बलीवर्दे प्रभेदेऽप्यौषधस्य च। उत्तरस्थ पुन. श्रेष्ठे, मे. पुङ्गवः श्रेष्ठे वृषभे भेषजान्तरे, वि. पुङ्गवो गवि भैषज्ये प्रधाने चोत्तरस्थित, हे.

**पुच्छ**—पुच्छ. पश्चात्प्रदेशे स्याल्लाङ्गूले पुच्छमिष्यते, मे. पुच्छ पाश्चात्यभागे स्याल्लाङ्गूले पुच्छमिष्यते, वि.

**पुटग्रीव**—पुटग्रीवस्तु पुलिङ्गो गर्गरीताम्रकुम्भयो., मे. पुटग्रीवो गर्गरीताम्रकुम्भयोः, वि. पुटग्रीवस्तु गर्गर्यां ताम्रस्य कलसेऽपि च, हे.

**पुटभेद**—पुटभेदो नदीवक्रे पत्तनातोद्ययोरपि, मे., वि. पुटभेदस्तु नगरातोद्ययोस्तटिनीमुखे, हे.

**पुटित**—पुटितं स्याद्धस्तपुटे पाटितस्यूतयोरपि, मे., वि.

**पुण्डरीक**—पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽग्नि-दिङ्नागे कोशकारान्तरेऽपि च, मे. पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। कोशकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे, वि. पुण्डरीकं सिताम्बुजे। सितच्छत्रे भेषजे च पुण्डरीकोऽग्निदिग्गजे। सहकारे गणधरे राजिलाहौ गजज्वरे। कोष-कारान्तरे व्याघ्रे, हे. व्याघ्रेऽपि पुण्डरीको ना, अ. सितच्छत्राब्जयोः पुण्डरीक पुंसि तु दिग्गजे। व्याघ्रे च कोशकारे च, त्रि. पुण्डरीक स्मृतो व्याघ्रः पुण्डरीक कमण्डलु। पुण्डरीक सितो वर्ण. पुण्डरीकं सरोरुहम्, अने. पुण्डरीकं सित छत्रं पुण्डरीकं सिताम्बुजम्। व्याघ्रेऽपि पुण्डरीक स्यात्पुण्डरीकश्च दिग्गज, शा.

**पुण्ड्र**—पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके। चित्रे क्रमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे, मे. पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके। चित्रे क्रमौ पुण्डरीके पुण्ड्रा स्युर्नीवृदन्तरे, वि पुण्ड्र. क्रमौ दैत्येक्षुभेदयो.। वासन्त्या तिलके पुण्डरीके पुण्ड्रास्तु नीवृति, हे.

**पुण्य**—पुण्यं शोभने त्रिषु। क्लीव धर्मे च सुकृते, मे. पुण्यं मनोज्ञेऽभिहित तथा सुकृतधर्मयो, वि पुण्यन्तु सुन्दरे। सुकृते पावने धर्मे, हे. पुण्यन्तु चार्वपि, अ. पुण्यं सुविहित कर्म पवित्र पुण्यमुच्यते, अने.

**पुण्यजन**—अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च, मे. भवेत्पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च, वि. पुण्यजनस्तु सज्जने। गुह्यके यातुधाने च, हे रक्ष स्वपि पुण्यजनम्, ह

**पुत्रिका**—स्यात्पुत्रिका पुत्तलिकादुहित्रोर्यावतूलके। ना पुत्रे शरभे धूर्ते शैलवृक्षप्रभेदयो, मे. स्यात्पुत्रिका पुत्तलिकादुहित्रोर्यावतूलके। पुत्रक. शरभे धूर्ते शैलवृक्षप्रभेदयो, वि. पुत्रिका यावतूलके। पाञ्चालिकादुहित्रोश्च पुत्रव शरभे शठे। शैले वृक्षप्रभेदे च, हे.

**पुद्गल**—पुद्गल सुन्दराकारे त्रिषु पुंस्यात्मदेहयो, मे. पुद्गलः सुन्दराकारे पुद्गलश्चात्मदेहयो., वि. पुद्गलः। काये रूपादिमद्द्रव्ये सुन्दराकार आत्मनि, हे. देहे चात्मनि पुद्गल। शस्ताकारेऽपि, त्रि

**पुनर्**—पुनरप्रथमे मतम्। अधिकारे च भेदे च तथा पक्षान्तरेऽपि च, मे पुनरप्रथमे भेदे, वि., हे., अ.

**पुनर्वसु**—पुनर्वसुर्ना मुनिभिद्यजे। द्वित्वे तु भान्तरे, मे. पुनर्वसुर्भवेद्वृक्षे कात्यायनमुनावपि, वि. पुनर्वसु. स्यान्नक्षत्रे कात्यायनमुनावपि, हे.

**पुन्नाग**—पुन्नागस्तु सितोत्पले। जातिफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे, मे.

पुन्नागः पुरुषश्रेष्ठे पाण्डुनागे सितोत्पले। जातिफले च पुन्नाग', वि पुन्नागः पादपान्तरे। जातीफले नरश्रेष्ठे, हे. वृक्षे स्यात्पुसि पुन्नागः, त्रि

**पुर्**—पूः शरीरे पत्तने च, हे

**पुर**—पुरं नपुंसकं गेहे देहपाटलिपुत्रयो'। पुष्पादीना दलवृत्तौ ना गुग्गुलौ कथित पुर'। पुराऽव्ययं पूर्वकाले, वि पुरं शरीरे नगरे गृहपाटलिपुत्रयो'। पुरस्तु गुग्गुलौ, हे. अगारे नगरे पुरम्। मन्दिरञ्च, अ देहे पाटलिपुत्रे च पुर स्याद् गुग्गुलौ पुरः, त्रि. पुरं देहेऽपि दृश्यते, हा.

**पुरतस्**—पुरत. प्रथमाग्रयो, मे पुरत' प्रथमे चाग्रे, वि पुरतोऽग्राद्ययो, हे.

**पुरस्**—पुरोऽग्रे प्रथमे, मे. पुरोऽग्रे प्रथमे च स्यात्, वि., हे.

**पुरस्कृत**—पुरस्कृतोऽभिशस्तारिग्रस्ताग्रे कृतपूजिते, मे. पुरस्कृत स्वीकृताभिशस्तयोरभिधेयवत्। अग्रेकृताभ्यर्चितयो सिक्ते चापि पुरस्कृतम्, वि. पुरस्कृतम्। पूजिते स्वीकृते सिक्तेऽभिशस्तेऽग्रकृतेऽपि च, हे. पुरस्कृत' पूजितेऽरात्यभियुक्तेऽग्रत कृते, अ.

**पुरस्तात्**—पुरस्ताच्चतुर्षु प्राच्या पुरार्थे प्रथमेऽग्रतः, वि, शा पुरस्तात्प्रथमेऽग्रत। पूर्वस्याञ्च पुरार्थे च, हे. पुरस्तात्प्रथमे प्राच्यामग्रतोऽर्थपुरार्थयो', मे

**पुरा**—पुरा पुराणे निकटे प्रबन्धातीतभाविषु, मे. पुरा पुराणनिकटप्रबन्धातीतभाविषु, वि. पुरा भविष्यदासन्ने चिरातीतप्रतीपयो', हे स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा, अ.

**पुराण**—पुराणं पञ्चलक्षणे। पणे पुसि त्रिषु प्रत्ने, मे. पुराणं वाच्यवत्प्रत्ने पुराणं पञ्चलक्षणे, वि. पुराण प्रत्नशास्त्रयोः। पुराणः षोडशपणे, हे, ग्रन्थे कार्षापणे चास्त्री पुराणमनवे त्रिषु, त्रि.

**पुरु**—पुरु. प्राज्येऽभिधेयवत्। पुसि स्याद्देवलोके च नृपभेदपरागयो, मे. पुरु. प्राज्यपरागयो। पुरुः स्वर्लोकनृपयो., वि पुरु' परागे प्रचुरे स्वर्लोकनृपभेदयोः, हे.

**पुरुष**—पुरुषः पूरुषे सांख्यज्ञे च पुन्नागपादपे, मे., वि. पुरुषः स्वात्मनि नरे पुन्नागे, हे. पुरुषावात्ममानवौ, अ. पुन्नागे पुरुषो नरे, त्रि.

**पुरुहूत**—उलूकः पुरुहूत. स्यात्पुरुहूतः पुरन्दरः, अने.

**पुरोडाश**—पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च। हुतशेषे च, मे. पुरोडाशो हविर्भेदे चमस्या पिष्टकस्य च। रसे सोमलतायाश्च हुतशेषे च कीर्तित',

वि पुरोडाशो हविर्भिदि। हुतशेषे सोमरसे चमस्या पिष्टकस्य च, हे पुरोडाशो हविर्भेदे चमस्या पिष्टकस्य च। रसे सोमलतायाश्च हुतशेषे च कीर्त्यते, अने

**पुल**—पुल स्यात्पुलके पुंसि विपुलेऽप्यन्यलिङ्गक, मे पुलन्तु विपुलेऽन्यवत्। पुल स्यात्पुलके चापि, वि पुल पुलके विपुलेऽपि च, हे

**पुलक**—पुलक कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे। रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे, मे पुलक कृमिभेदे स्याद्गल्लर्कमणिदोषयो। गजान्नपिण्डे रोमाञ्चे हरिताले शिलान्तरे, वि पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे। असुराज्या मणिदोषे गल्लर्के तालके कृमौ, हे पुलको लोमहर्षणे, त्रि

**पुलाक**—पुलाकस्तुच्छधान्ये स्यात्सक्षेपे भक्तसिक्थके, मे, वि पुलाको भक्तसिक्थे स्यात्सक्षेपासारधान्ययो, हे स्यात्पुलाकस्तुच्छधान्ये सक्षेपे भक्तसिक्थके, अ पुलाको भक्तसिक्थे च क्षुद्रधान्येऽपि कथ्यते, ह सक्षेपे भक्तसिक्थे च तुच्छधान्ये पुलाकवाक् अने

**पुष्कर**—पुष्कर खेऽम्बुपद्मयो। तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयो। कुष्ठौषधे द्वीपतीर्थभेदयोश्च नपुसकम्। ना रोगनागविहगनृपभेदेषु वारुणे, मे पुष्कर पङ्कजे व्योम्नि पय करिकराग्रयो। औषधद्वीपविहगतीर्थराजोरगान्तरे। पुष्कर तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च वि पुष्कर द्वीपतीर्थाहिखड्गरागौपधान्तरे। तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे, हे पुष्कर करिहस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफले पद्मे तीर्थौपधिविशेषयो, अ खड्गफले पुष्करम् त्रि तूर्यास्ये श्रीफले पद्मे कुञ्जराग्रकरे दिवि। द्वीपे तीर्थे निमित्ते च विशिष्टे पुष्करध्वनि अने द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे। अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम्, ह

**पुष्करिणी**—पुष्करिणी जलाशये। हस्तिन्या कमलिन्याञ्च, हे अथ पुष्करिणी चेभ्या सरोजिन्या जलाशये, मे पुष्करिणी सरोजिन्या हस्तिन्याञ्च जलाशये, वि

**पुष्कल**—पुष्कलस्तु पूर्णे श्रेष्ठे, हे

**पुष्कलक**—अथ पुष्कलको गन्धमृगे क्षपणकीलयो, मे स्मृत पुष्कलको गन्धमृगे क्षपणकीलयो, वि पुष्कलकस्तु कीलके। क्षपणे गन्धमृगे च, हे पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च, त्रि

**पुष्टि**—पुष्टि स्त्री पोषणे वृद्धौ, मे पुष्टिर्वृद्धौ च पोषणे, वि पुष्टि स्यात्पोषणे वृद्धौ, हे

**पुष्प**—पुष्प विकाशिकुसुमस्त्रीरज सु नपुसकम्, मे पुष्प विकश आर्तवे।

धनदस्य विमाने च कुसुमे नेत्ररुज्यपि, हे. पुष्पं विकासे कुसुमे स्त्रीणाञ्च रजसि स्मृतम्, वि. पुष्प कुसुम आर्तवे, त्रि

**पुष्पक**—पुष्पकं रीतिपुष्पे च विमाने धनदस्य च। नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने। लौहकास्ये मृदङ्गारशकट्याञ्च नपुंसकम्, मे. पुष्पक रीतिकानेत्ररोगयो रत्नकङ्कणे। कुबेरस्य विमाने च कासीसे च रसाञ्जने। लोहकास्ये मृदङ्गारशकट्यामपि पुष्पकम्, वि. पुष्पकं मृत्तिकाङ्गारशकट्यां रत्नकङ्कणे। कासीसे श्रीदविमाने नेत्ररोगे रसाञ्जने। लोहकांस्ये रीतिकायाम्, हे पुष्पकं कङ्कणेऽपि स्यात्, त्रि.

**पुष्पदन्त**—पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तरे, मे. पुष्पदन्तस्तु दिङ्नागे नागविद्याधरान्तरे, वि. पुष्पदन्तस्तु दिङ्नागे जिनभेदे गणान्तरे। पुष्पदन्तौ च चन्द्रार्कौ एकोक्त्या, हे.

**पुष्य**—पुष्यं कलियुगे स्मृतः। नक्षत्रमासयोर्भेदे, मे. v तिष्य

**पुस्त**—पुस्तं क्लीवे पुस्तके च लेप्यादिशिल्पकर्मणि, मे पुस्तन्तु पुस्तके लेप्यकर्मविज्ञानयोरपि, वि. पुस्तं शिल्पे लेप्यादिकर्मणि। पुस्तके, हे.

**पूग**—पूगस्तु क्रमुके वृन्दे फलसारेऽभिधेयवत्। नदीभेदे मलप्वा स्त्री, मे. पूगस्तु क्रमुके वृन्दे, वि. पूग. क्रमुकसङ्घयो., हे. पूग क्रमुकवृन्दयो., अ.

**पूज्य**—पूज्यः श्वशुरवन्द्ययोः, मे, वि., हे. पूज्यस्तु श्वशुरेऽपि च, अ

**पूत**—पूत त्रिषु पवित्रे च शटिते बहुलीकृते, मे. पूतं पवित्रे शटिते पूतञ्च बहुलीकृते, वि. पूतन्तु पवित्रे बहुलीकृते, त्रि.

**पूतना**—पूतना तु हरीतक्या दानवीरोगभेदयोः, मे. पूतना राक्षसीभेदे हरीतक्याञ्च पूतना, वि. पूतना तु हरीतकी। दुग्धदा वासुदेवस्य, हे. हरीतकी राक्षसी च पूतना, त्रि.

**पूतिकाष्ठ**—पूतिकाष्ठञ्च सरलदेवदारुमहीरुहोः, मे. पूतिकाष्ठञ्च सरले देवदारुद्रुमेऽपि च, हे. पूतिकाष्ठन्तु सरलदेवदारुमहीरुहोः, वि.

**पूत्यण्ड**—पूत्यण्डो गन्धर्णे गन्धकीटके, हे. पूत्यण्डो गन्धकीटेऽपि तथा जन्त्वन्तरे पुमान्, मे. पूत्यण्डो गन्धकीटेऽपि तथा गन्धमृगे स्मृतः, वि. पूत्यण्डः पूतिकीटे च गन्धकीटे च दृश्यते, हा.

**पूर**—पूरो जलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः, मे. पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः, वि. पूरः स्यादम्भसा वृद्धौ व्रणसंशुद्धिखाद्ययोः, हे. पूरः खाद्ये पयश्चये, त्रि. सङ्घाते पूरणे पूरः, अने.

**पूरण**—पूरण. पूरके त्रिषु। क्लीबं पिण्डप्रभेदे च पूरणी शाल्मलिद्रुमे।

पटारम्भकसूत्रेषु, मे पूरण पूरणे पिष्टभेदे पूरणमिष्यते। पटारम्भकसूत्रे च शाल्मली पूरणी मता, वि पूरण वाणतन्तुषु। पूरके पिष्टभेदे च, हे

**पूर्ण**—पूर्ण शब्दे समग्रे ना पूरिते त्वभिधेयवत्, मे पूर्ण शब्दे समग्रे च पूरिते चापि वाच्यवत्, वि पूर्ण कृत्स्ने पूरिते च, हे

**पूर्णक**—पूर्णक स्वर्णचूडे स्यान्नासाच्छित्त्यान्तु पूर्णिका, मे, वि पूर्णक स्वर्णचूडके। पूर्णिका नासिकाच्छित्त्याम्, हे

**पूर्णपात्र**—पूर्णपात्र वस्तुपूर्णपात्रे वर्धापकेऽपि च, मे, वि पूर्णपात्रन्तु जलादिपूर्णभाजने। वर्धापके, हे

**पूर्णानक**—भवेत्पूर्णानक वर्धापके च पटहेऽपि च, मे भवेत्पूर्णानक पूर्णपात्रे पटहपात्रयो, वि स्यात्पूर्णानकमानके। पात्रे च पूर्णपात्रे च, हे

**पूर्त**—पूर्त त्रिषु पूरिते स्यात् क्लीव खातादिकर्मणि, मे पूर्त पूरितखाताद्यो, हे पूर्तस्तु पूरिते च्छन्ने पूर्त खातादिकर्मणि, वि खातादौ पूरिते पूर्तम्, त्रि

**पूर्व (र्ब)**—पूर्वस्तु पूर्वजेऽपि स्यात्पूर्व प्रागाद्ययोस्त्रिषु, मे पूर्वाख्या पूर्वजेषु स्यादग्रे प्राचि च वाच्यवत्, वि पूर्वन्तु पूर्वजे। प्रागग्रे श्रुतिभेदे च, हे पूर्वोऽन्यलिङ्ग प्रागाह पुवहुत्वेऽपि पूर्वजान्, अ

**पूर्व(र्ब)द्युस्**—पूर्वेद्यु प्रात काले स्यात्तथैव गतवासरे, मे पूर्वेद्युरिष्यते प्रात पूर्वेद्यु पूर्ववासरे, वि पूर्वेद्यु पूर्वाह्नप्रभातयो, हे प्रातर्दिने च पूर्वत्रेत्यर्थे पूर्वेद्युरिष्यते, त्रि

**पृतना**—पृतना तु स्त्रिया सेनामात्रसेनाविशेषयो, मे पृतनाऽनीकिनीसेनाचमूसैन्यान्तरेषु च, वि पृतनाऽनीकिनी चमू। सेना सैन्यविशेषश्च, हे

**पृथग्जन**—पृथग्जनस्तु पुलिङ्ग कथितो नीचमूर्खयो, मे पृथग्जन स्मृतो नीचे मूर्खे च, वि पृथग्जनोऽधमे जडे, हे मूर्खनीचौ पृथग्जनौ, अ

**पृथिवीपति**—पृथिवीपतिस्तु भूपाले ऋषभाख्यौषधौ पुमान्, मे स्यात्पृथिवीपतिर्भूप ऋषभाख्यौषधेऽपि च, वि पृथिवीपतिस्तु भूपे कृतान्ते ऋषभौषधे, हे

**पृथु**—पृथु स्यान्महति त्रिषु। त्वक्पत्र्या कृष्णजीरे स्त्री पुमानग्नौ नृपान्तरे, मे पृथुर्नृपे कृष्णजीरे वाप्या पृथु महत्यपि, वि पृथुर्विशाले भूपाले वाप्रिकाकृष्णजीरयो, हे

**पृथुक**—पृथुक पुसि चिपिटे शिशौ स्यादभिधेयवत्, मे पृथुकश्चिपिटे शिशौ वि पृथुकश्चिपिटेऽर्भके, हे पृथुकौ चिपिटार्भकौ, अ

**पृथ्वी**—पृथ्वी भूमौ महत्याञ्च त्वक्पर्ण्यां कृष्णजीरके, मे पृथ्वी भूमौ पृथौ हिंगुपत्रिकाकृष्णजीरयो, वि

**पृदाकुः**—पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयो. पुमान्, मे. पृदाकुश्चित्रक-व्याघ्रवृश्चिकेषु सरीसृपे, हे. पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे, वि.

**पृषत्**—पृषन्मृगे पुमान् बिन्दौ न द्वयोः, मे पृषतवत् पृषन्मृगे। बिन्दौ, हे. क्लीबं बिन्दौ पृषन्नेणे, त्रि. v पृषत.

**पृषत**—पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ, मे. पृषतो हरिणे बिन्दौ पृषतश्चाश्वरोहिते। भवेत्पृषदिव श्वेते बिन्दुयुक्ते तु वाच्य-वत्, वि. पृषतोऽप्यनयोर्नरि, त्रि. v पृषत्.

**पृष्ठ**—पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे, मे पृष्ठं चरममात्रे स्या-द्देहस्यावयवान्तरे, वि. पृष्ठं पश्चिममात्रे स्याच्छरीरावयवान्तरे, हे.

**पृष्ठशृङ्गिन्**—पृष्ठशृङ्गी पुमान् दंशभीरौ षण्डे वृकोदरे, मे पृष्ठशृङ्गी भवेद्दंशभीरौ षण्डे वृकोदरे, वि पृष्ठशृङ्गी भीमसेने षण्डसैरिभयोरपि, हे पृष्ठ-शृङ्गीति शब्दोऽयं दंशभीरौ पृथूदरे, हा

**पेचक**—पेचको गजलाङ्गूलमूलोपान्ते च कौशिके, मे. पेचको गजलाङ्गूल-मूलपर्यन्तघूकयो', वि. पेचकः करिलांगूलमूले घूके, हे. उलूके करिण' पुच्छ-मूलोपान्ते च पेचकः, अ.

**पेटक**—पेटकं पुस्तकादीना मञ्जूषायां कदम्बके, मे., वि. अथ पेटकम्। मञ्जूषायां समूहे च, हे द्वन्द्वेऽपि पेटकोऽस्त्रियाम्, त्रि.

**पेय**—पेयं पातव्यपयसो. पेया श्राणाच्छमण्डयोः, मे , हे., वि.

**पेशल**—पेशलो रुचिरे दक्षे, मे , वि. पेशलः कुशले रम्ये, हे. चारौ दक्षे च पेशलः, अ.

**पेशी**—पेशी सुपक्वकलिले मास्या खड्गपिधानके। मांसपिण्ड्यां मण्डभेदे, मे. पेशी पललपिण्ड्या स्यान्मास्या खड्गपिधानके। मण्डभेदेऽपि पेशी स्या-त्सुपक्वकलिलेऽपि च, वि. पेशी मास्यसिकोशयो.। मण्डभेदे पलपिण्डे सुपक्व-कलिलेऽपि च, हे.

**पोटगल**—अथ पोटगल. पुसि नले च काशमत्स्ययोः, मे. स्मृतः पोटगलः काशे नले पोटगलो झसे, वि. पोटगलो नले काशे झसे, हे. नले काशे पोटगलः, त्रि.

**पोत**—पोतः शिशौ वहित्रे च गृहस्थाने च वाससि, मे. पोतः शिशौ वहित्रे च, वि. पोतः शिशौ प्रवहणे, हे. यानपात्रे शिशौ पोत', अ.

**पोत्र**—पोत्रं वस्त्रे मुखाग्रे च शूकरस्य हलस्य च, मे., वि , हे. पोत्रं मुखाग्रे क्रोडहलयोः, अ.

**पौर**—पौर त्रिपु पुरोद्भूते कत्तृणे तु नपुसकम्, मे पौरन्तु कत्तृणे पौर स्मृत पुरभवेऽन्यवत्, वि पौर क्तृणे पुरजे, हे

**पौरुष**—पौरुष पुरुपस्य स्याद्भावे कर्मणि तेजसि। ऊर्ध्वविस्तृतदो-पाणिनृमाने त्वभिधेयवत्, मे पौरुष पुरुपस्योक्त भावे कर्मणि तेजसि। ऊर्ध्व-विस्तृतदो पाणिनृमानेऽपि च पौरुषम्, वि पौरुषम्। ऊर्ध्वविस्तृतदो पाणिपुरुषो-न्मानतेजसो। पुस कर्मणि भावे च, हे पुभावे तत्नियायाञ्च पौरुषम्, अ पौरुष मानभेदे च, त्रि मानविशेषेऽपि पौरुषव्यामौ, ह

**पौरुषेय**—पौरुषेय कृते पुसा विकारे पुरुपस्य च। त्रिपु ना सङ्घवधयो पुरुपस्य पदान्तरे, मे पौरुषेयो विकारे स्यात्पुरुपस्य पदान्तरे। पुस समूह-वधयो पुरुषेण कृतेऽपि च, वि पौरषेय पुरुषेण कृतेऽस्य च हिते वधे। समूहे च विकारे च, हे पुरुषेण कृते कार्ये पुरुषाणा कदम्बके। विकारवधयो पुस पौरुषेय-पद विदु, शा

**पौर्णमास**—पौर्णमास पुमान् यज्ञभेदे स्त्री पूर्णिमातिथौ, मे पौर्णमास-पौर्णमास्यौ यज्ञपूर्णिमयो क्रमात्, वि पौर्णमासो यागभेदे पौर्णमासी तु पूर्णिमा, हे

**पौलस्त्य**—पौलस्त्यस्तु कुबेरे स्याद्दशग्रीवे तु पुस्ययम्, मे पौलस्त्यो रावणे श्रीदे, वि, हे पौलस्त्यौ रावणश्रीदौ, त्रि

**पौष**—पौषो मासे तत्पूर्णिमातिथौ स्त्रियया, मे पौषो मासविशेषे स्यात्पौषन्तु महयुद्धयो, वि पौषो मासप्रभेदे स्यात्पौषन्तु महयुद्धयो, हे

**प्र**—प्र प्रकर्षे गताद्यर्थे, मे, त्रि प्र स्याद्गताद्यर्थप्रकर्षयो, हे

**प्रकर**—प्रकर स्यात्पुमान् राशौ विकीर्णकुसुमादिपु। नपुसक जोङ्गके स्त्री नाटयाङ्गे चत्वरावनौ, मे प्रकरश्चोपकारश्च विकीर्णकुसुमादिपु। सहतौ चोप-कृत्याया यथासख्यमवस्थितौ॥ जोङ्गके प्रकर प्रोक्त प्रकरी चत्वरावनौ, वि प्रकर कीर्णपुष्पादौ सहतौ प्रकर पुन। जोङ्गके प्रकरी त्वर्थप्रकृतौ चत्वरावनौ, हे

**प्रकरण**—प्रकरण स्याद्विश्रामे रूपके, हे

**प्रकाण्ड**—प्रकाण्डो न स्त्री विटपे मलशाखान्तरे तरो। शस्ते, मे प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरो, वि प्रकाण्ड स्तम्बशस्तयो। स्कन्धमूलान्तरे तरो, हे स्तम्बे शस्ते प्रकाण्डोऽस्त्री, त्रि

**प्रकार**—प्रकारस्तुल्यभेदयो, मे प्रकार सदृशे भेदे, त्रि, हे प्रकारो भेद-सादृश्ये, अ

**प्रकाश**—प्रकाशस्तु स्फुटे स्यात प्रहासातपयोरपि, मे प्रकाशोऽतिप्रसिद्धे

स्यात्प्रहासातपयोः स्फुटे, वि. प्रकाशः स्फुटहासयोः। उद्योते च प्रसिद्धे च, हे. प्रकाशोऽतिप्रसिद्धेऽपि, अ

**प्रकीर्णक**—प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे, मे. प्रकीर्णकं ग्रन्थभेदे चामरे विस्तरे हये, वि. प्रकीर्णकं तुरङ्गमे। चामरे विस्तरे ग्रन्थभेदे, हे. चामरे ग्रन्थभेदे च विस्तारेऽपि प्रकीर्णकम्, त्रि.

**प्रकीर्य**—प्रकीर्यः पूतिकरजे विनिकीर्ये तु वाच्यवत्, मे. प्रकीर्यः पूतिकरजे विनिकीर्णे तु वाच्यवत्, वि.

**प्रकृति**—प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौर-वर्गेऽमी पक्षत्यादयः स्त्रियाम्, मे. प्रकृतिः सहजे योनावमात्ये परमात्मनि, वि. प्रकृतिर्योनिशिल्पिनोः। पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः। प्रत्यया-त्पूर्विकायाञ्च, हे. प्रकृतिर्योनिलिङ्गे च, अ. प्रकृतिर्गुणसाम्ये स्यात्स्वभावा-मात्ययोरपि, त्रि. सत्त्वादीनां साम्यावस्थां प्रकृतिं वदन्ति तत्त्वज्ञाः। पौरामात्या-दीनि च कारणकार्यस्वरूपाणि, ह.

**प्रकोष्ठ**—प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च। भूपकक्षान्तरेऽपि स्यात्, मे. प्रकोष्ठो विस्तृतकरे भूपकक्षान्तरेऽपि च। कूर्परादधरे चापि, वि. प्रकोष्ठ. कूर्परावस्ताद्भूपकक्षान्तरेऽपि च। हस्ते च विस्तृतकरे, हे. प्रकोष्ठौ बाहुगेहांशौ, त्रि. प्रकोष्ठ. कूर्परस्याधः प्रकोष्ठो द्वारकोष्ठके, अने.

**प्रक्रम**—प्रक्रमः क्रमेऽवसरे, मे. प्रक्रमोऽवसरे क्रमे, वि., हे.

**प्रक्रिया**—प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः, हे.

**प्रखर**—प्रखरो हयसन्नाहे कुक्कुरेऽश्वतरेऽपि च। पुंसि त्रिष्वत्यन्तखरे, मे. प्रखरोऽश्वतरे शुनि। तुरङ्गाणाञ्च सन्नाहे प्रखरोऽतिभृशे खरे, वि. प्रखरः पुन.। वेसरे हयसन्नाहे कुक्कुरेऽतिभृशे खरे, हे.

**प्रगाढ**—प्रगाढः कृच्छ्रदृढयोः, मे. प्रगाढो दृढकृच्छ्रयोः, वि., हे. प्रगाढं भृशकृच्छ्रयोः, अ.

**प्रग्रह**—प्रग्रहस्तु तुलासूत्रे बन्दर्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णे हलिपादपे, मे. प्रग्रहस्तु तुलासूत्रे वन्दद्या नियमने भुजे। हयादिरश्मौ रज्ज्वां च सुवर्णे हलिपादपे, वि. प्रग्रह. किरणे भुजे। तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हलिपादपे॥ बन्धने वन्दयां, हे. प्रग्रह आबन्धनेऽप्युक्तः, ह. v. प्रग्राह.

**प्रग्राह**—प्रग्राहस्तु तुलासूत्रे वृषादिप्रग्रहेऽपि च, मे. प्रग्राहः स्यात्तुलासूत्रे वृषादीनाञ्च बन्धने, हे. तुलासूत्रेऽश्वादिरश्मौ प्रग्राहो प्रग्रहोऽपि च, अ.

**प्रघण (घाण)**—प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्‌गरे, मे , वि प्रघाणोऽलिन्दके ताम्रकलशे लोहमुद्‌गरे, हे प्रघणोऽस्त्रगृहाशयो , त्रि

**प्रचण्ड**—प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि, मे , वि प्रचण्ड स्यात्प्रतापिनि। वलक्षे करवीरे च, हे

**प्रचलाक**—प्रचलाक शराघाते शिखण्डे च भुजङ्गमे, मे प्रचलाक शराघाते वर्हचन्द्रे भुजङ्गमे, वि प्रचलाको भुजङ्गमे। शराघाते शिखण्डे च, हे शराहत च सर्पे च प्रचलाक प्रचक्षते हा

**प्रचलाकिन्**—प्रचलाकी मयूरे स्याद्भुजङ्गे चापि दृश्यते, मे प्रचलाकी भुजङ्गे स्याच्चित्रमेखलकेऽपि च, वि प्रचलाकी सर्पे मयूरे, हे

**प्रचेतस्**—प्रचेता पाशिनि मुनौ ना प्रकृष्टहृदि त्रिपु, मे

**प्रजनन**—प्रजनन योनौ जन्मन्यपि क्लीवम्, मे भवेत्प्रजनन योनौ जन्मनि प्रगमेऽपि च वि प्रजनन प्रगते योनिजन्मनो , हे

**प्रजा**—प्रजा लोके च सन्ताने मे प्रजा सन्तानलोकयो , वि प्रजा लोके सन्ततौ च हे प्रजा स्यात्सन्ततौ जने अ

**प्रजापति**—प्रजापतिश्च दक्षादौ महीपाले विधातरि मे प्रजापतिर्विधौ भूपे, वि प्रजापतिर्ब्रह्मराज्ञोर्जामातरि दिवाकरे। वह्नौ त्वष्टरि दक्षादौ, हे विधौ भूपे प्रजापति , त्रि

**प्रज्ञ**—प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योपिति, मे प्रज्ञा बुद्धौ पण्डितेऽपि प्रज्ञो वाच्यवदिष्यते, वि प्रज्ञ प्राज्ञ प्रज्ञा तु शेमुपी, हे प्रज्ञा सबुद्धिचिह्नयो, अने

**प्रज्ञान**—प्रज्ञान बुद्धिचिह्नयो मे , अ प्रज्ञान लाञ्छने धियि, वि प्रज्ञान बुद्धौ चिह्ने च, हे

**प्रणय**—प्रणय प्रेम्णि विश्रम्भे याच्ञाप्रसरयोरपि, वि प्रणय प्रसरे प्रेम्णि याच्ञाविश्रम्भयोरपि। निर्वाणेऽपि, मे प्रणय प्रेमयाच्ञयो । विश्रम्भे प्रसर चापि हे प्रणयास्त्वमी। विश्रम्भयाच्ञाप्रेमाण , अ

**प्रणाद**—प्रणादस्तु पुमास्तारशब्दे च श्रवणामये, मे प्रणादस्तारशब्दे स्यात्प्रणाद श्रवणामये, वि

**प्रणाय्य**—प्रणाय्योऽसम्मते प्रोक्तोऽप्यभिलापविवर्जिते, वि प्रणाय्य वाम वर्जिते। असम्मते, हे प्रणाय्योऽसम्मतेऽपि स्यादभिलापविवर्जिते मे

**प्रणिधान**—प्रणिधान प्रयत्ने स्यात्समाधौ च प्रवेशने, मे प्रणिधान प्रयत्ने स्यात्प्रवेशे च समाहितौ, वि प्रणिधानमभियोगे समाधानप्रयोगयो , हे

**प्रणिधि**—प्रणिधिर्नाऽर्थने चरे, मे. प्रणिधिश्चरे याच्ञायाम्, वि. प्रणिधिर्याचने चरे, हे. प्रणिधिः प्रार्थने चरे, अ.

**प्रणिहित**—अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते, मे. भवेत्प्रणिहितं लब्धे विन्यस्ते च समाहिते, वि. प्रणिहितन्तु संप्राप्तनिहितयोः समाहिते, हे.

**प्रणीत**—प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम्। त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते, मे. प्रणीतः संस्कृते वह्नौ विहिते च प्रवेशिते। निक्षिप्ते चोपसम्पन्ने प्रणीतो भेद्यवन्मतः, वि. प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते। संस्कृताग्नौ, हे.

**प्रतति**—प्रततिर्विस्तृतौ वल्ल्याम्, मे. प्रततिर्विस्तृतिर्लता, हे.

**प्रतल**—प्रतलं पातालभेदे तताङ्गुलिकरे पुमान्, मे. प्रतल पातालभेदे तताङ्गुलिकरेऽपि च, हे. v. सुतल.

**प्रताप**—प्रतापस्तापतेजसो', मे. प्रताप: स्वेदतेजसो', वि.

**प्रति**—प्रति प्रतिनिधावित्थम्भूताख्यानाभिमुख्ययो'। मात्रार्थभागवीप्सासु लक्षणप्रतिदानयोः, मे. प्रति प्रतिनिधौ वीप्सालक्षणाया प्रयोगतः। मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति, वि. प्रतीत्थम्भूतभागयोः। प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपि, हे. प्रकाशे सम्भवे प्राहु' प्रधानसदृशे प्रति, ह प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः, अ.

**प्रतिकार**—प्रतिकारः समे भटे, वि, हे.

**प्रतिकृति**—प्रतिकृतिरथार्च्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री, मे. प्रतिकृतिः प्रतीकारे प्रतिमायाञ्च पूजने, वि. प्रतिकृतिस्तु पूजिते। प्रतिमाया प्रतीकारे, हे. प्रतिकारे प्रतिकृतिः प्रतिबिम्बे, त्रि.

**प्रतिकृष्ट**—प्रतिकृष्टं मतं गुह्ये द्विरावृत्त्या च कर्षिते, मे., वि. प्रतिकृष्टन्तु गुह्ये स्याद् द्विरावृत्त्या च कर्षिते, हे.

**प्रतिक्षिप्त**—प्रतिक्षिप्तं वारिते स्यात्प्रेषिते पञ्चकं त्रिषु, मे. प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते, वि. प्रतिक्षिप्त प्रतिहते निषिद्धे प्रेषितेऽपि च, हे प्रेषितेऽपि प्रतिक्षिप्तम्, त्रि.

**प्रतिग्रह**—प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे, मे., वि. प्रतिग्रह' सैन्यपृष्ठे ग्रहभेदे पतद्ग्रहे। क्रियाकारे दानद्रव्ये तद्ग्रहे स्वीकृतावपि, हे.

**प्रतिघ**—प्रतिघः प्रतिघाते स्यात् क्रोधेऽपि परिकीर्तितः, मे. प्रतिघः प्रतिघाते च रोषे च प्रतिघो मतः, वि. प्रतिघौ रुट्प्रतिघातौ, हे. प्रतिघो रोषघातयोः, त्रि.

**प्रतिपत्ति**—प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। सम्प्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति, मे. प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यते, वि. प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे, हे.

**प्रतिपद्**—प्रतिपत् स्त्री तिथौ मतौ, मे. प्रतिपत्तिथिसंविदोः, वि. प्रतिपत्संविदि तिथौ, हे. अथ प्रतिपत् तिथिसविदोः, त्रि. प्रतिपत्प्रतिपत्तावपि, ह.

**प्रतिपन्न**—प्रतिपन्नोऽन्यलिङ्ग. स्याद्विज्ञातेऽङ्गीकृतेऽपि च, मे. प्रतिपन्नः स्मृतो धीरैर्विज्ञातेऽङ्गीकृतेऽपि च, वि. प्रतिपन्नस्तु विक्रान्तेऽङ्गीकृतेऽपि च, हे.

**प्रतिपादन**—प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने, मे. स्यात्प्रतिपादनं दाने प्रतिपत्तौ च बोधने, वि. प्रतिपादनं बोधनदानयोः, हे.

**प्रतिबन्ध**—प्रतिबन्ध कुलाचारः प्रतिबन्धो बलक्रिया, अने.

**प्रतिभय**—प्रतिभयं भये। घोरेऽपि, मे. प्रतिभयं भये। भीष्मे, हे.

**प्रतिमा**—प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि, मे. प्रतिमा दन्तबन्धे स्याद्गजस्यानुकृतावपि, वि गजाना दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि, त्रि.

**प्रतिमान**—प्रतिमानं प्रतिच्छायागजकुम्भान्तरालयोः, मे. प्रतिमानं प्रतिच्छायागजदन्तान्तरालयो, वि, त्रि. प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे, हे.

**प्रतियत्न**—प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च, मे., वि. प्रतियत्नः संस्कारे स्यादुपग्रहणलिप्सयोः, हे. प्रतियत्नावुभौ लिप्सोपग्रहौ, अ. प्रतियत्नः संस्कारे लिप्सोपग्रहणयोश्च निर्दिष्टः, ह.

**प्रतिरोधक**—प्रतिरोधकस्तु चोरः स्याद्दुर्जनः प्रतिरोधकः, अने.

**प्रतिश्रय**—प्रतिश्रयः सभायाञ्चाशये, मे. प्रतिश्रयः सभायां स्यादाशये च प्रतिश्रयः, वि. *प्रतिश्रयः सभौकसोः, हे. सभायाञ्च प्रतिश्रयः, अ.*

**प्रतिष्कश**—प्रतिष्कशः सहाये स्याद्वार्ताहरपुरोगयोः, मे., वि. प्रतिष्कश. पुरोगमे। वार्ताहरे सहाये च, हे. वार्ताहरे पुरोगे च सहाये च प्रतिष्कशः, त्रि.

**प्रतिष्ठा**—प्रतिष्ठा गौरवे क्षितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः, मे. प्रतिष्ठा स्थानमात्रके। गौरवे यागनिष्पत्तिचतुरक्षरपद्ययोः, वि. प्रतिष्ठा गौरवे स्थितौ। छन्दोजातौ योगसिद्धौ, हे.

**प्रतिसर**—भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डने। आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः, मे. आहुः प्रतिसरो हस्तसूत्रे माल्येऽपि मण्डने। व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकङ्कणे।

मन्त्रभेदेऽपि, वि. प्रतिसरश्चमूपृष्ठे नियोज्यकरसूत्रयोः। मन्त्रभेदे व्रणशुद्धौ चारक्षे मण्डने स्रजि। कङ्कणे, हे. ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, अ.

**प्रतिसूर्यक**—प्रतिसूर्यकमिच्छन्ति कृकलासोपसूर्ययोः, वि.

**प्रतिसृष्ट**—प्रतिसृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत्, मे., वि. प्रतिसृष्ट पुनः प्रत्याख्याते च प्रेषितेऽपि च, हे. प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम्, त्रि.

**प्रतिहत**—प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः, हे भवेत्प्रतिहतो द्विष्टे प्रतिस्खलितरुद्धयोः, वि., मे. द्विष्टेऽपि च प्रतिहतः, त्रि.

**प्रति(ती)हार**—प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति, मे. प्रतीहारप्रतीहार्यौ द्वाःस्थे द्वारेऽप्यनन्तरे, वि. प्रतीहारो द्वारि द्वाःस्थे, हे. द्वारेऽपि प्रतिहारः, ह. द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे, अ.

**प्रतीक**—प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः, मे. प्रतीकोऽवयवे प्रोक्तः प्रतिकूलविलोमयोः, वि. प्रतीकोऽङ्गप्रतीपयोः, हे प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्, ह.

**प्रतीक्ष्य**—प्रतीक्ष्यः प्रतिपाल्ये स्यात्पूज्ये च, हे.

**प्रतीत**—प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु, मे. प्रतीतः सादरे ज्ञाते प्रख्याते प्राज्ञहृष्टयोः, वि. प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः, हे. ख्याते हृष्टे प्रतीतः, अ. प्रतीतः सादरेऽपि च, त्रि. v. वसन्तदूत.

**प्रत्यच्(ञ्च्)**—प्रत्यग् दिग्देशकालेषु वाच्यवत्त्रितयेऽव्ययम्, मे. v. उदच्.

**प्रत्यय**—प्रत्ययः प्रथितत्वे च सनादिज्ञानयोरपि। आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु, मे. प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु। प्रथितत्वे सनादौ चाप्यधीनज्ञानयोरपि। अतिक्रमे च दण्डे च विनाशे दोषकृच्छ्रयोः, वि. प्रत्ययो ज्ञानरन्ध्रयोः। विश्वासे शपथे हेतावाचारप्रथितत्वयोः। अधीने निश्चये स्वादौ, हे. प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु। रन्ध्रे शब्दे, अ.

**प्रत्यर्थिन्**—प्रत्यर्थी वाच्यलिङ्गः स्याच्छत्रौ च प्रतिवादिनि, मे. प्रत्यर्थी कथितः शत्रौ प्रत्यर्थी प्रतिवादिनि, वि.

**प्रत्यालीढ**—प्रत्यालीढन्तु चरणन्यासभेदेऽशिते त्रिषु, मे.

**प्रत्युद्गमनीय**—प्रत्युद्गमनीयमुपस्थेये धौताशुवद्वये, मे., वि, हे.

**प्रत्यूष**—प्रत्यूषोऽहर्मुखे वसौ, मे., वि. प्रत्यूषः स्याद्वसौ प्रातः, हे.

**प्रथम**—*प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्, मे. प्रथमः स्यात्प्रधानाद्योः,* हे. आद्ये प्रधाने प्रथमस्त्रिषु, अ.

**प्रतिपत्ति**—प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। सम्प्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति, मे. प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यते, वि. प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे, हे.

**प्रतिपद्**—प्रतिपत् स्त्री तिथौ मतौ, मे. प्रतिपत्तिथिसंविदोः, वि. प्रतिपत्संविदि तिथौ, हे. अथ प्रतिपत् तिथिसंविदोः, त्रि. प्रतिपत्प्रतिपत्तावपि, ह.

**प्रतिपन्न**—प्रतिपन्नोऽन्यलिङ्ग. स्याद्विज्ञातेऽङ्गीकृतेऽपि च, मे. प्रतिपन्नः स्मृतो धीरैर्विज्ञातेऽङ्गीकृतेऽपि च, वि. प्रतिपन्नस्तु विक्रान्तेऽङ्गीकृतेऽपि च, हे.

**प्रतिपादन**—प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने, मे. स्यात्प्रतिपादनं दाने प्रतिपत्तौ च बोधने, वि प्रतिपादनं बोधनदानयोः, हे.

**प्रतिबन्ध**—प्रतिबन्ध कुलाचारः प्रतिबन्धो बलक्रिया, अने.

**प्रतिभय**—प्रतिभयं भये। घोरेऽपि, मे. प्रतिभयं भये। भीष्मे, हे.

**प्रतिमा**—प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि, मे. प्रतिमा दन्तबन्धे स्याद्गजस्यानुकृतावपि, वि गजाना दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि, त्रि.

**प्रतिमान**—प्रतिमानं प्रतिच्छायागजकुम्भान्तरालयोः, मे. प्रतिमानं प्रतिच्छायागजदन्तान्तरालयो, वि, त्रि. प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे, हे.

**प्रतियत्न**—प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च, मे., वि. प्रतियत्नः संस्कारे स्यादुपग्रहणलिप्सयोः, हे. प्रतियत्नावुभौ लिप्सोपग्रहौ, श्र. प्रतियत्नः संस्कारे लिप्सोपग्रहणयोश्च निर्दिष्टः, ह.

**प्रतिरोधक**—प्रतिरोधकस्तु चोरः स्याद्दुर्जनः प्रतिरोधकः, अने.

**प्रतिश्रय**—प्रतिश्रयः सभायाञ्चाशये, मे. प्रतिश्रयः सभाया स्यादाशये च प्रतिश्रयः, वि. प्रतिश्रयः सभौकसोः, हे. सभायाञ्च प्रतिश्रयः, श्र.

**प्रतिष्कश**—प्रतिष्कशः सहाये स्याद्वार्ताहरपुरोगयोः, मे., वि. प्रतिष्कशः पुरोगमे। वार्ताहरे सहाये च, हे. वार्ताहरे पुरोगे च सहाये च प्रतिष्कशः, त्रि.

**प्रतिष्ठा**—प्रतिष्ठा गौरवे क्षितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः, मे. प्रतिष्ठा स्थानमात्रके। गौरवे यागनिष्पत्तिचतुरक्षरपद्ययोः, वि. प्रतिष्ठा गौरवे स्थितौ। छन्दोजातौ योगसिद्धौ, हे.

**प्रतिसर**—भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डने। आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः, मे. आहुः प्रतिसरो हस्तसूत्रे माल्येऽपि मण्डने। व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकङ्कणे।

मन्त्रभेदेऽपि, वि. प्रतिसरश्चमूपृष्ठे नियोज्यकरसूत्रयोः। मन्त्रभेदे व्रणशुद्धौ चारक्षे मण्डने स्रजि। कङ्कणे, हे. ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, अ.

प्रतिसूर्यक—प्रतिसूर्यकमिच्छन्ति कृकलासोपसूर्ययोः, वि.

प्रतिसृष्ट—प्रतिसृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत्, मे., वि. प्रतिसृष्टः पुनः प्रत्याख्याते च प्रेषितेऽपि च, हे. प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम्, त्रि.

प्रतिहत—प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः, हे. भवेत्प्रतिहतो द्विष्टे प्रतिस्खलितरुद्धयोः, वि., मे. द्विष्टेऽपि च प्रतिहतः, त्रि.

प्रति(ती)हार—प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति, मे. प्रतीहारप्रतीहार्यौ द्वाःस्थे द्वारेऽप्यनन्तरे, वि. प्रतीहारो द्वारि द्वाःस्थे, हे. द्वारेऽपि प्रतिहारः, ह. द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे, अ.

प्रतीक—प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयो, मे. प्रतीकोऽवयवे प्रोक्तः प्रतिकूलविलोमयोः, वि. प्रतीकोऽङ्गप्रतीपयोः, हे. प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्, ह.

प्रतीक्ष्य—प्रतीक्ष्यः प्रतिपाल्ये स्यात्पूज्ये च, हे.

प्रतीत—प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु, मे. प्रतीतः सादरे ज्ञाते प्रख्याते प्राज्ञहृष्टयोः, वि. प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः, हे. ख्याते हृष्टे प्रतीतः, अ. प्रतीतः सादरेऽपि च, त्रि. v. वसन्तदूत.

प्रत्यच्(ञ्च्)—प्रत्यग् दिग्देशकालेषु वाच्यवत्त्रितयेऽव्ययम्, मे. v. उदच्.

प्रत्यय—प्रत्ययः प्रथितत्वे च सनादिज्ञानयोरपि। आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु, मे. प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु। प्रथितत्वे सनादौ चाप्यधीनज्ञानयोरपि। अतिक्रमे च दण्डे च विनाशे दोषकृच्छ्रयोः, वि. प्रत्ययो ज्ञानरन्ध्रयोः। विश्वासे शपथे हेतावाचारप्रथितत्वयोः। अधीने निश्चये स्वादौ, हे. प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु। रन्ध्रे शब्दे, अ.

प्रत्यर्थिन्—प्रत्यर्थी वाच्यलिङ्गः स्याच्छत्रौ च प्रतिवादिनि, मे. प्रत्यर्थी कथितः शत्रौ प्रत्यर्थी प्रतिवादिनि, वि.

प्रत्यालीढ—प्रत्यालीढन्तु चरणन्यासभेदेऽशिते त्रिषु, मे.

प्रत्युद्गमनीय—प्रत्युद्गमनीयमुपस्थेये धौतांशुकद्वये, मे., वि., हे.

प्रत्यूष—प्रत्यूषोऽहर्मुखे वसौ, मे., वि. प्रत्यूषः स्याद्वसौ प्रातः, हे.

प्रथम—प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्, मे. प्रथमः स्यात्प्रधानाद्योः, हे. माद्ये प्रधाने प्रथमस्त्रिषु, अ.

**प्रभाव**—प्रभावः शक्तितेजसोः, मे., वि. प्रभावस्तेजसि शक्तौ, हे.

**प्रभूत**—प्रभूतमुद्गते प्राज्ये, मे., हे. प्रभूत प्राज्य उद्गते, वि.

**प्रमथ**—प्रमथा स्याद्धरीतक्यां हरपारिषदे पुमान्, मे. प्रमथोऽपि गणे प्रोक्त. पथ्यायां प्रमथा भवेत्, वि.

**प्रमद**—प्रमद सम्मदे मत्ते स्त्रियामुत्तमयोषिति, मे. प्रमदः सम्मदे मत्त-कामिन्यां प्रमदा मता, वि. प्रमदो मुदि। प्रमदा स्त्री, हे.

**प्रमाण**—प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि। इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि, मे. प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु। एकताया-मियत्तायां हेतुशास्त्रेषु च स्मृतम्, वि. प्रमाणन्तु मर्यादासत्यवादिनो। प्रमातर्ये-कतेयत्तानित्येषु हेतुशास्त्रयो', हे प्रमाण हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु, अ शास्त्रे प्रमाणमिच्छन्ति स्थितौ हेतौ च कोविदा', अने.

**प्रमीढ**—प्रमीढो मूत्रिते घने, वि, मे.

**प्रमीत**—प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेऽपि मृतेऽपि च, मे. प्रमीतन्तु प्रोक्षितेऽपि मृतेऽपि च, वि. प्रमीतं प्रोक्षिते मृते, हे.

**प्रमुख**—प्रमुख. प्रथमे श्रेष्ठे, मे., वि. प्रमुखं प्रथमे मुख्ये, हे. आदौ प्रधाने प्रमुखम्, त्रि.

**प्रयाग**—प्रयागस्तीर्थभेदे स्याद्यज्ञे शतमखाश्वयोः, मे., वि प्रयागो वाजि-शक्रयोः। यज्ञे तीर्थविशेषे च, हे.

**प्रयोग**—प्रयोगः कार्मणेऽपि स्यात्प्रयुक्तौ च निदर्शने, मे. प्रयोगः कार्मणे प्रोक्तः प्रयुक्तौ च निदर्शने, वि. प्रयोगस्तु निदर्शने। कार्मणे च प्रयुक्तौ च, हे.

**प्रयोजन**—प्रयोजनं कार्यहेत्वोः, मे., वि., हे.

**प्ररूढ**—प्ररूढो जरठे वद्धमूले, मे. प्ररूढो जरठे स्मृतः। बद्धमूले, वि. प्ररूढो जरठे वृद्धे, हे.

**प्रलम्ब**—प्रलम्बो दैत्यभेदे स्यात्त्रपुपेऽपि पयोधरे। लताङ्कुरेऽपि शाखाया हारभेदे प्रलम्बने, मे. प्रलम्बो दैत्यभेदे स्याद्वालाङ्कुरकशाखयो.। प्रलम्बो हारभेदे स्यात्त्रपुपेऽपि पयोधरे, वि. प्रलम्बस्तु प्रलम्बनम्। दैत्यस्तालाङ्कुर' शाखा, हे. प्रलम्बो दैत्यशाखयोः, त्रि. v. प्रालम्ब.

**प्रलय**—प्रलयो मृत्युकल्पान्तमूर्च्छापायेषु पुंस्ययम्, मे. प्रलयो मृतौ। संहारे नष्टचेष्टत्वे, हे.

**प्रवचन**—अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च, मे. प्रवचनं स्मृतं वेदे प्रकृष्ट-वचनेऽपि च, वि. स्यात्प्रवचनमागमे। प्रकृष्टवचने, हे.

**प्रवचनीय**—अथ प्रवचनीयञ्च स्यात्प्रवक्तृप्रवाच्ययोः, मे. भवेत्-प्रवचनीयाख्यं प्रवाच्ये च प्रवक्तरि, वि.

**प्रवण**—प्रवणो ना चतुष्पथे। क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु, मे. प्रवण क्रमनिम्नोर्व्यामायत्ते च चतुष्पथे। प्रगुणेऽपि क्षणेऽपि स्यात्, वि. प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे। आयत्ते च, हे. प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे, अ.

**प्रवर**—प्रवर. सन्ततौ गोत्रे क्लीवं श्रेष्ठे तु वाच्यवत्, मे. प्रवरं सन्ततौ गोत्रे श्रेष्ठे तु प्रवरोऽन्यवत्, वि. प्रवरं सन्ततौ गोत्रे श्रेष्ठे च, हे.

**प्रवह**—प्रवहस्तु वहिर्यात्रामातरिश्वप्रभेदयो', मे. प्रवहो वायुभेदे स्यात्-वायुमात्रे वहिर्गतौ, हे.

**प्रवारण**—प्रवारणं निषेधे स्यात्काम्यदाने च न द्वयो', मे. प्रवारणं निषेधे स्यात्काम्यदाने प्रवारणम्, वि. प्रवारण काम्यदाने निषेधे च, हे.

**प्रवाह**—प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिण, मे. प्रवाहो व्यवहारे स्यादपि स्रोतसि वारिण, वि प्रवाहो व्यवहाराम्बुवेगयो, हे. प्रवाहो व्यवहारे च, त्रि.

**प्रविदारण**—प्रविदारणमाख्यातं सम्परायेऽवदारणे, मे प्रविदारणमाख्यातं सङ्गरे च विदारणे, वि. प्रविदारणम्। दारणे युधि च, हे.

**प्रवृत्ति**—प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्तने। स्रवन्त्यादौ च (स्त्रियां), मे. प्रवृत्ति कथिता वृत्तौ प्रवाहोदन्तयोरपि, वि. प्रवृत्तिर्वृत्तौ वार्तायां प्रवाहे, हे. वृत्तिवार्ताप्रवाहेषु प्रवृत्तिः, त्रि.

**प्रवेणि**—प्रवेणि· स्त्री कुथावेण्यो, मे. प्रवेणिर्वेणिकुथयोः, वि., हे

**प्रव्रजिता**—अथ प्रव्रजिता मासीमुण्डीरीतापसीषु च, मे. प्रव्रजिता तपस्विन्या मुण्डीर्यां मांसिकौषधौ, वि. प्रव्रजिता तु मुण्डीर्यां तापस्या मांसिकौषधे, हे.

**प्रष्ठ**—प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चण्डालिकौषधौ, मे. प्रष्ठः श्रेष्ठाग्रयोरन्न. प्रष्ठा चण्डालिकौषधौ, वि.

**प्रष्ठहायन**—स्यात्प्रष्ठहायनो धान्यविनेपे च मतङ्गजे, मे.

**प्रसन्न**—प्रसन्ना स्त्री सुराया स्यात्स्वच्छसन्तुष्टयोस्त्रिषु, मे. प्रसन्ना मदिरायाञ्च प्रमादसहितेऽन्यवत्, वि. प्रसन्नं प्रसादवत्। प्रसन्ना तु मदिरायाम्, हे.

**प्रसर**—प्रसरः प्रणये वेगे, मे. प्रसरः प्रणये वेगे सङ्गरे च, वि प्रसरस्तु सङ्गरे प्रणये जवे, हे. प्रसर प्रणयेऽपि निर्दिष्टः, ह.

**प्रसव**—प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च, मे

प्रसवस्तु फले पुष्पे वृक्षाणा गर्भमोचने । तोकोत्पादे च, वि प्रसव पुष्पफलयोरपत्ये गर्भमोचने । उत्पादे च, हे स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने, अ

**प्रसव्य**—प्रसव्य वाच्यलिङ्ग स्यात्प्रतिकूलानुकूलयो , मे प्रसव्यमनुकूले स्यात्प्रतिकूले च वाच्यवत्, वि प्रसव्यस्तु प्रतिकूलानुकूलयो , हे

**प्रसहन**—प्रसहनमपि भङ्गे स्यात्क्षेपे, मे

**प्रसाद**—प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु, मे वि प्रसादोऽनुग्रह-स्वास्थ्यप्रसत्तिषु । काव्यगुणे, हे स्यात्प्रसादोऽनुरागेऽपि, अ प्रसादस्त्वनुरोधने । स्वच्छे काव्यगुणे च, त्रि

**प्रसाधन**—प्रसाधनी तु कङ्कत्या सिद्धौ वेशे प्रसाधनम मे प्रसाधनी कङ्कतिकासिद्धचोर्वेषे प्रसाधनम्, वि प्रसाधनी कङ्कतिकासिद्धचो प्रसाधन पुन । वेषे हे

**प्रसिद्ध**—प्रसिद्धो भूषिते ख्याते, मे , हे प्रसिद्धोऽलङ्कृतेऽपि च । विख्यातेऽपि च, वि प्रसिद्धौ ख्यातभूषितौ, अ

**प्रसू**—प्रसूरश्वाजनन्योश्च कन्दलीवीरुधो स्त्रियाम्, मे प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोरपि, वि प्रसूरश्वा जनन्यपि, हे प्रसूरश्वाऽपि, अ

**प्रसूत**—प्रसूत कुसुमे क्लीव त्रिषु सञ्जातसूतयो , मे प्रसूत वाच्यवज्जाते प्रसूत कुसुमेऽपि च, वि प्रसूत जातपुष्पयो , हे

**प्रसूति**—प्रसूतिरुद्भवेऽपि स्यात्तनये दुहितर्यपि । स्त्रियाम्, मे प्रसूति स्तनयोत्पत्तौ तथा दुहितरि स्मृता, वि प्रसूति स्यादपत्ये प्रसवेऽपि च, हे प्रसूति-र्जन्मतोकयो , त्रि

**प्रसून**—प्रसूनो वाच्यवज्जाते क्लीवन्तु फलपुष्पयो , मे प्रसून वाच्यवज्जाते प्रसून फलपुष्पयो वि प्रसूनन्तु प्रसूते फलपुष्पयो , हे प्रसून पुष्पफलयो , अ

**प्रसृत**—प्रसृत सुप्रसारे स्याद्विनीते वेगित त्रिषु । अर्धाञ्जलौ तु पुलिङ्ग जङ्घाया प्रसृता मता, मे प्रसृत सुप्रसारे स्याद्विनीते वेगितेऽपि च । अर्धाञ्जलौ तु प्रसृत जङ्घाया प्रसृता मता, वि प्रसृतस्त्वर्धाञ्जलौ वेगिविनीतयो । तते च प्रसृता जङ्घा, हे प्रसृत कुब्जिते पाणौ जङ्घाया स्त्री गते त्रिषु, त्रि

**प्रसेक**—प्रसेक सेचने च्युतौ मे, वि

**प्रसेव**—प्रसेव पुसि वीणाङ्गे स्यूते च, मे प्रसेव कथितो धीरैर्वीणाङ्गस्यूतयो रपि, वि प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ, हे

**प्रस्तर**—प्रस्तरो ग्रावणि मणौ, मे प्रस्तर प्रस्तारे ग्रावणि मणौ च, हे v सस्तर

**प्रस्थ**—प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि, मे. प्रस्थः शिखरमानयोः, वि. प्रस्थः सानौ मानभेदे, हे. प्रस्थोऽस्त्री सानुमानयोः, अ. परिमाणेऽपि प्रस्थः, ह.

**प्रस्फोटन**—प्रस्फोटनं तु शूर्पे स्यात्ताडने च विकाशने, मे. प्रस्फोटनं भवेच्छूर्पे ताडने च प्रकाशने, वि. प्रस्फोटनं शूर्पे प्रकाशने। ताडने, हे.

**प्रहत**—प्रहतं वितते क्षणे, मे., वि. प्रहतं विस्तृते क्षणे, हे.

**प्रहसन**—प्रहसनमपि प्रहासे रूपकभेदे च परिहासे, मे. प्रहसनन्तु प्रहासाक्षेपयो रूपकान्तरे, हे. प्रहसनं भवेद्भङ्गे प्रहासाक्षेपयोरपि, वि.

**प्रहि**—प्रहिः कूप. प्रहि. सरः, अने.

**प्रह्लाद**—प्रह्लादः प्रमदे दैत्ये, वि प्रह्लादस्तु निनदे दानवान्तरे, हे.

**प्राच्(ञ्च्)**—प्राक् पूर्वस्मिन्नवान्तरे। अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि, मे. प्राक् प्रभातेऽप्यतीते च दिग्देशकालत. स्मृतम्। प्रागग्रेऽपि च पूर्वस्मिन् भवे प्रागप्यनन्तरे, वि. प्राक् पूर्वस्मिन् प्रभाते दिग्देशकालेष्ववान्तरे। अतीतेऽग्रे, हे प्राक्शब्दो दिशि देशे च काले च वाच्यलिङ्गक, मे.

**प्राण**—प्राणो हृन्मारुते वाले काव्यजीवेऽनिले वले। पुलिङ्गः पूरिते वाच्यलिङ्ग पुभूम्नि चासुपु, मे प्राणो हृन्मारुते वाले काव्यजीवेऽनिले वले। वाच्यवत्पूरिते प्राण प्राणाश्चासुपु कीर्तिता, वि. प्राणोऽनिले वले। हृद्वायौ पूरिते गन्धरसे प्राणास्तु जीविते, हे. बाले वाते वले प्राण. पूर्णे पुभूम्नि चासुपु, त्रि.

**प्राणक**—प्राणकः सत्त्वजातीये जीवकद्रुमवोलयो, मे., वि प्राणको जीववतरौ सत्त्वजातीयबोलयो, हे.

**प्राणनाथ**—प्राणनाथो यमे ना स्यादिष्टे प्राणाधिपे मतः, मे.

**प्राणिद्यूत**—प्राणिद्यूतं वदन्ति युद्धेऽपि, ह.

**प्राप्ति**—प्राप्तिः पूर्तिप्रदेशयो स्त्रियाम्, मे. प्राप्तिः पूर्तिप्रदेशयोः, वि.

**प्रादुस्**—नामप्राकाश्ययोः प्रादुः, अ प्रादुः प्राकाश्य इष्यते। सम्भाव्ये च प्रवृत्तौ च, मे.

**प्राध्व**—प्राध्वन्तु प्रणते चातिदूरवर्त्मनि वन्धने, मे. प्राध्वं सुप्रणते चातिदूरवर्त्मनि वन्धने, वि. प्राध्व दूरपथे प्रह्वे वन्धे, हे प्राध्वं बन्धनमित्युक्त प्राध्वं प्रह्वे च सूरिभिः, अने. प्रह्वबन्धनयोः प्राध्वम्, ह.

**प्राध्वम्**—प्राध्वं नम्रानुकूलयोः, मे., वि, हे.

**प्रान्तर**—प्रान्तरं विपिने दूरशून्यवर्त्मनि कोटरे, मे., वि. प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च, हे.

**प्राप्त**—प्राप्त लब्धे समञ्जसे, मे प्राप्त वित्ते समञ्जसे, वि लब्धे समञ्जसे प्राप्तम्, त्रि

**प्राप्तरूप**—प्राप्तरूपो ज्ञरम्ययो, मे प्राप्तरूपो बुधे रम्ये, वि प्राप्तरूप-स्वरूपाभिरूपा बुधमनोज्ञयो, अ v सुरूप

**प्राप्ति**—प्राप्तिर्महोदये। लाभेऽपि च स्त्रियाम्, मे प्राप्तिर्लाभे महोदये, वि प्राप्तिर्महोदये लाभे हे उदयेऽधिगमे प्राप्ति, अ उदयाधिगमौ प्राप्ती, अने

**प्राय**—प्राय पुमाननशने मृत्यौ बाहुल्यतुल्ययो, मे प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि, वि प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययो, हे प्रायो भूम्न्यन्त-गमने, अ प्रायो ना भूमतुल्ययो, नि

**प्रार्थित**—प्रार्थित याचिते शत्रुसरुद्धेऽभिहते त्रिषु, मे प्रार्थित याचिते शत्रुसरुद्धेऽभिहतेऽपि च, वि प्रार्थित हते। याचिते शत्रुसरुद्धे, हे अभियुक्तहतौ च प्रार्थितौ समौ, नि

**प्रालम्ब**—प्रालम्ब स्यात्पयोधरे। त्रपुषे हारभेदे च हे v प्रलम्ब

**प्रावृषेण्य**—प्रावृषेण्य पुमान्नीपे प्रावृट्कालभवे त्रिषु, मे

**प्रासाद**—प्रासादो देवनृपयोर्गृहे मे प्रासाद कथ्यते देवनरदेवनिवासयो, वि प्रासादो राजमन्दिरे। देवतायतने चापि हे

**प्रिय**—प्रियो हृद्येऽन्यवत् पुसि वृद्धिनामौषधौ धवे, मे प्रियो धवे सौहृद्ये च वृद्धिनामौषधेऽपि च, वि प्रियो वृद्धचौषधे हृद्ये धवे, हे

**प्रियवद**—प्रियवद खेचरे ना प्रियवाचि तु वाच्यवत्, मे प्रियवद खेचरे स्यात्प्रियवाचि तु वाच्यवत्, वि प्रियवद प्रियवादिनभश्चरविशेषयो, हे

**प्रियक**—प्रियक पीतशालके। नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च मे प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि। प्रियङ्गौ चित्रहरिणे पीतशाल तरावपि, हे प्रियक पीतशाले स्यान्नीपे चित्रमृगेऽलिनि। कुङ्कुमे च प्रियङ्गौ च, वि प्रियको मृगनीपयो, त्रि प्रियको बीजसारश्च प्रियकौ द्वीपिचिनकौ। प्रियक प्रियतोय स्यात्प्रियको मुदितको व्रती, अने

**प्रियङ्गु**—प्रियङ्गु स्त्री राजिकाकणयोरपि। फलिन्या कङ्गुसस्ये च, मे प्रियङ्गु फलिनीकङ्गुपिप्पलीराजिकासु च, वि प्रियङ्गू राजसर्षपे। पिप्पल्या फलिनीकङ्ग्वो, हे

**प्रीत**—प्रीत हृषितनर्मणो, मे, वि

**प्रीति**—प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदो स्त्रियाम्, मे प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीप्रमोदयो, वि प्रीति स्मरस्त्रियाम्। प्रेम्णि योगमुदो, हे

**प्रेक्षा**—प्रेक्षा नृत्येक्षणे बुद्धौ, मे , वि प्रेक्षा धीरीक्षण नृत्यम्, हे प्रेक्षा नृत्येक्षण प्रज्ञा, अ

**प्रेङ्खा**—प्रेङ्खा पर्यटनेऽप्यश्वगतौ सवेशनान्तरे, मे प्रेङ्खा पर्यटने नृत्ये दोलाया वाजिना गतौ, हे प्रेङ्खा पर्यटने नृत्ये भवेदश्वगतावपि, वि

**प्रेत**—प्रेतो भूतान्तरे पुसि मृते स्याद्वाच्यलिङ्गक , मे प्रेतो मृते भूतविशेषे च, हे प्रेतो भूतान्तरे मृते, वि प्रेत प्राणान्तरे मृते, अ प्रेतो मृते प्राणिभेदे, श्रि

**प्रेत्य**—प्रेत्यामुत्र भवान्तरे, ह

**प्रेत्वन्**—प्रेत्वा ना वासवे वाते, मे प्रेत्वा मरुति वासवे, वि

**प्रेमन्**—प्रेमाऽस्त्री स्नेहहर्षयो , मे प्रेम नर्मणि च स्नेहे, वि प्रेम तु स्नेह-नर्मणो , हे

**प्रैंष**—प्रैंष क्लेशे च मर्दने। उन्मादे प्रेषणे, मे प्रैंष स्यात्प्रेषणे क्लेशे मर्दनोन्मादयोरपि, वि प्रैंष प्रेषणपीडने, हे प्रैंष प्रेषणमर्दने, अ

**प्रोक्षण**—प्रोक्षण सेचने वधे, मे , त्रि

**प्रोक्षित**—प्रोक्षित निहते सिक्ते, मे , वि प्रोक्षित सिक्तहतयो , हे सिक्ते तु प्रोक्षित निहतेऽपि च, त्रि

**प्रोत**—प्रोत नपुसक वस्त्रे खचिते वाच्यलिङ्गकम्, मे प्रोत गुम्फितवासयो , हे प्रोत तु गुम्फिते वस्त्रे, वि

**प्रोथ**—प्रोथोऽस्त्री हयघोणाया ना कट्यामध्वगे त्रिपु, मे प्रोथोऽध्वगे-ऽश्वघोणाया कटीस्त्रीगर्भयोरपि, वि प्रोथोऽश्वघोणाध्वगयो , हे कट्यश्वघोणयो प्रोथ , त्रि प्रोथमित्युच्यते प्राज्ञैर्हलशूकरयोर्मुखे, ह

**प्रोह**—प्रोहो गजाङ्घ्रिपर्वणो । वाच्यवन्निपुणे तर्के, मे प्रोहो निपुणतर्के स्यात्प्रोहो हस्त्यङ्घ्रिपर्वणो , वि प्रोहो निपुणतर्के स्याद्गजाङ्घ्रिपर्वणोरपि, हे

**प्लक्ष**—प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने, मे प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयो । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तित , वि प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके, हे

**प्लव**—प्लव स्यात्प्लवने भेले भेकेऽव्वौ श्वपचे कपौ। जलकाके च कुलके प्रवणे पर्कटीद्रुमे। कारण्डवाग्न्यविहगे शब्दे प्रतिगतौ पुमान्। कैवर्तमुस्तके गन्ध-तृणेऽपि स्यान्नपुसकम्, मे प्लव कारण्डवे भेके कुलके भेलके कपौ। शब्दे प्लुतगतौ प्लक्षे चण्डालजलकाक्यो । प्लव गन्धतृणे प्रोक्त कैवर्तीमुस्तकेऽपि च, वि प्लव प्लक्षे प्लुतौ कपौ। शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयो । क्रमनिम्न-

महीभागे कुलके जलवायसे। जलान्तरे प्लव गन्धतृणे मुस्तकभिद्यपि, हे प्लवो निषादे मर्कटचा भेके भेले गतौ कपौ, त्रि

प्लवग(ङ्ग)—प्लवगो वानरे भेके सारथौ चोष्णदीधिते, मे, वि प्लवग कपिभेकयो। अर्कसूते, हे कपौ च प्लवग, अ प्लवङ्ग कपिभेकयो, अने

प्लवङ्गम—प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च, मे प्लवङ्गम कपौ भेके, वि, हे कपिभेकौ प्लवङ्गमौ, अ

प्लुत—प्लुत तुरङ्गमगतौ क्लीव पुसि त्रिमात्रके, मे प्लुत तुरङ्गमगतौ प्लुतमाहुस्त्रिमात्रके, वि प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके, हे प्लुत स्वरे च, त्रि. ह्रस्व दीर्घ प्लुत ज्ञेय प्लुत पित्तव्यथा प्लुति, अने

फ—फो यक्षसाधने स्फाते झञ्झावातेऽपि पुस्ययम्। फ रुपोक्तौ फूत्कृतौ च तथा निष्फलभाषणे, मे कफे वाते फकार स्यात्तथाह्वाने प्रकीर्तित। फूत्कारेऽपि च फ प्रोक्तस्तथा निष्फलभाषणे, ए जनार्दन शिखी रौद्री वामपार्श्वङ्गतालय। फट्कार प्रोच्यते सद्भि फकार पान्तिम स्मृत, मा

फटा—फटा तु फणदम्भयो, मे फटा तु कितवे फणे, हे फटा च फणदम्भयो वि

फणा—गोविषाणे फणा ज्ञेया भुजङ्गमशिर फणा। फणा जटा फणा कृष्णा फणा मन्थनकुण्डली, अने

फर्फरीक—फर्फरीकश्चपेटे स्यात्फर्फरीकन्तु मार्दवे, मे, वि फर्फरीकन्तु मार्दवे। फर्फरीकश्चपेटायाम्, हे

फल—फल जातिफले सस्ये हेतूत्थे व्युष्टिलाभयो। त्रिफलाया च कक्कोले प्रियङ्गौ च फली स्मृता, मे फल हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयो। जातिफलेऽपि कक्कोले सस्यबाणाग्रयोरपि॥ फलिन्या तु फला प्राहुस्त्रिफलाया फल क्वचित्, वि फल हेतुफले जातिफले फलकशस्ययो। त्रिफलाया च कक्कोले शस्त्राग्रे व्युष्टिलाभयो॥ फली फलिन्याम्, हे सस्ये हेतुकृते फलम्, अ फल जातिफले लाभे बाणाग्रे फलकेऽपि च, त्रि

फलकिन्—फलकी मत्स्यभेदे ना वाच्यवत् फलकान्विते, मे फलकी स्यादिल्लिसास्यमत्स्ये फलकपाणिके, वि.

फलिन्—फलिन्यग्निशिखाया स्त्री फलिन्या फलिते त्रिषु, मे

फलोदय—फलोदय पुमॉल्लाभे त्रिदिवेशालयेऽपि च, मे. फलोदय स्यात्

त्रिदिवे लाभेऽपि च फलोदय , वि फलोदयो द्युलाभयो , हे स्वर्गलाभौ फलोदयौ, त्रि

**फाणि**—फाणिर्गुडे करम्बे च स्त्रियाम्, मे फाणिर्गुडकरम्बयो , वि , हे, हा

**फाण्ट**—अश्रमकृतेऽपि फाण्टम्, हा

**फाल**—फाल पुसि महादेवे कालिन्दीभेदनेऽपि च। क्लीव सीरोपकरणे त्रिपु कार्पासवाससि, मे फाल सीरोपकरणे कार्पासादिकवाससि, वि फालन्तु वस्त्राशे फाल उत्प्लुतौ। कुशिके च, हे

**फाल्गुन**—फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे। तपस्यसज्ञे मासि तत्पूर्णिमाया तु फाल्गुनी, मे फाल्गुनस्तु तपस्ये स्यात्पूर्णिमाया तु फाल्गुनी। फाल्गुन कथित पार्थे नदीजे ककुभेऽपि च, वि फाल्गुनो मासपार्थयो । नदीजेऽर्जुनवृक्षे च फाल्गुनी पूर्णिमाभिदि, हे फाल्गुनो मासि पार्थे च, त्रि

**फेनिल**—फनिलोऽरिष्टपादपे। ना सफेने त्रिपु क्लीव कोलीमदनयो फले, मे फेनिल स्यादरिष्टे च फेनिल बदरीफले। मदनस्य फले चाथ फेनिलोऽरिष्टपादपे, वि फेनिल मदनफले बदरे फेनवत्यपि, हे फेनिल बदरेऽरिष्टे, त्रि

**फेरव**—फेरवो जम्बुकेऽस्रपे, मे , वि फेरवौ राक्षसे फेरौ, हे

**ब**—(ब पुमान् वरुणे सिन्धौ भगे तोये गते तु वा। गन्धने तन्तुसन्ताने पुस्येव वपने स्मृत , मे ) छगलन्तो भूधरश्च भगपृष्ठगतस्तथा। सुरसो वज्रमुष्टिश्च बकारो भादिमो मत , मा

**बक**—बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसि, मे , वि बको रक्षोभिदि श्रीदे शिवमल्लीबकोटयो , हे शिवमल्ल्या बक कह्वे, त्रि

**बकेरुका**—बकेरुका बलाकाभिद्वातावर्जितशाखयो , मे, वि बकेरुका बलाधिका। वातावर्जितशाखा च, हे

**बणिज्**—अथ वणिक् स्त्रियाम्। वणिज्याया पुमान् वाणिजके च करणान्तरे, मे वणिक् वाणिज्यजीविनि। वणिक् करणभेदे च वणिज्यायामपीष्यते, वि वनिग् वानिज्यजीविनि। वानिज्ये करणभेदे च, हे

**बदर**—बदरा गृष्टिकार्पास्योरेलापर्ण्या स्त्रिया पुमान्। कार्पासस्यास्थ्नि बदरी कोलौ क्लीवन्तु तत्फले, मे बदर कोलिकार्पास्यो फले स्याद्बदरी तयो । एलापर्ण्याञ्च बदरा विष्णुक्रान्तौषधावपि, वि बदरा स्यादेलापर्ण्या विष्णुक्रान्तौषधावपि। बदरी कोलिकार्पास्योर्बदरन्तु तयो फले। बदरन्तु कार्पासास्थ्नि, हे

**बद्धशिख**—अथ वद्धशिखा स्त्री स्यादुच्चटायां शिशौ त्रिपु, मे. बद्धशिखो-च्चटायां स्याद्वाले वद्धशिखो मतः, वि. वद्धशिखो वाले वद्धशिखोच्चटौषधे, हे.

**बन्ध**—वन्ध आधौ च वन्धने, मे., हे. वन्धस्त्वाधौ वन्धने, वि.

**बन्धक**—वन्धकः स्याद्विनिमये पुश्चल्या स्याच्च वन्धकी, मे. वन्धकः स्याद्विनिमये पुंश्चली स्याच्च वन्धकी, वि. वन्धकस्तु सत्यङ्कारेऽथ वन्धकी। स्वैरिण्याञ्च करिण्याञ्च, हे. करिण्यामपि वन्धकी, त्रि.

**बन्धन**—वन्धनं वधवन्धयोः, मे., वि.

**बन्धु**—वन्धुः स्यात्पुंसि वन्धूके मित्रे भ्रातरि वान्धवे, मे. वन्धुर्वन्धूकपुष्पे स्याद्वन्धुर्भ्रातरि बान्धवे, वि. वन्धुर्भ्रातृवान्धवयोः, हे.

**बन्धुर**—वन्धुरं मुर्मुरे पुसि स्त्री चाङ्गतैलकल्कयोः। वन्धूके वधिरे हंसे त्रिपु स्याद्रम्यनम्रयोः। वन्धुरा पण्ययोषायां स्त्रिया भूम्नि च सक्तुपु, मे. वन्धूर-वन्धुरौ रम्ये नम्रे हंसे तु वन्धुरः। वन्धूके च विडङ्गे च वन्धुरा पण्ययोषिति, वि. वन्धूरो रम्यनम्रयोः। वन्धुरन्तु तयोर्हंसे वन्धुजीवविडङ्गयोः। वन्धुरा पण्य-योषायाम्, हे. वन्धुरं रम्यनम्रयोः, त्रि.

**बन्धूक**—वन्धूकं वन्धुजीवे स्याद्वन्धूकः पीतशालके, मे., वि. वन्धूकः पीतशालके। वन्धुजीवे, हे.

**बन्धूर**—वन्धूरः शोभने नम्रे, मे. v. वन्धुर.

**बन्ध्य**—वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजःस्त्रियाम्, मे. वन्ध्योऽफलद्रुमे वन्ध्या त्वप्रजातस्त्रियामपि, वि.

**बभ्रु**—बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे। विशाले नकुले पुसि पिङ्गले त्वभिधेयवत्, मे. वभ्रुर्विशाले नकुले कृशानौ वच्चे मुनौ शूलिनि पिङ्गले च, वि. वभ्रुः पिङ्गाग्निशूलिपु। विशाले नकुले विष्णौ, हे. विपुले नकुले विष्णौ वभ्रुर्ना पिङ्गले त्रिपु, अ. वभ्रू नकुलपिङ्गलौ, अने. वभ्रुः स्यान्नकुलेऽपि च, ह.

**बर्बटी**—बर्बटी पण्ययोषाया व्रीहिभेदे च योषिति, मे. बर्बटी व्रीहिभेदे स्याद्बर्बटी पण्ययोषिति, वि. बर्बटी व्रीहिभिद्वेश्या, हे. बर्बटयौ व्रीहिभिद्वेश्ये, त्रि.

**बर्बर**—बर्बरः पामरे केशे चत्रने नीवृदन्तरे। फञ्जिकायां पुमान् शाकभेद-पुष्पभिदोः स्त्रियाम्, मे. बर्बरः पामरे केशविन्यासे नीवृदन्तरे। बर्बरा फञ्जिकायां तु बर्बरा शाकपुष्पयोः, वि. बर्बरो नीवृदन्तरे। बर्बरा तु फञ्जिकायां पामरे केशचक्रने। पुष्पे च बर्बरा शाके, हे.

**बर्बरीक**—वर्बरीकः केशविन्यासकर्मणि। शाकभेदे महाकाले, हे. .

**बर्ह**—वर्हं पिच्छे दले स्त्रियाम्, मे. वर्ह दले केकिपिच्छे, वि. वर्हं पर्णे परिवारे कलापे, हे. दलेऽपि बर्हम्, ग्र.

**बल**—बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्य-प्रभेदे वायसेऽपि च। बलयुक्तेऽन्यलिङ्गः स्याद्वाटचालके तु योपिति, मे. बल *गन्धरसे रूपे स्थामनि स्थौल्यसेनयो । बलो हलायुधे दैत्यभेदे बलिनि वायसे।* वाटचालके बला तूक्ता, वि. बलं रूपे स्थामनि स्थौल्यसैन्ययोः। बोले बलस्तु बलिनि काके दैत्ये हलायुधे। बला त्वोषधिभेदे स्यात्, हे. स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणो , ग्र. बल गन्धरसे रूपे क्लीव वाटचालके स्त्रियाम्, त्रि. बलो हली बलं सैन्यं बलं सत्त्वं बलौषधी। रत्नज्योतिर्बलो दैत्यो बला लक्ष्मीर्बला मही, ग्रने. बलः काके, ह.

**बलज**—बलजं गोपुरक्षेत्रे शस्यसङ्करयोरपि। बलजा वरयोषायां यूथ्याम्, मे. बलजं गोपुरे क्षेत्रे सस्यसङ्करयोरपि। बलजा वरयोषाया वसुमत्यामपि स्मृता, वि. बलजं गोपुरे शस्ये क्षेत्रसङ्करयोरपि। सदाकारे बलजा तु पृथिव्यां वरयोषिति, हे. बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना, ग्र.

**बलदेव**—बलदेवो बले वाते त्रायमाणौषधौ स्त्रियाम्, मे. बलदेवः स्मृतो वाते कालिन्दीभेदनेऽपि च। बलदेवामपि प्राहु. त्रायमाणौषधे बुधाः, वि. बलदेवस्तु कालिन्दीकर्षणे मातरिश्वनि। बलदेवा त्रायमाणा, हे.

**बलभद्र**—बलभद्रा त्रायमाणाकुमार्यो पुंसि सीरिणि, मे. बलभद्रो रौहिणेये त्रायमाणौषधावपि। बलभद्रा कुमार्यां स्यात्, वि. बलभद्रस्त्वनन्ते बलशालिनि। बलभद्रा कुमार्यां स्यात्त्रायमाणौषधावपि, हे.

**बलाक**—बलाका बकपंक्तौ स्याद्बलाका विसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकश्च बको मतः, वि.

**बलाहक**—बलाहको गिरौ मेघे दैत्यनागविशेषयोः, मे., वि. बलाहकोऽम्बुदे गिरौ। दैत्ये नागे, हे. गिरिमेघौ बलाहकौ, त्रि.

**बलि**—बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च, मे. बलिश्चामरदण्डे च जरया श्लथचर्मणि। उदरावयवे दैत्ये करपूजोपहारयोः। गृहदारुविशेषे च गन्धकेऽपि क्वचिन्मतः, वि. बलिर्दैत्योपहारयोः। करे चामरदण्डे च गृहदारुदरांशयोः। त्वक्सङ्कोचे गन्धके च, हे. बलिश्चामरदण्डेऽपि, हा. करोपहारयोः पुंसि बलि. प्राण्यङ्गजे स्त्रियाम्, ग्र. बलिर्जराश्लथत्वे च गृहदार्वसुरौ बली, त्रि. बलिः स्त्री

मध्यभागोर्मिर्बलिश्चर्म जराकृति। बलि. पूजोपहारः स्याद्बलिर्दानवसत्तम', ग्रने. वलिः करे, ह.

**वल्य**—वल्यं प्रधाने धातौ स्यात्क्लीव वलकरे त्रिपु, मे. वल्यं प्रधाने धातौ स्यात्क्लीवं वलकरेऽपि च, वि. वल्य रेतोबलकृतो', हे

**बहु**—वहु स्यात् त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्, मे. बहु स्याद्विपुले त्र्यादिसंख्यासु त्वभिधेयवत्, वि बहु भूयसि। त्र्यादिकासु च संख्यासु, हे. वहु विपुलसंख्ययोः, त्रि.

**बहुक**—वहुकः कर्कटेऽर्के च दात्यूहे जलखादके, वि. वहुको जलखादके। दात्यूहे कर्कटेऽर्के च, हे v. बाहुक.

**बहुफल**—भवेद्बहुफलो नीपे नाऽमलक्यान्तु योषिति, मे. भवेद्बहुफलाभिख्या मलपूनीपवृक्षयो, वि. बहुफल. पुन.। नीपे बहुफली फल्गौ, हे.

**बहुरूप**—बहुरूप' शिवे विष्णौ धूनके सरटे स्मरे, मे, वि. बहुरूप. स्मरे विष्णौ सरटे घूनके शिवे, हे

**बहुल**—वहुला नीलिकाया स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रिया भूम्नि विहायसि नपुसकम्। पुस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयो', मे. बहुलः कृष्णपक्षेऽग्नौ शितौ च वहुला गवि। एलायां नीलिकायाञ्च वहुलाः कृत्तिकासु च। *बहुलं प्राज्यनभसो*, वि. *बहुल भूरिवियतोर्बहुलः पावके शितौ*। कृष्णपक्षे वहुला तु सुरभ्या नीलिकैलयो.। वहुलास्तु कृत्तिकासु, हे. वहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिपु, ग्र. बहुलः कृष्णपक्षेऽपि, त्रि. बहुला. कृत्तिका ज्ञेया गावश्च वहुला मताः, ग्रने.

**बा**—उपमाया विकल्पे वा, ग्र. v. वा.

**बाणिजक**—ग्रथ वाणिजक' वाडवाग्नौ वणिज्यपि, मे. वाणिजको वडवाग्नौ वणिज्यपि, वि.

**बाध**—बाधा दु खे निषेधे च, मे. बाधा दु खनिषेधयोः, वि, हे, ह. निषेध-दु खयोर्बाध', त्रि.

**बान्धव**—बान्धवो वन्धुसुहृदो', मे, वि. वान्धवौ वन्धुमित्रयोः, हे.

**बार्दल**—वार्दलं दुर्दिने मेलानन्दाया वार्दलः स्मृत. मे. वार्दल दुर्दिने मेला-नन्दायामपि वार्दल., वि. वार्दल दुर्दिने मस्याम्, हे. मेलानन्देऽपि वार्दलम्, हा.

**बार्वटीर**—वार्वटीरो रङ्ग ग्राम्रास्थ्यङ्कुरे गणिकासुते, मे. वार्वटीरस्त्र-पावाम्रास्थ्यङ्कुरे गणिकासुते, वि. वार्वटीरस्त्रपुन्याम्रास्थ्यङ्कुरे गणिकासुते, हे.

**बाल**—बालो ना कुन्तलेऽश्वस्य करिणश्चापि वालधौ। नालिकेरे हरिद्राया

मल्लिकाभिद्यपि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुनपुसकम् । अलङ्कारान्तरे मेध्ये वाली वाला त्रुटिस्त्रियो , मे वाल कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयो । अलङ्कारान्तरे मेध्ये वाली वाला त्रुटिस्त्रियो, वि वालोऽज्ञेऽश्वेभपुच्छयो । शिशौ ह्रीवेरकचयोर्वाला तु त्रुटियोषितो । वाली भूपान्तरे मेध्ये, हे मूर्खेऽर्भकेऽपि वाल स्यात्, अ वालो ह्रीवेरकेशयो , त्रि वाल केशो जल वाल वाल काशतृण स्मृतम् । वालो मूर्ख शिशुर्वालो वालो वेग उदाहृत , अने

**वालक**—वालकस्तु शिशावज्ञे वालधौ हयहस्तिनो । अगुलीयकह्रीवेरवलयें पुसि वालिका । वालाया वालुकापत्रकाहलाकर्णभूषणे, मे वालकोऽज्ञे शिशौ केशे वाजिवारणवालधौ । अगुलीयकह्रीवेरपारिहार्येषु वालकम् । वालिका वालुकावालापिञ्जोलाकर्णभूषणे वि वालिका कर्णभूषणे । पिञ्जोलाया वालुकाया बालाया वालक पुन । शिशौ मूर्खेऽश्वगजयोर्बालधौ, हे पिञ्जोला सिकता वर्णभूपा कन्या च वालिका त्रि वालक खेचरो व्याघ्रो वालक पृथुक स्मृत । वालक गन्धद्रव्यञ्च जटाजूटश्च वालकम्, अने

**बालिश**—वालिशश्च शिशौ मूर्खे मे वालिश शावके मूर्खे, वि वालिशस्तु शिशौ मूर्खे, हे शिशावज्ञे च वालिश , अ वालेऽपि वालिश स्यात्, ह

**बालेय**—वालेयो गर्दभे पुसि मृदौ वलिहिते त्रिपु, मे वालेयस्तु गर्दभे। वल्यर्थे कोमलाङ्गारवल्लर्याम्, हे वालेयोऽङ्गारवल्लर्या खरे वलिहिते त्रिपु, वि वालेयी मृदुगर्दभौ, त्रि

**बाहुक**—वाहुक कर्कटे चार्के दात्यूहे जलखातके, मे v वहुक

**बाहुज**—वाहुज क्षत्रिये कीरे स्वयजाततिलेऽपि च, मे , वि वाहुजस्तु स्वय जाततिले क्षत्रियकीरयो , हे

**बीभत्स**—वीभत्सो नार्ज्जुने क्रूरघृणात्मविकृतौ त्रिपु मे बीभत्सो विकृते क्रूरेऽप्यर्जुने च घृणात्मनि, वि वीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनि, हे वीभत्सो हिंस्रोऽपि, अ रसे क्रूरे च विकृतौ बीभत्सस्त्रिपु नार्ज्जुने, त्रि

**बुक्कस**—बुक्कसी नीलिकाकाल्योर्बुक्कस श्वपचेऽधमे, हे v पुक्कस

**बुद्ध**—बुद्धो जिने लब्धवर्णे पुसि स्याद्बुधितेऽन्यवत्, मे वुद्धो जिने च धीरे च सौम्ये च बुधितेऽपि च वि बुद्ध पण्डिते बुधिते जिने, हे वुद्धो ज्ञाते जिने बुधे, त्रि

**बुध**—बुध सौम्ये च पण्डिते, मे बुध सौम्ये कवौ, हे बुध कवौ रौहिणेये वि बुधवृद्धौ पण्डितेऽपि, अ रौहिणेयकवौ बुध , त्रि

**बुधान**—बुधानस्तु गुरौ विज्ञे, मे बुधान पण्डिते गुरौ, वि

**बुध्न**—बुध्नो ना मूलरुद्रयो., मे. बुध्नः शिफाया रुद्रे च, वि. बुध्नस्तुण्डिगिरीशयोः, ह. v. ब्रध्न.

**बृ(बृ)हती**—बृहती वसनान्तरे। छन्दोभित्क्षुद्रवार्ताकीवारिधानीषु वाचि च। कण्टकारीमहत्योश्च, मे. बृहती क्षुद्रवार्ताक्यां कण्टकार्या च वाचि च। वारिधान्यां महत्याञ्च छन्दोवसनभेदयो., वि. बृहती क्षुद्रवार्ताक्यां छन्दोवसनभेदयोः। महत्यां वाचि वार्धान्याम्, हे. बृहती क्षुद्रवार्ताकीच्छन्दोभेदे महत्यपि, अ.

**बोधन**—बोधनं गन्धदीपने। बोधनी बोधिपिप्पल्योः, मे. बोधनी बोधिपिप्पल्योर्बोधनं गन्धदीपने, वि.

**बोधि**—बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे, मे. बोधिः समाधिभेदे स्याद्बोधिः पिप्पलपादपे, वि. बोधिर्बौद्धसमाधौ चार्हद्धर्माप्तौ च पिप्पले, हे

**ब्रध्न**—ब्रध्नो गिरिशमूलयोः, हे. v. बुध्न.

**ब्रह्मन्**—ब्रह्म तत्त्वतपोवेदे न द्वयो पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे, मे. ब्रह्मा विरिञ्चिद्विजयोर्ऋत्विक्चन्द्रार्कयोगयोः। ब्रह्म प्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः, वि. ब्रह्म तु तपसि ज्ञाने वेदेऽध्यात्मे द्विजे विधौ। ऋत्विग्योगभिदोश्च, हे. वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्र. प्रजापतिः, अ. वेदाध्यात्मब्राह्मणहिरण्यगर्भेषु कथ्यते ब्रह्म, ह.

**ब्रह्मण्य**—ब्रह्मण्यो ब्रह्मसाधौ स्याद् ब्रह्मदारुशनैश्चरे, मे. ब्रह्मण्यो ब्राह्मणो हिते। शनैश्चरे, हे. ब्रह्मण्यो ब्रह्मसाधौ स्याद् ब्रह्मण्यश्च शनैश्चरे, वि.

**ब्रह्मपुत्र**—ब्रह्मपुत्र क्षेत्रभेदे नदभेदे च पुंस्ययम्, मे.

**ब्रह्मबन्धु**—ब्रह्मबन्धुरधिक्षिप्ते निर्देशे ब्राह्मणस्य ना, मे. ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्, वि. ब्रह्मबन्धुर्निन्द्यविप्रे बान्धवे ब्राह्मणस्य च, हे. ब्रह्मबन्धुरधिक्षेपे निर्देशे, अ.

**ब्राह्मण**—ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्। भूमिदेवे तु पुंलिङ्गः फञ्जिकापृक्कयो. स्त्रियाम्, मे. ब्राह्मणी फञ्जिकास्पृक्काद्विजपत्नीषु विश्रुता। विप्रे तु ब्राह्मणो वेदे ब्राह्मणं विप्रसंहतौ, वि. ब्राह्मणं विप्रसंहतौ। वेदे च ब्राह्मणो विप्रे, हे. मन्त्राख्यवेदे विप्रौघे क्लीवं ना ब्राह्मणो द्विजे, नि.

**ब्राह्मण्य**—ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम्, मे. ब्राह्मण्य ब्राह्मणत्वे स्यात्समूहे च द्विजन्मनाम्, वि. ब्राह्मण्यं ब्रह्मसङ्घेऽपि, त्रि.

**ब्राह्मी**—ब्राह्मी तु फञ्जिकायां स्याच्छाकमत्स्यप्रभेदयोः। ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु, मे. ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु। फञ्जिका-

**मेनाद**—मेनादस्तु पुमान् केकिमार्जारच्छागलेषु च, मे. मेनादः केकिमार्जारच्छागलेषु समीरितः, वि. मेनादास्तु त्रयश्छागमार्जारकशिखण्डिनः, त्रि. मेनादः केकिनि च्छागे मार्जारे, हे.

**मेला**—मेला स्यान्मेलके मसौ, मे., वि. मेला त्वञ्जने मेलकेऽपि च, हे.

**मेष**—मेषो राश्यन्तरे स्तभे। भैषज्यभिदि, मे. मेषो राशिविशेषे स्यादुरणे भेषजान्तरे, वि. मेषो राश्यन्तरे हुडौ, हे. मेषौ राश्यन्तरोरणौ, त्रि.

**मेहन**—मेहनं मूत्रशिश्नयोः, मे., वि., हे.

**मैथुनं**—मैथुनं सुरतेऽपि स्यात्सङ्गतेऽपि नपुंसकम्, मे. मैथुनं सङ्गते रते, वि. मैथुनं रतसङ्गत्योः, हे. मैथुनं सङ्गतौ रते, अ. मैथुनं कथ्यते सद्भिः सम्बन्धग्राम्यधर्मयोः, ह.

**मोक्ष**—मोक्षस्तु मुक्तिपाटलिमोचने, मे. मोक्षो मुष्ककवृक्षे स्यादपवर्गे च मोचने, वि. मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ, हे. नन्द्यावर्तः सरलः शालः पाको धवोऽर्जुनस्तिलकः। पद्मस्यन्दनमोक्षा वृक्षविशेषेऽपि कथ्यन्ते, ह.

**मोघ**—मोघा स्त्री पाटलाया स्याद्धीननिष्फलयोस्त्रिषु, मे. मोघाऽपि पाटलाया स्यान्मोघा निष्फलदीनयोः, वि. मोघो दीने निष्फले च मोघा स्यात्पाटलातरौ, हे.

**मोच**—मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः, मे. मोचः शोभाञ्जने प्रोक्तो मोचा शाल्मलिरम्भयोः, वि. मोचा शाल्मलिकदल्योर्मोचः शिग्रौ, हे. मोचा शाल्मलिरम्भयोः, त्रि. मोचा शाल्मलिराख्याता मोचा तु कदली मता, अने.

**मोचक**—मोचकः कदलीशिग्रुनिर्मोचकविरागिषु, मे., वि. मोचको मोक्षकदलीशिग्रुद्रुमविरागिषु, हे.

**मोचाट**—मोचाटः कृष्णजीरे च रम्भास्थ्नि मलयोद्भवे, मे., वि. मोचाटः कृष्णजीरके। चन्दने कदलीगर्भे, हे.

**मोण**—मोणः शुष्कफले नक्रमक्षिकाऽहिकरण्डयोः, मे., वि. मोणः सर्पकरण्डके। वाने नक्रमक्षिकायाम्, हे.

**मोदक**—मोदकः खाद्यभेदेऽस्त्री हर्षुके पुनरन्यवत्, मे. मोदको हर्षुके ज्ञेयः खाद्यभेदे च मोदकम्, वि. मोदको हर्षुके खाद्ये, हे.

**मोरट**—मोरटं तु भवेदिक्षुमूलाङ्कोटप्रसूनयोः। सप्तरात्रात्परे क्षीरे मूर्विकायां तु मोरटा, मे., वि. मोरटम्। सप्तरात्रात्परे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः। मोरटा तु मूर्विकायाम्, हे. मोरटं गोनेवे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः, त्रि.

**मोह**—मम मोहोऽन्यमिङ्गः स्यादविद्यायां च मूर्च्छने, मे. मोहमिच्छन्ति

मूर्च्छायामविद्याया च सूरय , वि मोहौ मूर्छाविपर्ययौ, हे अथ मूर्छने। अविद्याया च मोह् स्यात्, नि मोह स्यान्मौढचमूर्छयो , ह

**मौलि**—मौलि किरीटे धम्मिल्ले चूडायामनपुसकम्। नाऽशोकद्रौ स्त्रिया भूमौ, मे मौलि किरीटे धम्मिल्ले चूडाकङ्केलिमूर्धसु, हे मौलि किरीटे धम्मिल्ले कङ्केलिद्रुमचूडयो , वि चूडा किरीट केशाश्च सयता मौलयस्त्रय , अ मौलि कङ्केलिवृक्षेऽपि, त्रि

**म्लिष्ट**—म्लिष्ट निष्वव्यक्तवाचि म्लाने, मे म्लिष्टमव्यक्तवाचि स्यान्म्लिष्ट म्लानेऽन्यवन्मतम्, वि अथ म्लिष्ट म्लानमस्पष्टभापितम्, हे मिष्ट म्लाने कुवचने, त्रि

**म्लेच्छ**—म्लेच्छ पामरभेदे च पापरक्तेऽपभाषणे, मे म्लेच्छ पापरते जातिभेदे स्यादपभाषणे, वि म्लेच्छो जातिभेदे ह्यपभाषणे, हे

**य**—यो ना वायौ यमने या यात्राप्तिधूमितत्यागेपु। वारणयोगसमज्ञायानेपु पुमास्तु गन्तरि ख्यात , मे य सर्वनामानिलयो , वि क्षुधा वाला च वायुस्त्वक् हृद्गत पुरुषोत्तम । यमुनो यामुनेयश्च यकारो मान्तिम स्मृत , मा यशो य कथित प्राज्ञैर्यो वायुरिति शब्दित । याने यातरि यस्त्यागे कथित शब्दवेदिभि , ए

**यक्ष**—यक्षो गुह्यकमाने च गुह्यकाधीश्वरेऽपि च, मे यक्ष श्रीदे च गुह्यके, वि यक्ष श्रीदे गुह्यके च, हे

**यक्षराट्**—यक्षराट् त्र्यम्बकसखे मल्लाना रङ्गचत्वरे, वि यक्षराट् पुसि धनदे मल्लाना रङ्गचत्वरे, मे

**यज्ञ**—यज्ञ स्यादात्मनि मखे नारायणहुताशयो , हे यज्ञ पूजा च दान च, अने

**यतस्**—v इतस्

**यति**—यति स्त्री पाठविच्छेदे निकारयतिनो पुमान्, मे यतिर्निकारे यतिनि पाठच्छेदक्रमे यति , वि यतिर्निकारे विरतौ भिक्षौ, हे अथ यति । पाठच्छेदे मुनौ पुमान्, त्रि

**यथा**—यथा तुल्यार्थमानयो । प्रगसायाम्, मे यथाशब्दस्तु निर्दिष्टस्तुल्य-योगानुमानयो , वि यथा निदर्शने द्वौ तूद्देशे निर्देशसाम्ययो । हेतूपपत्तौ च, हे

**यद्**—यद् गर्हाहेत्ववधृत्यो , मे

**यदि**—यदि गर्हावितर्कयो , मे

**यद्वत्**—यद्वत् प्रश्ने वितर्के च, मे

**यन्तृ**—यन्ता मेठे च सूते ना, मे. यन्ता सूते निषादिनि, हे. यन्ता हस्तिपके सूते, वि., अ.

**यन्त्र**—यन्त्रं वेदाद्यधिष्ठाने पात्रभेदे नियन्त्रणे, हे.

**यन्त्रण**—यन्त्रणं रक्षणे स्मृतम्। बन्धने स्यान्नियमने, मे. यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च, वि. यन्त्रणं बन्धने त्राणे नियमे, हे.

**यम**—यमोऽन्यलिङ्गो यमजे ना काके शमने शनौ। शरीरसाधनापेक्षनित्यकर्मणि संयमे, मे. यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च। शरीरसाधनापेक्षनित्यकर्मणि चोच्यते, वि. यमः कालयमजयोरहिंसादिषु पञ्चसु। संयमे यमने ध्वाङ्क्षे, हे. यमः संयमकीनाशयुग्मजेषु, त्रि.

**यमक**—यमकं यमजे शब्दालङ्कारे पुंसि संयमे, मे. यमकं यमजे शब्दालङ्कारे संयमेऽपि च, वि. यमको यमजे व्रते। यमकं वागलङ्कारे, हे यमकं संयमे शब्दालङ्कारे यमजे त्रिषु, त्रि.

**यमन**—यमनं बन्धने चोपरतौ क्लीबं यमे पुमान्, मे. यमनं दु.खे चोपरतौ यमे, वि. यमनं यमबन्धयोः, हे.

**यमल**—यमलं युगले क्लीबं यमलौ चोटिकाद्वये, मे.

**यमस्वसृ**—यमस्वसा तु दुर्गायां यमुनायामपि स्त्रियाम्, मे.

**ययु**—ययु. पुमानश्वमेधतुरगे च तुरङ्गमे, मे. ययुः क्रतुहये हये, वि ययुर्यज्ञहये हये, हे. ययुरश्वे क्रतुहये, त्रि.

**यव**—यवो धान्ये पृथक्कृते, हे.

**यवन**—यवनो देशभेदे ना वेगिवेगाधिकारवयोः। यवन्योपधिभेदे स्त्री वाच्यवद्वेगिनि स्मृता, मे.

**यवफल**—भवेद्यवफलो वेणौ मांसीकुटजयोरपि, मे. यवफलः स्मृतो वेणौ मांसीकुटजयोरपि, वि. यवफलो मासिकायां कुटजत्वचिसारयोः, हे.

**यवीयस्**—यवीयाननुजेऽपि स्यादतियूनि च वाच्यवत्, मे.

**यष्टि**—यष्टिः पुंसि स्याद्ध्वजदण्डके। द्वयोर्हारलताभार्गीमधुकाशस्त्रभेदयोः मे. यष्टिर्भार्गी मधुयष्ट्यां ध्वजदण्डेऽस्त्रहारयोः, हे. यष्टिर्हारलताशस्त्रभेदयोर्ध्वजदण्डके। भार्ग्याञ्च मधुयष्ट्याञ्च, वि.

**याजक**—याजकस्तु गजे राज्ञो याज्ञिकेऽपि, मे. याजको याजिनि ख्यातो याजको राजकुञ्जरे, वि. याजको राजकुञ्जरे। याज्ञिके च, हे.

**याज्ञिक**—अथ याज्ञिकः। याजके च कुशे च, मे. याज्ञिको याजके कुशे, वि. याज्ञिको याजके दर्भे, त्रि.

**यातयाम**—यातयामोऽन्यवज्जीर्णे परिभुक्तोज्झितेषु च, मे  यातयामस्तु जीर्णे स्यात्परिभुक्तोज्झितेषु च, वि  यातयामो भुक्तसमुज्झिते जीर्णे च, हे  जीर्णञ्च परिभुक्तञ्च यातयाममिद द्वयम्, अ

**यात्रा**—यात्रा तु यापनेऽपि स्याद् गमनोत्सवयो स्त्रियाम्, मे  यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे, वि  यात्रोत्सवे गतौ वृत्तौ, हे  यात्रा स्यादनुवृत्तौ च, ह  यात्रा स्याद्यापने गतौ, अ  गमनोत्सवयोर्यात्रा, त्रि

**यादव**—यादव पुसि केशवे, मे

**यादसाम्पति**—यादसाम्पतिरम्भोधौ पश्चिमाशापतावपि, मे  यादसाम्पति-रम्भोधौ प्रतीचीदिक्पतावपि, वि  यादसाम्पति पाश्यब्ध्यो, हे  पाश्यब्धी यादसाम्पती, त्रि

**यान**—यान स्याद्वाहने गतौ, मे  यान गतौ वाहनेऽपि, वि  यान युग्ये गतौ, हे  स्यात्तु वाहने। गतौ च यानम  त्रि

**यापन**—यापन वर्तने कालक्षेपे निरसनेऽपि च, मे, वि  यापन कालविक्षेपे निरासे वर्तनेऽपि च, हे  यापन स्यान्निरसने कालक्षपे च वर्तने, त्रि

**याप्य**—याप्यस्तु यापनीये स्यान्निन्दितेऽप्यभिधेयवत्, मे

**याम**—यामस्तु पुसि प्रहरे सयमेऽपि प्रकीर्तित  मे  यामस्तु प्रहरे व्रते, वि  यामौ प्रहरसयमौ, हे

**यामि**—यामि कुलस्त्रीस्वस्त्रो  मे  यामि स्वसृकुलस्त्रियो, अने  v जामि

**याम्य**—याम्याऽप्राच्या भरण्याञ्च पुस्यगस्त्ये च चन्दने, मे  याम्याऽवाच्या भरण्याञ्च याम्योऽगस्त्ये च चन्दने  वि  याम्याऽप्राच्या भरण्याञ्च, हे

**याव**—यावोऽलक्ते पावभेदे  हे

**यावत्**—यावत्कात्स्न्र्येऽवधारणे। प्रशसाया परिच्छेदे मानाधिकारसम्भ्रमे। पक्षान्तरे च, मे  यावत्तावत्परिच्छेदे कात्स्न्र्यमानावधारणे, वि  यावत्तावदिवावधौ। कात्स्न्र्येऽवधारणे माने, हे   यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे, अ

**युक्त**—v  युत

**युक्ति**—युक्ति स्त्री न्याययोगयो, मे  युक्तिर्न्याये योजने च, हे  न्याय-योजनयोर्युक्ति, त्रि

**युग**—युगो रथहलाद्यङ्गे न द्वयोर्नु कृतादिषु। युग्मे हस्तचतुष्केऽपि वृद्धि-नामौषधेऽपि च, मे  युग हस्तचतुष्के स्याद्रथाद्यङ्गे कृतादिके। वृद्धिनामौषधे युग्मे, हे  युग हस्तचतुष्केऽपि रथसीराङ्गयोर्युग । युग कृतादौ युगले वृद्धि-नामौषधेऽपि च, वि  यानाद्यङ्गे युग पुसि युग युग्मे कृतादिषु  अ

**युञ्जान**—युञ्जानः सारथौ विप्रे, मे., वि.

**युत**—युतो युक्तोऽपृथग्भूते क्लीवं हस्तचतुष्टये, मे. युतोऽन्विते पृथक्, हे. युतं हस्तचतुष्के स्याद्युतं युक्ते युतं पृथक्, वि.

**युतक**—युतकं संशये युगे। नारीवस्त्राञ्चले युक्ते चलनाग्रेऽपि यौतुके, मे. युतकं संशये युगे। यौतुके चलनाग्रे च स्त्रीवस्त्राञ्चलयुक्तयोः, वि. युतकं तु यौतुके युग्मयुक्तयोः। संशये चलनाग्रे स्त्रीवस्त्रभेदे पटाञ्चले, हे. युतकं वस्त्रभेदे च यौतुके संशयेऽपि च, त्रि.

**युध्न**—युध्नो धनुषि संयुगे, मे. युध्नः संग्रामधनुषोः, वि.

**युवन्**—युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि, मे., वि.

**यूथ**—यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति, मे. यूथी पुष्पप्रभेदे स्यान्मागध्या च कुरुण्टके। यूथं तिर्यक्समूहे स्याद्वृन्दमात्रे च भाषितम्, वि. यूथं तिर्यग्गणे गणे। यूथी तु मागधी पुष्पविशेषयोः कुरुण्टके, हे.

**यूथिका**—यूथिका म्लानके पुष्पविशेषेऽपि च योषिति, मे. यूथिका म्लानके पुष्पविशेषेऽपि च यूथिका, वि.

**योग**—योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुःस्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे। विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि। कार्मणेऽपि च, मे. योगो विस्रम्भघातिनि। अलब्धलाभे सङ्गत्यां कार्मणध्यानयुक्तिषु। वपुःस्थैर्य-प्रयोगे च सन्नाहे भेषजे धने। विष्कम्भाद्युपाये च, हे. योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे। विश्रब्धघातिनि द्रव्योपायसन्नहनेष्वपि। कार्मणेऽपि च योगः स्यात्, वि. योगः सन्नहनोपायध्यान-सङ्गतियुक्तिषु, अ. योगश्चारे पूर्वलाभे मूत्रे विश्रब्धघातिनि। उपाये सङ्गतौ ध्यानौषधसन्नाहयुक्तिषु, त्रि. योगो युक्तिविशेषः स्यात्संयोगो योग उच्यते। योगश्चागामिको लाभः समाधिर्योग इष्यते, अने.

**योग्य**—योग्यः प्रवीणयोगार्होपायिशक्तेषु चान्यवत्। योग्यमृद्धयाख्यभेषज्ये योग्याऽभ्यासार्कयोषितोः, वि. योग्यो योगार्हशक्तयोः। उपायिनि प्रवीणे च योग्य-मृद्धयाह्वयौषधौ। योग्याऽर्कयोषित्यभ्यासे, हे. योग्यः प्रवीणयोगार्होपायिशक्तेषु वाच्यवत्। क्लीबमृद्धयौषधौ पुष्ये ना स्त्र्यभ्यासार्कयोषितोः, मे.

**योजन**—योजनं परमात्मनि। चतुःक्रोशयाञ्च योगे, मे. योजनञ्च चतुः-क्रोश्या योगे च परमात्मनि, वि. योजनन्तु चतुःक्रोश्यां स्याद्योगे परमात्मनि, हे. चतुःक्रोश्याञ्च योगे च योजनम्, त्रि.

**योजनगन्धा**—योजनगन्धा कस्तूर्यां सीताया व्यासमातरि, मे., वि. योजन-

गन्धा व्यासमातरि। कस्तूरीसीतयोश्चापि, हे सीता योजनगन्धा स्यात्कस्तूरी व्याससूरपि, त्रि

**योनि**—योनि स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे, मे योनि स्यादाकरे भगे, वि योनि कारणे भगतोययो, हे योनिस्तूत्पत्तिस्थाने भगेऽपि च, त्रि

**यौवनलक्षण**—यौवनलक्षणमप्याख्यात लावण्यकुचयोश्च, मे यौवनलक्षण वक्षोरुहे च लवणिम्नि च, हे यौवनलक्षणाभिख्या लावण्ये च पयोधरे वि

**र**—र स्मृत पावके तीक्ष्णे, मे र पावके तीक्ष्णे च, वि रस्तीक्ष्णे दहने, हे क्रोधिनी च भुजङ्गेशो ज्वाली रुधिरपावकौ। रोचिष्मान् दक्षिणाशश्च रुचिरो रेफ ईरित, मा रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च। इन्द्रिये धनरोधे च, ए

**रक्त**—रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिपु। क्लीवन्तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि, मे रक्त स्यात्कुङ्कुमे ताम्र प्राचीनामलकेऽसृजि। अनुरागिणि नील्यादिरञ्जिते लोहितेऽन्यवत्, वि रक्त नील्यादिरागि च, अ रक्त नील्यादिरञ्जिते। कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे, हे

**रक्तक**—रक्तको म्लानबन्धूकरक्तवस्त्रानुरागिपु मे, वि

**रक्तप**—रक्तपा स्याज्जलौकाया डाकिन्या ना तु राक्षसे, मे रक्तपो रक्षसि प्रोक्तो जलौकाया तु रक्तपा, वि रक्तप स्याद्यातुधाने रक्तपा तु जलौकसि हे

**रक्तपाद**—रक्तपादो मतङ्गजे। स्यन्दन च, हे

**रक्तरेणु**—रक्तरेणु पलाशकलिकोद्गमे। सिन्दूरे ह रक्तरेणुस्तु सिन्दूरे पलाशकोरके पुमान्, मे रक्तरेणुस्तु सिन्दूरे पलाशकलिकोद्गम, वि

**रक्ताक्ष**—रक्ताक्ष वासरे क्रूरे पारावतचकोरयो, मे, वि रक्ताक्षो रक्तलोचने। चकोरे महिषे क्रूरे पारावते, हे

**रक्ताङ्ग**—रक्ताङ्गस्तु महीसुते। कम्पिल्ले स्त्री तु जीवन्त्या क्लीव विद्रुमधीरयो, मे रक्ताङ्ग विद्रुमे भौमे विद्यात्कम्पिल्लधीरयो। रक्ताङ्गा चापि जीवन्त्याम्, वि रक्ताङ्गो भौमे रक्ताङ्ग कम्पिल्ले विद्रुमेऽपि च। रक्ताङ्गा जीवन्तिकायाम्, हे रक्ताङ्गो मङ्गलेऽपि च त्रि

**रक्षा**—रक्षा जतुरक्षणयो, मे रक्षा रक्षणलाक्षयो, वि रक्षा रक्षणभस्मनो, हे

**रङ्क**—रङ्क कृपणमल्लयो, मे, हे रङ्कस्तु कृपणे मल्ले, वि

**रङ्ग**—रङ्गो ना रागे नृत्ये रणक्षितौ। अस्त्री त्रपुणि, मे रङ्ग स्यान्नृत्य युद्धुवो। रागे रङ्ग तु त्रपुणि, हे रङ्गो रणे खले रागे नृत्ये रङ्ग त्रपुण्यपि, वि नृत्ये रणे खले रागे रङ्ग क्लीबे त्रपुण्यपि, त्रि

**रङ्गमातृ**—रङ्गमाता तु कुट्टिन्यां वृक्षरोगान्तरे स्त्रियाम्, मे रङ्गमाता जतुत्रुटयो', हे रङ्गमाता तु कुट्टन्या स्मृता भूमिरुहामये, वि.

**रज**—रजो रेणौ परागे स्यादावर्ते च गुणान्तरे, मे. v रजस्.

**रजक**—रजको धावके शुके, वि. रजकौ धावकशुकौ, हे.

**रजत**—रजतं त्रिपु शुक्ले स्यात्क्लीवं हारे च दुर्वर्णे, मे. रजतं विशदे दन्तिदन्तयोस्तारहारयो, वि. रजतं दन्तिदन्तयो। धवले शोणिते हारे दुर्वर्णे ह्लदशैलयो, हे. रजतं हेम्नि रूप्ये सिते, अ. रजत हारेऽपि, ह.

**रजनी**—रजनी नीलिनीरात्रिहरिद्राजतुकासु च, मे रजनी नीलिकालाक्षा-हरिद्रायामिनीपु च, वि. रजनी निशि। लाक्षानीलीहरिद्रासु, हे. निशा हरिद्रा रजनी, त्रि. हरिद्रा रजनी प्रोक्ता रजनी च विभावरी, अने.

**रजस्**—रजः क्लीवं गुणान्तरे। आर्तवे च परागे च रेणुमात्रे च दृश्यते, मे रजः स्यादार्तवे गुणे। रज परागे रेणौ तु रजवत्परिकीर्तितम्, वि. रजो रेणु-परागयो.। स्त्रीपुष्पे गुणभेदे च, हे रजो गुणे च स्त्रीपुष्पे, अ

**रजस्वल**—रजस्वला पुष्पवत्यां स्त्रिया स्यात्सौरभे पुमान्, मे. रजस्वला पुष्पवत्या सौरभेऽपि रज स्वलः, वि.

**रज्जु**—रज्जुर्वेण्या गुणे योषित्, मे. रज्जुर्वेण्या गुणे स्मृता, वि

**रञ्जन**—रञ्जनो रागरजने रञ्जनं रक्तचन्दने। शुण्डारोचनिकानीली-मञ्जिष्ठासु च रञ्जनी, मे रञ्जनो रागरजने रञ्जनं रक्तचन्दने। गुञ्जा-रोचनिकानीलीमञ्जिष्ठासु च रञ्जनी, वि. रञ्जनं रञ्जके रक्तचन्दनेऽप्यथ रञ्जनी। मञ्जिष्ठारोचनानीलीगुञ्जासु, हे.

**रण**—रण' कोणे क्वणे पुंसि समरे पुनपुंसकम्, मे रणः कोणे क्वणे युधि, हे आजौ रवे रण, अ. रण. क्वणनयुद्धयोः, त्रि. रणः कोणक्वणाजिपु, वि.

**रण्डा**—रण्डा मूपिकपर्ण्याञ्च विधवायाञ्च योपिति, मे. रण्डा मूपिक-पर्ण्याञ्च रण्डा विधवयोपिति, वि. रण्डा त्वाखुपर्णी मृतप्रिया, हे. रण्डा स्याद्विध-वौपध्योः, त्रि.

**रत**—रतं सुरतगुह्ययो', मे., वि.

**रतनारीच**—रतनारीचो नारीणा सीत्कारे च शुनि स्मरे, मे. रतनारीच इत्येप कथितो रतिवल्लभे। कुक्कुरे रतनारीचः सीत्कारे वरयोपिताम्, वि. रतनारीचो मन्मथे शुनि स्त्रीणा च शीत्कृतौ, हे. कुक्कुरे रतनारीचः शीत्कारे वरयोपिताम्, त्रि

**रर्ताधक**—रर्ताधिक स्याद्दिवसे सुखस्नानेऽष्टमङ्गले, मे, वि रर्ताधिक तु दिवसे सुखस्नानेऽष्टमङ्गले, हे

**रति**—रति स्त्री स्मरदारेषु रागे सुरतगुह्ययो, मे रति स्मरप्रियायाञ्च रागे च रमणे रति, वि रति स्मरस्त्रिया रागे रते, हे

**रतू**—रतूर्वर्त्मनि नद्या स्त्री, मे रतू सरिति वर्त्मनि, वि

**रत्न**—रत्न स्वजातिश्रेष्ठेऽपि मणावपि नपुसकम्, मे रत्न श्रेष्ठे मणावपि, वि रत्न स्वजातिश्रेष्ठे स्यान्मणौ, हे रत्न स्वजातिश्रेष्ठेऽपि, अ

**रथ**—रथ पुमानवयवे स्यन्दने वेतसेऽपि च, मे रथ स्यात्स्यन्दने काये चरणे वेतसेऽपि च, वि रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे, हे रथ पौरुष देहयो, त्रि

**रथकार**—रथकारस्तु माहिष्यात्करणीजे च तक्षणि, मे रथकारस्तु माहिष्यकरणीजे च तक्षणि, वि रथकारस्तक्षणि स्यान्माहिष्यात्करणीसुते, हे

**रथाङ्ग**—रथाङ्ग न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे मे रथाङ्गश्चक्रवाकेऽपि रथाङ्ग चक्र इष्यते वि रथाङ्ग कोकपक्षिणि। रथाङ्ग चक्रे, हे चक्रे रथाङ्ग कोके ना, त्रि

**रथ्य**—रथ्या रथौघविशिखावर्तनीषु च योषिति। रथवोढरि पुलिङ्ग, मे रथ्यो रथोद्वहे। रथ्या रथौघे विशिखावर्तनीचत्वरषु च, वि रथ्यो रथासे रथवोढरि। रथ्या तु रथसङ्घाते प्रतोल्या रथचत्वरे, हे

**रद**—रदो दन्ते विलेखने मे, हे रदोऽपि लेखने दन्ते, वि

**रन्तिदेव**—रन्तिदेवस्तु नृपतेर्भेदे च गरुडध्वजे, मे

**रन्ध्र**—रन्ध्र तु दूषणे च्छिद्रे, मे V छिद्र, विवर

**रभस**—रभसो हर्षवेगयो मे, त्रि रभसो वेगहर्षयो वि हे

**रम**—*रमा लक्ष्म्या रम कान्ते रक्ताशोकद्रुमे स्मरे मे रम कान्ते रमा* लक्ष्म्या रक्ताशोकद्रुमे स्मरे, वि रम कान्ते रक्ताशोके मन्मथे च रमा स्त्रियाम् हे

**रमण**—रमण पटोलमूले नार्या स्त्री ना धवे स्मरे, मे रमण स्यात्पटोलस्य मूलेऽपि रमण प्रिये, वि रमण पुन। पटोलमूले जघने रमणो रासभे प्रिये, हे

**रमति**—रमतिर्नायके नाके पुसि स्यात्, मे रमतिर्नायके स्वर्गे, वि

**रम्भ**—रम्भा कदल्यसरसोर्ना वेणौ वारणान्तरे, मे रम्भा कदल्यप्सरसो रम्भो वैणवदण्डके, वि रम्भो वैणवदण्डके। रम्भा त्रिदशभामिन्या कदल्या च हे रम्भा कदल्यप्सरसो, त्रि रम्भा देवाङ्गना प्रोक्ता रम्भा तु कदली मता, अने

**रम्य**—रम्या रात्रौ चम्पके ना मनोज्ञे स्वभिधेयवत्। नपुसक पटोलम्य

मूले सूरिभिरिष्यते, मे. रम्यं मनोरमे रम्या रात्रौ रम्यश्च चम्पके, वि रम्य-श्चम्पकहृद्ययोः। रम्या रात्रौ, हे.

**रल्लक**—रल्लकः कम्बले स्मृतः। तथैव कम्बलमृगे, हे.

**रवण**—रवणः शब्दने खरे, मे. रवणं रासभे ध्वनौ, वि.

**रवि**—रविः पर्वतसूर्ययोः, ह.

**रश्मि**—रश्मिः पुमान्दीधितौ च पक्षप्रग्रहयोरपि, मे. रश्मिरशौ प्रग्रहे च, वि. रश्मिर्घृणिप्रग्रहयोः, हे. किरणप्रग्रहौ रश्मी, अ

**रस**—रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयो। देहधातुप्रभेदे च पारदस्वादयोः पुमान्। स्त्रियां तु रसनापाठाशल्लकीकङ्गुभूमिषु, मे. रसो गन्धरसे स्वादे तिक्तादौ विषरागयो। शृङ्गारादौ द्रवे वीर्ये देहधातौ च पारदे। रसा तु शल्लकीपाठाजिह्वाधरणिकङ्गुषु, वि. रस स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे। वोले रोगे देहधातौ तिक्तादौ पारदेऽपि च। रसा तु रसनापाठासल्लकीक्षितिकङ्गुषु, हे. शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस, अ. जिह्वा भूः शल्लकी रसा। जले शरीरधातौ च पारदस्वादयो रस, त्रि रसो जलं रसो हर्षो रसः शृङ्गारपूर्वकः। रस. सालद्रुनिर्यास पारदोऽपि रसो विषम्, अने शृङ्गारादिषु नवसु च लवणादिषु षट्सु पारदे रागे। निर्यासवीर्यगुणधातुषु च विषघृतादौ रस. प्रोक्त, ह.

**रसन**—रसनं स्वदने ध्वनौ। जिह्वाया तु न पुंसि स्याद्रास्नाया रसना स्त्रियाम्, मे. रसनं स्वादने ध्वाने रसना काञ्चिजिह्वयो, वि. रसनं ध्वनिते स्वादे रसज्ञारास्नयोः स्त्रियाम्, त्रि स्वादे रसज्ञारास्नयोरपि, हे. रसनं तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम्, त्रि

**रसायन**—रसायनं विषेऽपि स्याज्जराव्याधिजिदौषधे। पुलिङ्गः पक्षिराजे च विडङ्गाख्यौषधेऽपि च, मे. रसायनं विडङ्गे स्याज्जराव्याधिजिदौषधे। रसायन. पक्षिराजे विषेऽपि च रसायनम्, वि. रसायनो विडङ्गके। पक्षीन्द्रे रसायनं तु जराव्याधिभिदौषधे, हे.

**रसाल**—रसाला रसनादूर्वाविदारीमार्जितासु च। रसालं सिह्लके वोले रसालश्चेक्षुचूतयो, मे. रसाला मार्जिताया स्याज्जिह्वादूर्वाविदारिषु। रसालं सिह्लके वोले रसालश्चेक्षुचूतयोः, वि. रसाल इक्षौ चूते च रसालं वोलसिह्लयोः। रसाला दूर्वाविदार्योर्मूर्विकाजिह्वयोरपि, हे. रसाला रसनाया स्यान्मथिते दध्नि पाणिना, हा. रसालस्त्विक्षुचूतयोः, त्रि.

**रसिक**—रसिका स्त्री रसालेक्षुरसयो सरसे त्रिषु, मे. रसिकापि रसालाया काञ्चीरसनयोरपि, वि. रसिका कटिसूत्रके। रसनाया रसालायाम्, हे.

**रसित**—रसित पुन । रुतस्तनितयो वनीव स्वर्णादिखचिते त्रिपु, मे रसित तु सुवर्णादिखचिते स्तनिते रते, वि रसित स्वर्णादिलिप्ते रुतस्तनितयोरपि, हे स्वर्णाभ्यक्तेऽपि रसितम्, त्रि

**रस्न**—रस्नस्तक्षव चण्डयो , वि

**रहस्**—रहस्तत्त्वे रते गुह्ये, मे रहोऽपि गुह्ये सुरते च तत्त्वे, वि रहो गुह्ये रते तत्त्वे, हे रहो रते च गुह्ये च, त्रि

**रहस्य**—रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्, मे रहस्या निम्नगाभेदे गोपनीये तु वाच्यवत्, वि रहस्य गोपनीये स्याद्रहस्या सरिदन्तरे, हे

**राका**—राका नद्यन्तरे कच्छ्वा नवजातरज स्त्रियाम् । सम्पूर्णेन्दुतिथौ, मे राका कच्छ्वा दृष्टरज कन्याया सरिदन्तरे । पूर्णेन्दुपूर्णिमायाञ्च, हे राका तु सरिदन्तरे । कच्छूनवरज कन्यापूर्णेन्दुपूर्णिमासु च, वि राका दृष्टरज कन्या कच्छू पूर्णेन्दुपूर्णिमा, त्रि

**राक्षस**—राक्षसो यातुधाने स्याच्चण्डाया राक्षसी स्मृता, मे राक्षसीति च दष्ट्राया राक्षसी रक्षस स्त्रियाम्, वि राक्षसी कौणपी दष्ट्रा, हे

**राग**—रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावपि रागे च गान्धारादौ नृपेऽपि च, मे राग स्याल्लोहितादिषु । गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे, हे रागोऽनुरक्तौ मात्सर्ये क्लेशादावहितादिषु । गान्धारादौ नृपे राग , वि राग क्लेशादिके रक्ते मात्सर्ये लोहितादिषु त्रि

**रागचूर्ण**—रागचूर्ण पुमान्दन्तधावने मकरध्वजे, मे रागचूर्ण स्मरे दन्तधावने रक्तवालुके, वि रागचूर्णस्तु खदिरे मकरध्वजे, हे

**रागसूत्र**—रागसूत्र तुलासूत्रे पट्टसूत्रे नपुसकम्, मे रागसूत्र तुलासूत्रे पट्टसूत्रेऽपि दृश्यते, वि रागसूत्र पट्टसूत्रे तुलासूत्रेऽपि च क्वचित्, हे

**रागिन्**—रागी रक्तेऽपि कामुके, मे रागी रक्ते च कामुके, वि रागी कामिनि रक्तरि, हे रक्त कामी च रागिणौ, त्रि

**राघव**—राघवोऽब्धेर्महामीनभेदे च रघुवशजे, मे राघवो रघुवशजे । महामीनप्रभेदेऽपि जलधे राघव स्मृत , वि राघवोऽब्धिझषान्तरे । रघुजेऽपि, हे

**राजजम्बू**—राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयो स्त्रियाम्, मे राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयो स्मृता, वि राजजम्बूस्तु जम्बुभित् । पिण्डखर्जूरवृक्षश्च, हे

**राजन्**—राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रेऽपि पुसि स्यात्, मे राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो , वि राजा तु पार्थिवे । निशाकरे

प्रभौ शक्रे यक्षक्षत्रिययोरपि, हे. राजा मृगाङ्के क्षत्रिये नृपे, अ. यक्षे चन्द्रे च राजा स्यात्, त्रि. राजा चन्द्रो नृपो राजा, अने.

**राजबदर**—स्याद्राजबदरं रक्तामलके लवणेऽपि च, मे

**राजराज**—राजराज. कुवेरेऽपि सार्वभौमे सुधाकरे, मे., वि. राजराजो नृपेशेन्द्वोः कुवेरे, हे.

**राजवृक्ष**—राजवृक्ष. सुवर्णालिपियालयोः, मे. राजवृक्ष प्रियाले स्यात्सुवर्णालुतरावपि, वि. राजवृक्षः पियालके। सुवर्णालुतरौ, हे.

**राजहंस**—राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे, मे, हे राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः, वि. राजहंसो नृपाग्रे च, त्रि

**राजादन**—राजादनं क्षीरिकायां पियाले किंशुकेऽपि च, मे, वि राजादन प्रियालद्रौ क्षीरिकाया त्रिपत्रके, हे.

**राजार्ह**—राजार्हं जोङ्गके क्लीव राजयोग्येऽभिधेयवत्, मे

**राजि**—राजिः स्त्री पंक्तिलेखयो, मे राजि. स्यात्पंक्तिलेखयो, वि राजी रेखायां पंक्तौ च, हे.

**राजिका**—राजिकापि च केदारे राजसर्पपरेखयो, मे, वि राजिका पक्तौ रेखायां केदारे राजसर्षपे, हे.

**राजीव**—राजीवं नलिने ना तु भेदे हरिणमीनयो, मे राजीवाख्या मृगे मत्स्ये पद्मे राजीपजीविनि, वि राजीवो मीनसारङ्गभेदयोः। राजीवमब्जे, हे राजीवो मृगमीनयोः, त्रि.

**राज्ञी**—राज्ञी राजप्रियाया च भार्याया भास्करस्य च, मे.

**राढा**—राढा स्त्री सुह्मशोभयो., मे. राढा सुह्मेषु शोभायाम्, वि., हे. राढा स्याद्दीप्तिदेशयोः, त्रि. राढा देशविशेषश्च राढा शोभाऽभिधीयते, अने.

**रात्रक**—रात्रकं पञ्चरात्रे ना वेश्यावेश्माब्दवासिनि, मे. रात्रकं पञ्चरात्रके। येन वेश्यागृहे नीतो वत्सरस्तत्र रात्रकः, वि. रात्रकं पञ्चरात्रके। रात्रकस्तु पणवधूगृहान्तर्वर्षवासिनि, हे.

**राध**—राधो मासान्तरे राधा चित्रभेदे च धन्विनाम्। गोपीविशाखाऽमलकीविष्णुक्रान्तासु विद्युति, मे. राधो वैशाखमासि स्याद्राधा गोप्यां च विद्युति। विष्णुक्रान्तामलक्योश्च चित्रवेधे च धन्विनाम्, वि. राधो वैशाखमासे स्याद्राधा विद्युद्विशाखयोः। विष्णुक्रान्तामलक्योश्च गोपीवेधविशेषयोः, हे.

**राधन**—राधनं साधने प्राप्तौ राधना भाषणे स्त्रियाम्, मे. राधनं साधने प्राप्तौ राधनं तोषणेऽपि, वि. राधनं प्राप्तितोषयोः। साधने, हे.

**रसित**—रसित पुन । रुतस्तनितयो क्लीव स्वर्णादिखचिते त्रिपु, मे रसित तु सुवर्णादिखचिते स्तनिते रुते, वि रसित स्वर्णादिलिप्ते रुतस्तनितयोरपि, हे स्वर्णाभ्यक्तेऽपि रसितम्, त्रि

**रस्न**—रस्नस्तक्षकचण्डयो , वि

**रहस्**—रहस्तत्त्वे रते गुह्ये, मे रहोऽपि गुह्ये सुरते च तत्त्वे, वि रहो गुह्ये रते तत्त्वे, हे रहो रते च गुह्ये च, त्रि

**रहस्य**—रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्, मे रहस्या निम्नगाभेदे गोपनीये तु वाच्यवत्, वि रहस्य गोपनीये स्याद्रहस्या सरिदन्तरे, हे

**राका**—राका नद्यन्तरे कच्छ्वा नवजातरज स्त्रियाम् । सम्पूर्णेन्दुतिथौ, मे राका कच्छ्वा दृष्टरज कन्याया सरिदन्तरे । पूर्णेन्दुपूर्णिमायाञ्च, हे राका तु सरिदन्तरे । कच्छूनवरज कन्यापूर्णेन्दुपूर्णिमासु च, वि राका दृष्टरज कन्या कच्छू पूर्णेन्दुपूर्णिमा, त्रि

**राक्षस**—राक्षसो यातुधाने स्याच्चण्डाया राक्षसी स्मृता, मे राक्षसीति च दंष्ट्राया राक्षसी रक्षस स्त्रियाम्, वि राक्षसी कौणपी दंष्ट्रा, हे

**राग**—रागस्तु मात्सर्ये लोहितादिपु । क्लेशादावपि रागे च गान्धारादौ नृपेऽपि च, मे राग स्याल्लोहितादिषु । गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे, हे रागोऽनुरक्तौ मात्सर्ये क्लेशादावहितादिपु । गान्धारादौ नृपे राग , वि राग क्लेशादिके रक्ते मात्सर्ये लोहितादिपु त्रि

**रागचूर्ण**—रागचूर्ण पुमान्दन्तधावने मकरध्वजे, मे रागचूर्ण स्मरे दन्तधावने रक्तवालुके, वि रागचूर्णस्तु खदिरे मकरध्वजे, हे

**रागसूत्र**—रागसून तुलासूत्रे पट्टसूत्रे नपुसकम्, मे रागसून तुलासूने पट्ट-सूत्रेऽपि दृश्यते, वि रागसूत्र पट्टसूने तुलासूनेऽपि च क्वचित्, हे

**रागिन्**—रागी रक्तेऽपि कामुके, मे रागी रक्ते च कामुके, वि रागी कामिनि रक्तरि, हे रक्त कामी च रागिणौ, त्रि

**राघव**—राघवोऽब्धेर्महामीनभेदे च रघुवशजे, मे राघवो रघुवशजे। महामीनप्रभेदेऽपि जलधे राघव स्मृत , वि राघवोऽब्धिझपान्तरे। रघुजेऽपि, हे

**राजजम्बू**—राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयो स्त्रियाम्, मे राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयो स्मृता, वि राजजम्बूस्तु जम्बुभित् । पिण्डखर्जूरवृक्षश्च, हे

**राजन्**—राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रेऽपि पुसि स्यात्, मे राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो , वि राजा तु पार्थिवे । निशाकरे

**रीति**—रीति स्त्रिया स्यन्दप्रचारयो । पित्तले लोहकीट्टे च, मे रीति प्रसारे स्यन्दे च लोहकिट्टारकूटयो, वि रीतिस्तु पित्तले । वैदर्म्यादौ लोहकीट्टे सीमनि स्रवणे गतौ, हे प्रचारस्यन्दयो रीति, अ रीतिस्तु लोहकिट्टारकूटयो, त्रि

**रुक्म**—रुक्मञ्च काञ्चने लोहे, मे, वि रुक्म लोहे सुवर्णे च, हे रुक्म लोहसुवर्णयो, त्रि रुक्म हेम विजानीयाद्रुक्म रजतमुच्यते, अने

**रुक्ष, रूक्ष**—रुक्षस्त्वप्रेम्ण्यचिक्कणे, मे, अ रूक्ष पादपजातौ स्याद्रुक्षोऽप्रेम्ण्यचिक्कणे, वि रुक्षोऽस्निग्धपरुषयो, हे

**रुच्**—रुक् स्त्री शोभाद्युतीच्छासु, मे रुक् शोभाकिरणेच्छासु, हे रुक् शोभाकिरणेच्छासु चेष्यते, वि

**रुचक**—रुचको वीजपूरे च निष्के दन्तकपोतयो । न द्वयो सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययो । सौवर्चलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च, मे रुचक मङ्गलद्रव्ये ग्रीवाभरणदन्तयो । उत्कटे वीजपूरे च सौवर्चलविडङ्गयो । रोचनाया च रुचकमश्वाभरणमाल्ययो, वि रुचकस्तु मातुलुङ्गे निष्के सौवर्चलेऽपि च । रोचनाया विडङ्गे च मङ्गल्यद्रव्यदन्तयो । अश्वस्याभरणे माल्ये प्रोत्कटेऽपि प्रकीर्तित, हे

**रुचि**—रुचि स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयो, मे रुचिर्द्युतौ । स्पृहाभिष्वङ्गशोभासु, हे रुचिर्मयूखे शोभायामभिष्वङ्गाभिलाषयो, वि अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचि स्त्रियाम्, अ दीप्तिश्चेच्छा तथा रुचि, अने

**रुजा**—रुजा रोगे च भङ्गे, मे रुजा त्वामयभङ्गयो, हे रुजा स्याद्रोगभङ्गयो, त्रि

**रुण्डिका**—रुण्डिका द्वारपिण्डया च दूतिकाया रणक्षितौ, मे, वि

**रुदथ**—रुदथ शुनि कुक्कुटे, वि रुदथ कुक्कुटशुनो, हे

**रुद्र**—रुद्रो वृषभे, ह

**रुधिर**—रुधिरोऽङ्गारके पुंसि क्लीव तु कुङ्कुमाऽसृजो, मे रुधिरोऽङ्गारके प्रोक्तो रुधिर कुङ्कुमाऽसृजो, वि रुधिर घुसृणे रक्ते रुधिरो धरणीसुते, हे रुधिर कुङ्कुमेऽपि च, त्रि, हा कुङ्कुम रुधिर ज्ञेय रुधिर क्षतज स्मृतम्, अने

**रुमा**—रुमा सुग्रीवदारेपु विशिष्टलवणाकरे, मे रुमा सुग्रीवदारेपु विशिष्टे लवणाकरे, वि रुमा स्याल्लवणाकरे । सुग्रीवपत्न्याम्, हे

**रुरु**—रुरुर्ना मृगदैत्ययो, मे रुरुर्मृगे दैत्यभेदे, वि रुरुर्दैत्ये मृगे, हे दैत्यभेदे मृगे रुरु, त्रि

**राधरङ्कु**—राधरङ्कुस्तु ना सीरे शीकरे च घनोपले, वि राधरङ्कुस्तु ना सीरे शीकरे जलदोपले हे राधरङ्कु पुमान सीरे शीकरे च घनोपले मे

**राम**—रामा योषाहिङ्गुलिन्यो क्लीव वास्तुककुष्ठयो । ना राघवे च वरुणे रैणुकेये हलायुधे । हरे च पशुभेदे च त्रिपु चारौ सितेऽसिते, मे राम पशु विशेषे स्याज्जामदग्न्ये हलायुधे । राघवे चासितश्वेतमनोज्ञेपु च वाच्यवत । रामाऽङ्गनाहिङ्गुलिन्यो राम वास्तुककुष्ठयो वि राम श्यामे हलायुधे । पशुभेदे सिते चारौ राघवे रेणुकासुते । राम तु वास्तुके कुष्ठे रामा हिङ्गुलिनिस्त्रियो, हे वले रामो नीलचारुसिते त्रिपु अ अथ राघवे । राम पशौ भार्गवे च, नि रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ । राम पशुविशेपश्च रामो दशरथात्मज अने शुक्लेऽपि शुचिरामौ ह

**रामिल**—रामिलो रमण कामे मे हे रामिलो रमण स्मरे वि

**राशि**—राशिर्मेषादिपुञ्जयो म वि हे अ

**राष्ट्र**—राष्ट्र स्यादुपवर्तने । उपद्रवे क्लीवपुसो म राष्ट्रमुद्दिष्टमुत्पाते तथा स्यादुपवर्तने वि राष्ट्रमुत्पातनीवृतो हे अथ राष्ट्रोऽस्त्री विपये स्यादुपद्रवे, अ

**रास**—रास कोलाहले ध्वाने भापाशृङ्खलकऽपि च । क्रीडाभदे च गोपानाम मे रास कोलाहले ध्वनौ । भापाशृङ्खलके रास क्रीडायामपि गोदुहाम् वि रास क्रीडासु गोदुहाम् । भापाशृङ्खलके ह भापाशृङ्खलके रास क्रीडायामपि गोदुहाम त्रि

**रासेरस**—रासरसस्तु रास स्याद्रससिद्धवलावपि । पष्ठीजागरके गोष्ठ्या शृङ्गारपरिहासयो वि रासेरसस्तु गोष्ठ्या स्याद्रासशृङ्गारयोरपि । रससिद्धौ रसावासे पष्ठीजागरकेऽपि च मे रासेरसो रससिद्धवलौ शृङ्गारहासयो । पष्ठी-जागरके रसगोष्ठ्याम ह

**रास्ना**—रास्ना च स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् मे रास्ना स्मृता भुजङ्गाक्ष्यामेलापर्ण्यां च कथ्यत वि रास्नैलापर्णीसर्पाक्ष्यो, हे

**रिक्त**—रिक्त शून्ये वने मे रिक्त काननशून्ययो, वि रिक्त वनेऽपि त्रि

**रिष्ट**—रिष्ट क्षेमाशुभाभावे पुसि खड्गे च फनिले, मे रिष्ट क्षेमेऽशुभे रिष्टोऽसौ, ह रिष्ट क्षमाशुभाभावकृपाणेपु प्रचक्षते वि रिष्ट क्षेमाशुभाभावेपु अ रिष्ट पापाशुभयो ह

**रिष्टि**—खड्ग ना शुभे स्त्री, म रिष्टि खड्गे समृद्धौ च, वि

**रीढा**—अवज्ञा कथ्यते रीढा रीढा गतिरपीप्यते, अने

**रूक्ष**—v रुक्ष

**रूढ**—रूढ जाते प्रसिद्धे च, मे

**रूप**—रूप स्वभावे सौन्दर्ये नाणके पशुशब्दयो । ग्रन्थावृत्तौ नाटकादौ आकारश्लोकयोरपि, वि, मे स्याद्रूप श्लोकशब्दयो । पशावाकारे सौन्दर्ये नाणके नाटकादिके । ग्रन्थावृत्तौ स्वभावे च, हे ग्रन्थावृत्तौ पशौ शब्दे स्वभावे नाटकादिषु । रूपमाकारसौन्दर्यनाणकेष्वपि दृश्यते, नि रूप मूर्ते च विद्रुमे, अने रूप मृगेऽपि विज्ञेयम्, ह

**रूपक**—रूपक नाटके धूर्ते काव्यालङ्करणेऽपि च, मे रूपक नाटके धूर्ते काव्यालङ्करणे विदु, वि रूपक नाटके प्रोक्त काव्यालङ्कारधूर्तयो, हे

**रूप्य**—रूप्य स्यात्सुन्दरे त्रिपु । आहतस्वर्णरजते रजते च नपुसकम्, मे रूप्य स्यादाहते स्वर्णरजते रजतेऽपि च । रूप्य प्रशस्तरूपे तु वाच्यवत्समुदीरितम्, वि रूप्यमाहतहेमादौ रजते रूपवत्यपि हे रूप्य प्रशस्तरूपेऽपि, अ रूप्य त्रिपु सुरूपके । आहतस्वर्णरजते रजते च नपुसकम्, त्रि

**रेक**—रेक शङ्कानीचविरेचने मे रेक शङ्काविरेकयो । हीनेऽपि, हे रेको विरेके शङ्काया रेक स्यादधमेऽपि च वि

**रेखा**—रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि, हे, वि

**रेचनी**—रचनी त्रिवृतादन्त्यो मे रेचनी त्रिवृतादन्तीगुन्द्रारोचनिकासु च, वि रेचनी गुन्द्रा दन्ती रोचनिका त्रिवृत हे

**रेणु**—रेणु स्त्रीपुसयोर्धूलौ पुलिङ्ग पर्पटे पुन मे रेणु पर्पटके धूल्यामल्पे, वि रेणुर्धूल्या पर्पटके, हे

**रेणुका**—रेणुकापि हरेणौ च जामदग्न्यस्य मातरि मे रेणुका तु हरेण्वा स्याज्जमदग्नेश्च योषिति, हे रेणुकापि हरेणौ स्याज्जमदग्निस्त्रियामपि, वि

**रेतस्**—रेत शुक्रे पारदे च, मे

**रेत्र**—रेत्र रेतसि पीयूषे पटवासेऽपि सूतके, वि, मे रेत्र पीयूषपटवासयो । रेत सूतकयो, हे

**रेप**—रेप स्यान्निन्दिते क्रूरे, मे, वि रेप क्रूरे विगर्हिते, हे

**रेपस्**—रेपा स्यादधमे क्रूरे कृपणेऽप्यभिधेयवत्, मे रेपा स्यादधमे क्रूरे कृपणेऽपि च वच्यते, वि

**रेफ**—रफो रवर्णे पुसि स्यात्कुत्सिते पुनरन्यवत्, मे रेफो रवर्णे सप्रोक्त कुत्सिते वाच्यवत् पुन, वि रेफोऽवद्यरवर्णयो, हे रवर्णे पुसि रेफ स्यात्कुत्सिते वाच्यलिङ्गक, अ त्रिपु स्यात्कुत्सिते रेफो रवर्णे तु पुमानयम्, त्रि

**रौहिणेय**—रौहिणेयोऽन्यवद्वत्से ना बुधे च हलायुधे, मे. रौहिणेयो भवेद्वत्से रेवतीरमणे बुधे, वि. रौहिणेयो वत्से बुधे बले, हे. वत्से बुधे बले रौहिणेय', त्रि.

**रौहिष**—v. रोहिष.

**ल**—लः शक्रे ला तु दाने स्याद्ग्रहणेऽपि निगद्यते, मे. क्रिया ककुद्गतो मासं पिनाकी भूर्बलानुजः। लम्पटः शक्रसंज्ञश्च वाच्यो रान्तो लकारकः, मा. लो दीप्तौ द्यां लश्च भूमौ भये चाह्लादनेऽपि च। लो वाते लवणे च स्याल्लो दाने च प्रकीर्तित, ए.

**लक्ष**—लक्षा न पुंसि सङ्ख्यायां क्लीवं व्याजशरव्ययो', मे. लक्षं शरव्ये सङ्ख्यायां लक्षं छद्मनि कथ्यते, वि. लक्षं व्याजशरव्ययो.। सङ्ख्यायामपि, हे. सङ्ख्याया तु न ना लक्षं क्लीवं व्याजशरव्ययोः, त्रि.

**लक्षण**—लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्, मे. लक्षणं नाम्नि चिह्ने च सौमित्रौ चापि लक्षण , वि. लक्षणा सारसी, त्रि. लक्षण नामचिह्नयोः। लक्ष्मणं च लक्षणस्तु सौमित्रौ लक्ष्मणो यथा, हे

**लक्ष्मण**—लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत्, मे. लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मण'। लक्ष्मणौषधिसारस्योः सश्रीके चाभिधेयवत्, वि लक्ष्मण' श्रीयुते लक्ष्मणौषधौ सारसस्त्रियाम्, हे दाशरथि. श्रीमांश्च लक्ष्मण , त्रि. सारसो लक्ष्मणः प्रोक्तो लक्ष्मणो राघवानुजे, अने. v. लक्षण.

**लक्ष्मन्**—लक्ष्म चिह्ने प्रधाने च, मे , वि लक्ष्म चिह्नप्रधानयो', अ. लक्ष्माख्या कन्दजाति. स्याच्चिह्नं लक्ष्म च लक्ष्मणम्, अने.

**लक्ष्मी**—लक्ष्मीः सम्पत्तिशोभयोः। ऋद्धयौषधे च पद्माया वृद्धिनामौषधेऽपि च। स्त्री फलिन्याम्, मे. लक्ष्मीः श्रीरिव सम्पत्तिपद्माशोभाप्रियङ्गुषु, वि. लक्ष्मी. श्रीशोभासम्पत्तिप्रियङ्गुषु, हे. सम्पत्कमलयोर्लक्ष्मी', त्रि. v. विभ्रम.

**लक्ष्मीपति**—लक्ष्मीपतिः पुमान् वासुदेवे नरपतावपि, मे. लक्ष्मीपतिर्वासुदेवे लवङ्गद्रुमपूगयोः, वि. लक्ष्मीपतिर्जनार्दने। पूगे लवङ्गवृक्षे च, हे.

**लक्ष्मीपुत्र**—लक्ष्मीपुत्रस्तु पुंलिङ्गः कामदेवे तुरङ्गमे, मे. लक्ष्मीपुनः स्मरे हये, वि. लक्ष्मीपुत्रो हये कामे, हे. लक्ष्मीपुत्रौ स्मरहयौ, त्रि.

**लक्ष्य**—लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्, मे. लक्ष्यं शरव्ये सङ्ख्यायां लक्ष्यं छद्मनि सम्मतम्, वि.

**लग्न**—लग्नं राश्युदये क्लीवं सक्तलज्जितयोस्त्रिषु, मे. लग्नं राश्युदये लग्नं

**रोप**—रोपो रोपणवाणयो , मे , वि रोपौ रोपणेपू रोप रन्ध्रे, हे शररोपणयो रोप , त्रि

**रोमन्थ**—रोमन्थ स्यात्पाशूद्गारो रोमन्थ कीटवर्तनम्, अने

**रोमहर्षण**—रोमहर्षण रोमाञ्चे ना सूते च विभीतके, मे रोमहर्षणमित्येतद्रोमाञ्चेऽपि विभीतके, वि रोमहर्षणाख्या तु रोमोद्गमे विभीतके, हे

**रोषण**—रोषण पारदे हेमघर्षणोपरयो पुमान् । क्रोधने वाच्यलिङ्ग स्यात्, मे रोपण पारदे हेमकषणोषरयोस्तथा । रोषणेऽपि, वि रोषणोऽमपर्णे हेमघर्षे पारद ऊपरे, हे

**रोहक**—रोहक प्रेतभेदे ना रोढरि त्रिपु विश्रुत , मे

**रोहिणी**—रोहिणी कण्ठरुग्भिदि। भभित्कटुभरासोमवल्केपु लोहितागवो , मे रोहिणी कटुरोहिण्या रोहिणी लोहितागवो । कण्ठरोगान्तरे भे च सोमवल्के च रोहिणी, वि रोहिणी सोमवल्के भे कण्ठरोगान्तरे गवि । लोहिताक्टुरोहिण्यो , हे अथ रोहिणी । नक्षत्रे रोहिताया च त्रि

**रोहित्**—रोहिन्मृग्या लताभेदे स्त्री नार्के, मे रोहित्सूर्यलताभिदो , वि

**रोहित**—रोहित कुङ्कुमे रक्ते ऋजुशस्त्रशरासने । पुसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे, मे रोहित रुधिरे धीर ऋजुशत्रशरासने । रोहितो मीनमृगयोर्भेदे रोहितकद्रुमे वि रोहितो लोहिते मीन मृगे रोहितकद्रुमे । रोहित ऋजुशस्त्रे धीरे, हे रोहितमृजुशस्त्रे रक्ते ना मृगमीनयो , त्रि रोहित शक्रचोदण्डो रोहितो मत्स्यपुङ्गव । रोहितो लोहितो वर्णो मृगराजस्तु रोहित , अने

**रोहिताश्व**—रोहिताश्वश्चित्रभानौ हरिश्चन्द्रनृपात्मजे, मे रोहिताश्वो वृहद्भानौ हरिश्चन्द्रनृपात्मजे, वि रोहिताश्वो हुताशने । हरिश्चन्द्रनृपसुते, हे

**रोहिन्**—*रोही रोहितकेऽश्वत्थवटपादपयो पुमान्, मे रोही रोहितकेऽश्वत्थ* वटपादपयोरपि, वि रोही रोहितकेऽश्वत्थे वटे, हे

**रो(रौ)हिप**—रौहिप कत्तृणे क्लीव पुसि स्याद्धरिणान्तरे, मे रौहिप कत्तृणे ज्ञेय रोहिपो हरिणान्तरे, वि रौहिप । मृगकत्तृणमत्स्येपु, हे

**रौद्र**— रौद्रो घर्मे रसे चण्डया स्त्री तीव्रे भीपणे त्रिपु, मे रौद्रो नाट्यरसान्तरे । रौद्रोऽतिभीपणे तीव्रे रौद्री स्कन्दस्य मातरि, वि रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्याम्, हे

**रौरव**—रौरवो नरके घोरे, मे , वि रौरवो भीषणे नरकान्तरे, हे रौरवो घोरनरको, त्रि

**लम्बोदर**—लम्बोदरः स्यादुद्धाने गणानामधिपेऽपि हि, मे. लम्बोदर स्यादुध्माने गणानामधिपऽपि च, वि., त्रि. लम्बोदर स्यादाध्माने प्रमथानाञ्च नायके, हे.

**लय**—लयो विनाशे संश्लेषे साम्ये तौर्यत्रिकस्य च, मे., वि. लयस्तौर्यत्रयीसाम्ये सश्लेपणविलासयोः, हे. अथ श्लेषवाद्ययो । लय , त्रि.

**ललज्जिह्व**—ललज्जिह्वोऽन्यवर्द्धिस्ते क्रमेलकशुनोः पुमान्, मे. ललज्जिह्वो मतो हिंस्रे क्रमेलकशुनोरपि, वि.

**ललना**—ललना कामिनीनारीभेदजिह्वासु योपिति, मे. ललना नाडिकाभेदे जिह्वाया वरयोपिति, वि. ललना स्त्री नारी जिह्वा, हे. योपिज्जिह्वा च ललना, त्रि.

**ललाम**—ललामं लाञ्छने ध्वजे । शृङ्गे प्रधाने भूपाया रम्ये बालधिपुण्ड्रयो । तुरङ्गे च प्रभावे, मे ललामं पुच्छपुण्ड्राश्वभूपाप्राधान्यकेतुपु, अ भूपाया लाङ्गूले प्रधानशृङ्गप्रभावपुण्ड्रेपु । ध्वजलक्ष्मतुरङ्गेपु नवसु ललाम प्रयुज्यते प्राज्ञैं , ह. v. ललामन्.

**ललामन्**—ललाम स्यात्प्रभावे च लाञ्छनध्वजवाजिपु । शृङ्गे प्रधाने भूपायामपि बालधिपुण्ड्रयो , मे. ललाम च ललामञ्च लाञ्छनध्वजवाजिपु । शृङ्गे प्रधाने भूपाया रम्ये बालधिपुण्ड्रयो । प्रभावे च, वि ललामवल्ललामाश्वे चिह्ने शृङ्गपताकयो । रम्ये प्रधाने भूपाया पुण्ड्रे पुच्छप्रभावयो , हे हये पुच्छे ध्वजे पुण्ड्रे शैले पुसि गुणाधिके । विपे धामनि भूपाया ललामेति बुधैर्मतम्, अने.

**ललित**—ललित त्रिपु । ललिते चेप्सितेऽपि स्याद्धारभेदे तु न द्वयो., मे. ललित हारभेदे स्यादीप्सिते ललितेऽपि च, वि. ललितमीप्सिते । ललितो हारभेदे स्यात्, हे

*लव*—*लवो लेशे विनाशे च छेदने रामनन्दने, मे., वि लवः कालभिदि* च्छिदि । विनाशे रामजे लेशे, हे. लवश्छेदनलेशयो , त्रि.

**लवण**—लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे । तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदत्विपो स्त्रियाम्, मे. लवणो रसरक्षोऽब्धिभेदेपु लवणान्विते, वि. लवणो राक्षसे वले । अब्धिपभेदे लवणा त्विट्, हे.

**लाङ्गल**—लाङ्गली तोयपिप्पल्या क्लीवन्तु कुसुमान्तरे । गोदारणे तृणराजगृहदारुविशेपयो , मे. लाङ्गली जलपिप्पल्या लाङ्गल कुसुमान्तरे । सीरेऽपि लाङ्गलं तालगृहदारुविशेपयो, वि लाङ्गलं तालहलयोः पुष्पभिद्गृहदारुणो. । लाङ्गली जलपिप्पल्याम्, हे. लाङ्गलं हलमिप्यते, अने.

सक्तलज्जितयोरपि, वि लग्नन्तु लज्जिते। राशीनामुदये सक्ते, हे राशीना-मुदयो लग्न सक्तलज्जितयोस्त्रिपु, त्रि

**लघिष्ठ**—लघिष्ठोऽत्यल्पके भेले, मे लघिष्ठोऽत्यल्पके भेलेऽपि, वि लघिष्ठो भेलकेऽपि च, हे

**लघु**—लघुरगुरौ च मनोज्ञे नि सारे वाच्यवत्क्लीवम्। शीघ्रे च कृष्णागुरुणि पृक्कायामौषधौ तु स्त्री, मे लघुर्मनोज्ञनि सारागुरुपु प्रथितो लघु। कृष्णागुरुणि शीघ्र च स्पृक्काया च स्मृता लघु, वि लघु स्पृक्का लघ्वसार ह्रस्व चार्वगुरु द्रुतम्, हे त्रिविष्टेऽल्पे लघु, अ पृक्काया स्त्री लघु क्लीव शीघ्रे कृष्णागुरुण्यपि, त्रि

**लघ्वी**—लघ्वी लाघवयुक्ताया प्रभेदे स्यन्दनस्य च, मे लघ्वी ह्रस्वविवक्षाया प्रभेदे स्यन्दनस्य च, वि, हे

**लङ्का**—लङ्का रक्ष पुरीशाखाशाकिनीकुलटासु च, मे, वि लङ्का तु शाखा शाकिनी कुलटा पुरी, हे नगरीशाखयोर्लङ्का, त्रि

**लङ्ग**—लङ्गस्तु सङ्गपिङ्गयो, मे लङ्ग सङ्गे च पिङ्गे च, वि

**लङ्घन**—लङ्घन तूपवासे स्यात्क्रमणे प्लवनेऽपि च, मे, वि लङ्घन भोजन-त्यागे प्लवने क्रमणेऽपि च, हे

**लञ्ज**—लञ्ज स्यात्पट्टकच्छयो, वि, हे, हा

**लट**—लट प्रमादवचनदोपयोरप्युदाहृत, वि

**लट्वा**—लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे, मे, वि लट्वा पक्षिकुसुम्भयो, हे करञ्जभित्फले लट्वा वाद्यपक्षिप्रभेदयो, त्रि लट्वा शिल्या खगान्तरे, हा

**लता**—लता प्रियङ्गुशाखयो। पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च। माधवीदूर्वयो, मे लता ज्योतिष्मतीदूर्वाशाखावल्लीप्रियङ्गुपु। स्पृक्कामाधव्यो कस्तूर्याम्, हे लता ज्योतिष्मतीस्पृक्काशाखावल्लीप्रियङ्गुपु। लता कस्तूरि-कायाञ्च माधवीदूर्वयोरपि, वि कस्तूरीपृक्कयोर्लता, त्रि

**लभ्य**—लभ्य युक्ते च लब्धव्ये, मे, वि लभ्य लब्धव्ये युक्ते च, हे युक्ते च लभ्य स्यात्, त्रि

**लम्पाक**—लम्पाको लम्पटे देशे, मे, वि, हे

**लम्बकर्ण**—लम्बकर्ण स्मृतोऽङ्कोठपादपे छगलेऽपि च, मे, वि लम्बकर्ण पुनश्छगे। अङ्कोठे, हे छागेऽपि लम्बकर्ण स्यात्, त्रि

**लम्बा**—लम्बा पद्मालयागौर्योस्तिक्ततुम्ब्यामपि स्त्रियाम्, मे लम्बा श्री-तिक्ततुम्बयो, वि

केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु, वि. लीला केलिर्विलासश्च शृङ्गार-भावजा क्रिया, हे. लीला विलासक्रिययो., अ

**लुब्ध**—लुब्ध आकाङ्क्षिणि व्याधे, मे., हे. लुब्धो मृगयुकाङ्क्षिणो:, वि

**लूता**—लूता तूर्णनाभपिपीलिकागदान्तरे, मे. लूता तु रोगे पिपीलिकोर्णना-भयो:, हे. लूता पिपीलिकायां स्यादूर्णनाभे गदान्तरे, वि.

**लूतामर्कटक**—लूतामर्कटक: पुत्रीनवमालिकयो: कपौ, हे. लूतामर्कटक. पुत्र्यां नवमाल्यां प्लवङ्गमे, वि.

**लूनक**—लूनको भेदिते पशौ, मे. लूनक: स्यात्पशौ भिन्ने, वि. लूनकस्तु पशौ भिन्ने, हे.

**लेख**—लेखो लेख्ये सुरे लेखा लिपिराजिकयोर्मता, मे., वि. लेखो लेख्ये दैवते च लेखा राज्या लिपावपि, हे. लेखो देवेऽपि पंक्तौ, त्रि.

**लेखन**—लेखनं छेदने भूर्जे लिपिन्यासे, मे. लेखनं छेदने भूर्जे लिपिन्यासे च लेखनम्, वि. लेखनम्। भूर्जे छेदे लिपिन्यासे, हे. छेदे भूर्जे च लेखनम्, त्रि.

**लेखनिक**—लेखनिक: कथितो लेखहारके। लेखेषु परहस्तेन स्वहस्तस्य च लेखके, मे. लेखनिकस्तु तत्र य। स्वहस्तं परहस्तेन लिखितेषु विलेखयेत्। लेखहारे, हे लेखनिको लेखहारे य: स्वहस्तं विलेखयेत्। लेखेषु परहस्तेन तत्रा-प्येष प्रदर्शित:, वि

**लेप**—लेप: प्रलेपने जग्धौ, मे. लेपस्तु सुधाजेमनालेपनेषु च, वि. लेपस्तु लेपने। अशने च सुराया च, हे. लेपौ लेपनजेमने, त्रि.

**लोक**—लोको जनेऽपि भुवने, मे. लोकस्तु भुवने जने, वि., अ. लोको विश्वे जने, हे.

**लोचक**—लोचको मासपिण्डेऽक्षितारकायाञ्च कज्जले। ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयो:। निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि, मे. लोचको मांसपिण्डे स्यादक्षितारे च कज्जले। ललाटाभरणे स्त्रीणा कदलीनीलवस्त्रयो:। निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि, वि. लोचको नीलवाससि। कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे। निर्बुद्धौ कर्णिकामोचाज्यासु प्रश्लथचर्मणि, हे. नीलवस्त्रेऽक्षिताराया लोचको निर्मतौ त्रिषु, त्रि.

**लोत**—लोतमश्रुणि चोरिते, वि.

**लोमश**—लोमशो मुनिमेषयो:। लोमान्विते स्त्रियां काकजङ्घामांसीवचासु च। शूकशिम्बिमहामेदाकाशीशे शाकिनीभिदि, मे. लोमशो लोमसंयुते। मेढ्के चाथ कासीसशृगालीजटिलासु च। लोमशा शूकशिम्ब्याञ्च मर्कटीकाकजङ्घयो.।

**लाङ्गलिन्**—लाङ्गली नालिकेरे द्वौ रेवतीरमणे पुमान्, मे लाङ्गली वलभद्रे स्यान्नारिकेले च लाङ्गली, वि लाङ्गली वलभद्रे स्यान्नारिकेले, हे

**लाङ्ग(ङ्गू)ल**—लाङ्गुल पुच्छशेफसो, मे लाङ्गूल मेहने पुच्छे, वि लाङ्गुल शिश्नपुच्छयो, हे

**लाज**—अथ लाज स्यादार्द्रतण्डुले। नपुसकमुशीरेऽथ स्त्रिया पुभूम्नि चाक्षते, मे लाजा स्युर्भृष्टधान्येषु लाज स्यादार्द्रतण्डुले। उशीरे लाजमुद्दिष्टम्, वि लाज स्यादार्द्रतण्डुले। लाजास्तु भृष्टधाना स्युर्लाज पुनरुशीरके, हे

**लाञ्छन**—लाञ्छन नामचिह्नयो मे लाञ्छन लक्षणे नाम्नि, वि लाञ्छन लक्ष्यसज्ञयो, हे

**लाट**—लाटो देशान्तरेऽशुके, मे लाटो वस्त्रदेशयो, हे लाटो देशाशुकेऽपि च, वि लाटोऽशुके च देशे च, त्रि

**लालस**—लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयो, मे लालसो लालसाऽपि स्याद्याच्ञातृष्णातिरेकयो। औत्सुक्ये च वि लालसो लोलयाच्ञयो, हे लालसे प्रार्थनौत्सुक्ये, अ

**लालाटिक**—लालाटिक प्रभोर्भालदर्शिन्याश्लेपणान्तरे। कार्याक्षमे, मे लालाटिक प्रभोर्भालदर्शिन्याश्लेपणान्तरे। कार्याक्षमेऽपि, वि लालाटिक स्यादाश्लेपे भवेत्कार्याक्षमेऽपि च। प्रभोर्भालदर्शिनि च, हे लालाटिक प्रभोर्भाल दर्शी कार्याक्षमश्च य, अ

**लासक**—लासको लास्यकारिणि। मयूरे लसके च, मे लासको लसके लास्यकारिण्यपि मयूरके, वि लासकौ केकिनर्तकौ, हे

**लास्य**—लास्य तौर्यत्रिके मतम्। नृत्ये च, मे लास्य तौर्यत्रिके नाट्ये, वि

**लिङ्ग**—लिङ्ग चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि। शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुसकम्, मे लिङ्ग मेहनचिह्नयो। शिवमूर्तावनुमाने साङ्ख्योक्तप्रकृतावपि, हे लिङ्ग चिह्नेऽनुमानेऽपि साङ्ख्योक्तप्रकृतावपि। शिवमूर्तिविशेषेऽपि मेहने च प्रचक्षते, वि लिङ्ग चिह्नशेफसो, अ व्यक्ते साङ्ख्योदिते लिङ्ग स्याणौ शेफसि लक्षणे। पुस्त्वादौ, त्रि

**लिप्त**—लिप्त विलिप्तविपदिग्धयो। भुक्ते, मे लिप्त भुक्तविलिप्तयो। विपाक्ते, हे लिप्त विपाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते, वि

**ली**—ली श्लेपणे च चपले, मे

**लीला**—लीला केलिविलासयो। शृङ्गारभावचेष्टायाम्, मे लीला विदु

**वक्त्र**—वक्त्रं मुखे वृत्तभेदे, मे. वक्त्रं छन्दोऽन्तरे मुखे, वि. वक्त्रमास्ये छन्दसि च, हे.

**वक्र**—वक्र शनैश्चरे पुंसि पुटभेदे नपुंसकम्। त्रिपु क्रूरे च कुटिले, मे. वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे, वि. वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः, हे. वक्रः शनैश्चरे क्रूरे पुटभेदे तथाऽनृजौ, त्रि.

**वक्रनक्र**—वक्रनक्रस्तु पिशुने तथैव शुकपक्षिणि, मे. वक्रनक्रः शुके खले, वि. वक्रनक्रौ खलशुकौ, हे.

**वङ्क**—वङ्कः पर्याणभागे ना नदीपात्रे च भंगुरे, मे. वङ्कः पर्याणभागे स्यान्नदीपात्रे च भंगुरे, वि.

**वङ्ग**—वङ्गं सीसकरङ्गयोः। वार्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे, मे. वङ्गं सीसकरङ्गयोः। वङ्गः कार्पासवार्ताकिदेशभेदेपु भाषितः, वि. वङ्गाः कार्पासे वृन्ताके वङ्गा जनपदान्तरे। वङ्गं त्रपुणि सीसे च, हे.

**वच**—वचः कीरे वचौपधौ। शारिकायाञ्च, मे. वचा स्यादुग्रगन्धायां सारिकाया शुके वचः, वि. वचः शुके वचौपधौ। शारिकायाम्, हे सारिकायाञ्च वचा, त्रि.

**वचक्नु**—वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत्, मे. वचक्नुर्वाग्मि-विप्रयोः, वि.

**वज्र**—वज्रं स्याद्बालके धात्र्या क्लीबं योगान्तरे पुमान्। वज्रा स्नुह्यां गुडूच्याञ्च वज्री स्नुह्यन्तरे स्मृता। दम्भोलौ हीरकेऽप्यस्त्री, मे. वज्रं हीरक-दम्भोलिबालकामलकेपु च। वज्रा गुडूचिकायां स्यात्, वि. वज्रं कुलिशहीरयोः। बालके वज्रा त्वमृता, हे. वज्रोऽस्त्री हीरके पवौ, अ.

**वज्रिन्**—वज्री तु बुद्धे देवाधिपे पुमान्, मे.

**वञ्चक**—वञ्चकस्तु खले धूर्ते गृहवभ्रौ च जम्बुके, मे. अथ वञ्चकः खलधूर्तयोः। जम्बूके गृहबभ्रौ च, वि. वञ्चको जम्बुके गेहनकुले खलधूर्तयोः, हे. वञ्चकौ धूर्तफेरवौ, त्रि.

**वञ्जुल**—वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि, मे. वञ्जुलो वेतसा-शोकतिनिशे, वि. वञ्जुलस्त्वशोके तिनिशद्रुमे। वानीरे, हे.

**वट**—वटी त्रिपु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः, मे. वटो गोले गुडे भक्ष्ये वटः साम्यवराटयोः। वटः कपर्दे न्यग्रोधे शुम्बवर्तिकयोर्वटी, वि. वटो गोले गुणे भक्ष्ये वृक्षे साम्यवराटयोः, हे. वटी त्रिपु गुणे पुंसि न्यग्रोधे च कपर्दके, त्रि.

महामेदातिवलयो शाकिनीभिदि चेष्यते, वि लोमशो लोमयुक्तेऽथो लोमशा शाकिनीभिदि। महामेदाकाकजङ्घाशृगालीजटिलासु च। काशीशेऽतिवलाशूकशिम्बीमर्कटिकासु च, हे लोमशो मेढ्रकेऽपि स्यात्, त्रि

**लोल**—लोल स्याद्वाच्यलिङ्गक । सतृष्णे चञ्चले लोला जिह्वाकमलयो स्त्रियाम्, मे लोलश्चलसतृष्णयो । लोला जिह्वाकमलयो, वि लोलश्चले सतृष्णे च लोला तु रसनाश्रियो, हे जिह्वाकमलयोर्लोला, त्रि

**लोह**—लोहोऽस्त्री शस्त्रके लौहे जोङ्गके सर्वतैजसे, मे लोह कालायसे सर्वतैजसे जोङ्गकेऽपि च, हे लोहस्तु शस्त्रके लोह जोङ्गके सर्वतैजसे, वि

**लोहल**—लोहल शृङ्खलाधार्ये भवेदव्यक्तवाचि च, वि लोहल *शृङ्खलाधार्येऽव्यक्तवाचिनि च त्रिषु, मे लोहलोऽस्फुटवादिनि। शृङ्खलाधार्ये,* हे

**लोहित**—लोहित रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने। पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति, मे लोहित कुङ्कुमे रक्ते गोशीर्षे च कुचन्दने। लोहित स्यान्नदे भौमे वर्णभेदे च वाच्यवत्, वि लोहितो मङ्गले नदे। वर्णभेदे लोहितन्तु कुङ्कुमे रक्तचन्दने। गोशीर्षे रुधिरे युद्धे, हे

**लौहित्य**—लौहित्य लोहितत्वे स्यात्क्लीव पुसि नदान्तरे, मे लौहित्य सागरे व्रीहौ, वि लोहित्योऽब्धौ नदे व्रीहौ, हे

**व**—व प्रचेतसि जानीयादिवार्थे च तदव्ययम्। व सान्त्वने च वाते च वरणे च निगद्यते, मे व प्रचेतसि जानीयादिवार्थे च तदव्ययम्, वि व पश्चिमदिगीशे स्यादौपम्ये पुनरव्ययम्, हे वालो वामासनिलयो मेदो वारिदवाहनौ। उत्वारी जलसङ्घश्च खड्गीशोऽपि वकारक मा व स्नेपे चाशये चैव प्रलये गाधनेऽपि व । मानसे वरणे चैव वकार सान्त्वनेऽपि च, ए

**वश**—पुसि वश कुले वेणौ पृष्ठावयववर्गयो, मे वशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च, वि वश मङ्क्षेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च, हे द्वौ वशौ कुलमस्करौ, श्र वशो वर्गे च पृष्ठाने, त्रि वशो वेणौ कुलेऽपि च, हा पृष्ठास्थन्यपि वश, ह मेरौ वृक्षविशेषे च वशशब्दस्तु कार्मुके, श्रने वशपृष्ठे कुले वेणौ वशाख्या कविभि स्मृता, श्रने

**वक्तव्य**—वक्तव्य कुत्सिते हीने वचनार्हे च वाच्यवत्, मे वक्तव्यो वाच्यवद् गर्ह्ये वचोऽर्हहीनयोरपि, हे गर्ह्यहीनौ च वक्तव्यौ, श्र

**वक्तृ**—वक्ता तु पण्डितेऽपि स्याद्वाग्मि-यप्यन्यनिह्नव, मे वक्ता वाग्मिनि पण्डिते, वि

निलये चापि वन प्रस्रवणेऽपि च, वि वन प्रस्रवण गेहे प्रवासेऽम्भसि कानने हे वने सलिलकानने, अ वन काननमम्बु च, अने

**वनज**—वनजा मुद्गपर्ण्या ना मुस्तके क्लीवमम्बुजे, मे वनजो मुस्तके पद्मे वनज वनजो गजे। वनजा मुद्गपर्ण्या च, वि वनजो मुस्तके स्तम्बेरमे वनजमम्बुजे। वनजा तु मुद्गपर्ण्याम्, हे गुल्मेऽपि च वनज, त्रि

**वनमालिन्**—वनमाली तु गोविन्दे वाराह्या वनमालिनी, मे, वि

**वनश्वन्**—वनश्वा गन्धमार्जारे वञ्चकव्याघ्रयो पुमान्, मे वनश्वा गन्धमार्जारे वञ्चकव्याघ्रयोरपि, वि वनश्वा विप्रतारके। शार्दूले गन्धमार्जारे, हे वनश्वा जम्बुके व्याघ्रे, त्रि

**वनस्पति**—वनस्पतिर्ना द्रुमात्रे विनापुष्पफलद्रुमे, मे वनस्पतिर्वृक्षमात्रे विनापुष्पफलद्रुमे, वि वनस्पतिर्द्रुमात्रके। विनापुष्पफले द्रौ च, हे वृक्षमात्रेऽपि वनस्पति, त्रि

**वनित**—वनिता जातरागस्त्रीस्त्रियोस्त्रिषु च याचिते। सेविते, मे वनिता जनितात्यर्थानुरागाया च योषिति। वनित याचितेऽपि स्याद्वनित सेवितेऽपि च, वि वनित तु स्यात्प्रार्थिते सेवितेऽपि च। वनितोत्पादितात्यर्थरागनार्यपि नार्यपि, हे वनिता जनितात्यर्थानुरागायाञ्च योषिति, अ

**वन्दनी**—वन्दनी नतिजीवातुकटिमाचलकर्मसु मे

**वन्य**—वन्य त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयो, मे वन्य वनभवे वन्या वनवारिसमूहयो, वि

**वपन**—वपन बीजाधाने च मुण्डने, मे., वि वपन मुण्डने बीजाधाने, हे

**वपा**—वपा विवरमेदसो, मे, वि, हे मेदो बिल वपा, त्रि

**वपुस्**—वपु क्लीब तनौ शस्ताकृतावपि, मे वपुर्भव्याकृतौ देहे वि वपु शस्ताकृतौ देहे, हे

**वप्तृ**—वप्ता तु जनके पुसि वापकेऽप्यभिधेयवत्, मे

**वप्र**—वप्रस्ताते पुमानस्त्री रेणुक्षेत्रे चये तटे, मे पितृकेदारयोर्वप्रो वप्र प्राकाररोधसो, वि वप्र प्राकाररोधसो। क्षेत्रे ताते चये रेणौ, हे वप्रस्ताते स्त्रिया क्षेत्रे चये रेणौ च रोधसि, त्रि तटो वप्र पिता वप्रो वप्र केदार इत्यपि, अने गिरिसानुन्यपि वप्रम्, ह

**वमथु**—वमथु पुसि वमने गजस्य करशीकरे, मे वमथुर्वमनेऽपि स्याद् गजस्य करशीकरे, वि वमथुर्वमने वारो गजस्य करशीकरे, हे

**वमन**—वमन छर्दनेऽर्दने, मे, हे वमन छर्दनेऽर्दने। स्यादाहुतौ च, वि

**वठर**—वठरोऽम्बष्ठशठयोः, हे. वठरः कुक्कुटे पुंसि शठे च, मे. वठरः शठवेष्टयोः। ककुखटे, वि.

**वडवा**—वडवा द्विजयोषिति। अश्वायां कुम्भदास्याञ्च नारीजात्यन्तरेऽपि च, मे. वडवाऽश्वाकुम्भदास्योः स्त्रीविशेषे द्विजस्त्रियाम्, वि. वडवाऽश्वायां स्त्रीभेदे कुम्भदास्यां द्विजस्त्रियाम्, हे. वडवाऽश्वाकुम्भदास्यो., त्रि.

**वण्ठ**—वण्ठः स्यादकृतोद्वाहे खर्वे कुन्तायुधेऽपि च, मे., वि. वण्ठ. कुन्तायुधे खर्वे भृत्याकृतविवाहयोः, हे.

**वण्ठर**—वण्ठरः स्थगिकारज्जौ लाङ्गूले कुक्कुरस्य च। करीरकोपे तालस्य पल्लवे च पयोधरे, मे वण्ठरस्तालपल्लवे। करीरकोशेऽपि, वि.

**वण्ठाल**—वण्ठालो युद्धभेदे च नौकायाञ्च खनित्रके, मे वण्ठालं शूरयोर्युद्धे नौकायाश्च खनित्रके, वि. वण्ठाल. शूरयुन्नौखनित्रयो., हे

**वण्ड**—वण्डा तु पांशुलाया स्त्री त्रिपु हस्तादिवर्जिते, मे. वण्डापि पाशुलाया स्याद्वण्डो हस्तादिवर्जिते, वि

**वत**—वतामन्त्रणसन्तोपखेदानुक्रोशविस्मये., मे, वि. वतामन्त्रणखेदयोः। धृत्याश्चर्यानुकम्पासु, हे निन्दाया विस्मये वत, ह खेदानुकम्पासन्तोपविस्मयामन्त्रणे वत, अ.

**वतंस**—वतंसस्तु पुमान्कर्णपूरशेखरयोरपि, मे. v. उत्तस

**वत्स**—वत्स पुत्रादिवर्पयोः। तर्णके नोरसि क्लीवम्, मे वत्सस्तर्णकपुत्रादिवर्पे वत्सन्तु वक्षसि, वि. वत्सा उरस्तुक्वर्पतर्णका, हे वत्सौ तर्णकवर्पौ द्वौ, अ. पुत्रादौ तर्णके वर्पे वत्सः क्लीवन्तु वक्षसि, त्रि वत्सौ तर्णकपुत्रकौ, अने. वत्सः संवत्सरेऽपि निर्दिष्टः, ह.

**वदान्य**—वदान्यो दानशौण्डे स्याच्चारुवादिनि वाच्यवत्, मे वदान्यो दानशौण्डे स्याद्वदान्यश्चारुभापिणि, वि. वदान्यः प्रियवागुदारशीलयोरुभयोरपि, हे. वदान्यो वल्गुवागपि, अ. वदान्यस्त्यागवान्सुवाक्, त्रि.

**वध**—वधो हिंसकहिंसयोः, हे.

**वधू**—वधूः स्त्री शारिवौपधे। स्नुपाशटीनवोढास्त्रीभार्यापृक्काङ्गनासु च, मे. वधूः स्नुपानवोढास्त्रीभार्यापृक्वाङ्गनासु च। शटचा च शारिवायां स्यात्, वि. वधूः पत्न्यां स्नुपानार्योः पृक्कासारिवयोरपि, हे. वधूर्जाया स्नुपा स्त्री च, अ. पृक्का महिला च वधूः, त्रि. वधूर्नारी वधूर्भार्या वधूः पुत्रवधूरपि, अने.

**वन**—वनं नपुंसकं नीरे निवासालयकानने, मे. वनं काननीरयो.। प्रवासे

**वरत्रा**—वरत्रा रज्जुकक्षयो., मे. वरत्रा वर्तिकक्षयो., हे

**वरद**—अथ वरदा स्त्रियाम्। कन्यायां वाच्यलिङ्गस्तु प्रसन्ने च समर्धके, मे. वरदोऽपि प्रसन्ने स्याद्वरदः शान्तचेतसि। वरदापि च कन्यायाम्, वि. वरद. पुनः। प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका, हे.

**वरला**—वरला वारला चापि गन्धोलीहंसकान्तयो', मे. वारला वरला चापि गन्धोलीहंसयोपितोः, हे.

**वरवर्णिनी**—वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च। फलिन्यामुत्तमानारी-साधीयस्यामपि स्त्रियाम्, मे. स्याद्वरवर्णिनी लाक्षाहरिद्रारोचनासु च। स्त्रीरत्ने च फलिन्यां च दृश्यते वरवर्णिनी, वि. वरवर्णिन्यङ्गनालाक्षाप्रियङ्गुषु। रोचनाया हरिद्रायाम्, हे. स्त्रीरत्ने च हरिद्राया लाक्षाया वरवर्णिनी, हा.

**वराक**—वराकः सङ्करे पुंसि शोचनीयेऽभिधेयवत्, मे. वराकः सङ्करे शोच्ये, वि. वराक. शोच्यरणयोः, हे वराको मूर्खके भीरौ, अने.

**वराङ्ग**—वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि, मे., वि. वराङ्गं योनौ शीर्षे गुडत्वचि। कुञ्जरे च, हे. वराङ्गन्तु गुडत्वचि गजे पुमान्, त्रि वराङ्गं मूर्ध-गुह्ययो', अ.

**वराटक**—वराटकः पद्मवीजकोशे रज्जौ कपर्दके, मे. वराटक स्थूलरज्जौ पद्मवीजे कपर्दके, वि. वराटक. पद्मवीजकोशे रज्जौ कपर्दके, हे. कपर्दरज्जु-राजीववीजकोषे वराटकः, त्रि.

**वरारोह**—वरारोहा कटावपि। वरारोहस्तु कथितो हस्त्यारोहावरह्योः, वि. वरारोहो गजारोहे वरारोहा कटावपि, हे.

**वराह**—वराहः शूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः, मे. वराह शूकरे मेघे मुस्तकेऽपि, त्रि. वराहोऽब्दे किरौ विष्णौ नाणकेऽप्यद्रिमुस्तयोः, वि. वराहो नाणके किरौ। मेघे मुस्ते गिरौ विष्णौ, हे.

**वरिष्ठ**—वरिष्ठं मरिचेऽपि च। ताम्रे क्लीवं तित्तिरौ ना वरोरुतमयोस्त्रिषु, मे. वरिष्ठः स्यादुरुतरे प्रवरे तित्तिरावपि। वरिष्ठं मरिचे ताम्रे, वि. वरिष्ठस्तु तित्तिरौ। वरिष्ठं मरिचे ताम्रे वरोरुतमयोरपि, हे. वरिष्ठं मरिचेऽपि च। ताम्रे चोरुतरे च, त्रि.

**वरीयस्**—वरीयान् योगभिच्छ्रेष्ठवरिष्ठेष्वतियूनि च, मे. वरीयानतियूनि स्याद्वरिष्ठे श्रेष्ठयोगयोः, वि. वरीयान् श्रेष्ठयोगयोः। अतियून्यतिविस्तीर्णे, हे. (अतिशये) वरीयांस्तूरुवरयोः, अ.

**वमि**—वमिर्वान्तौ स्त्रियां पुंसि हुताशने, मे वमिर्वान्तौ हुताशने, वि वमि-र्वान्तेऽनले, हे

**वय.स्थ**—वय स्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीपु च। सूक्ष्मैलायाञ्च काकोल्यां पथ्यायां तरुणे त्रिपु, मे वय स्थो वाच्यवद्यूनि वय स्था शाल्मलीद्रुमे। ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीपु च, वि वय स्थो मध्यमवया वय स्था शाल्म-लीद्रुमे। ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीपु च, हे काकोल्यामलकी ब्राह्मी वय स्था तरुणे त्रिपु, त्रि

**वयस्**—वय पक्षिणि बाल्यादौ यौवने च नपुसकम्, मे वय पक्षिणि बाल्यादौ वयो यौवनमात्रके, वि वयस्तारुण्ये बाल्यादौ खगे, हे खगबाल्यादिनोर्वय, अ

**वर**—वरो जामातरि वृतौ देवतादेरभीप्सिते। पिङ्गे पुंसि त्रिपु श्रेष्ठे कुङ्कुमे तु नपुसकम्। वरी प्रोक्ता शतावर्यां वरा च स्यात्फलत्रिके। मनागिष्टे वर क्लीवं केचिदाहुस्तदव्ययम्, मे वरोऽभीष्टे देवतादेर्वरो जामातृपिङ्गयो। श्रेष्ठेऽन्यवद् वरो वृतौ वर काश्मीरजे मतम्। त्रिफलायां वरा प्रोक्ता शतावर्यां वरी वरम्। अव्ययन्तु मनागिष्टे, वि वरो वृतौ। विटे जामातरि श्रेष्ठे देवता-देरभीप्सिते। वर तु घुसृणे किञ्चिदिष्टौ वरी शतावरी, हे देवाद्वृते वर श्रेष्ठे त्रिपु क्लीव मनाक्प्रिये, अ वरो जामातरि वृते कुङ्कुमे च नपुसकम्, त्रि वरौ श्रेष्ठहुताशनौ, अने

**वरचन्दन**—वरचन्दनमाख्यातं कालीये देवदारुणि, मे वरचन्दनमाम्नातं कालीये देवदारुणि, वि वरचन्दन देवदारुणि। कालेये, हे

**वरट**—वरटा द्वयोर्वरट्या स्त्री हस्या च तत्पतौ पुमान्, मे. वरटा हंस-योषायां गन्धोल्यां वरटाऽपि च, वि वरटा हंसयोषिति। गन्धोल्यां च, हे

**वरण**—वरणस्तु पुमान् तिक्तशाकप्राकारयोरपि। क्लीवं कन्यादिवरणे वेष्टने स्त्री नदीभिदि, मे वरणस्तिक्तशाकेऽपि प्राकारे वरण मतम्, वि वरणो वरुण-द्रुमे। प्राकारे वरण वृत्याम्, हे

**वरण्ड**—वरण्डोऽप्यन्तरे वेदौ समूहमुखरोगयो, मे वरण्डा सारिका वर्ति-शस्त्रभेदे च योषिति, मे वरण्डोऽप्यन्तरावेदौ सन्दोहमुखरोगयो, वि वरण्डा सारिकावर्तिखड्गधेनुपु कथ्यते, वि वरण्डो वदनामये। अन्तरावेदौ सन्धौ च वरण्डा शारिका क्षुरी। वर्ति, हे वरण्डो वदनामये। समूहे चान्तरावेद्याम्, त्रि

**वरण्डक**—वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके। वर्तुले, मे. वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके। सवर्तुले, वि वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके। सवर्तुले च भित्तौ च, हे

**वर्णिन्**—*वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि*, मे., *वि वर्णी पुनश्चित्रकरे लेखके ब्रह्मचारिणि*, हे.

**वर्तक**—वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयो , मे. वर्तकोऽश्वखुरे खगे, वि., हे. खुरेऽप्यश्वस्य वर्तकः, अ.

**वर्तन**—वर्तनो वामने क्लीवं वृत्तौ स्त्री पेषणाध्वनोः। न पुंसि तूलनालायां तर्कुपिण्डे च जीवने। वर्तिष्णौ त्रिपु, मे. वर्तनी तर्कुपिण्डे स्याद्वर्तनी भलने पथि, वि. वर्तनी पथि। वर्तने तर्कुपिण्डे च, हे. वर्तनस्तर्कुपीठेऽपि स्त्रियां वर्तनवर्त्मनोः, त्रि.

**वर्तरूक**—वर्तरूको नदीभेदे काकनीडे जलावटे, मे., वि. वर्तरूक काकनीडे जलावटे, हे.

**वर्ति**—वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनीदीपदशादीपेषु योषिति, मे. वर्तिर्दीपदशादीपगात्रानुलेपनीषु च। वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः, वि. वर्तिर्गात्रानुलेपन्यां दशाया दीपकस्य च। दीपे भेषजनिर्माणे नयनाञ्जनलेखयो', हे. वर्तिर्दीपदशास्वपि, त्रि. वर्तिर्दीपदशा सूत्र वर्तिर्नेत्राञ्जनोचितम्, अने.

**वर्तिका**—कठिन्यामपि वर्तिका, हा.

**वर्त्मन्**—वर्त्म नेत्रच्छदे मार्गे, मे. वर्त्म नेत्रच्छदेऽध्वनि, हे , अ अक्षिरोम स्मृतं वर्त्म वर्त्म मार्गः प्रकीर्तितः, अने नयनच्छदेऽपि वर्त्म, ह. वर्त्म नेत्रच्छदाध्वनो., वि.

**वर्धन**—वर्धनं वृद्धिर्वर्धिष्णुच्छेदे घटचा तु वर्धनी, मे. वर्धन छेदने वृद्धौ वारिधान्यां तु वर्धनी, वि. वर्धनं छेदने वृद्धौ वर्धनी तु गलन्तिका, हे छेदे च वर्धनम्, त्रि. वर्धनं छेदने प्रोक्त वर्धनं वृद्धिरुच्यते, अने. वर्धनी च घटी ज्ञेया वर्धनी तृणकूर्चिका, अने.

**वर्धमान**—वर्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु, मे., त्रि., वि. वर्धमानो वीरजिने स्वस्तिकैरण्डविष्णुषु। प्रश्नभेदे शरावे च, हे.

**वर्धित**—वर्धितं प्रसृते छिन्ने पूरिते, मे वर्धितं प्रसृते छिन्ने पूरिते चापि वर्धितम्, वि. वर्धितं छिन्नपूर्णयोः। प्रसृते, हे.

**वर्ध्र**—वर्ध्रः सीसवरत्रयोः, हे. वर्ध्र त्रपुवरत्रयो., मे., वि.

**वर्य**—वर्या पतिंवरायां स्त्री वरेण्ये त्रिपु ना स्मरे, मे. वर्यः स्मरवरेण्ययोः, वि.

**वर्ष**—वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु। प्रावृट्काले स्त्रियां भूम्नि, मे. वर्षं संवत्सरे वृष्टौ जम्बूद्वीपे घने विदुः। प्रावृट्काले तु वर्षाः स्युः, वि. वर्षस्तु

**वरुण**—वरुणरतरुभेदेऽप्सु पश्चिमाशापतावपि, मे वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययो , वि वरुणोऽर्केऽप्पतावपि, हे

**वरूथ**—वरूथो रथगुप्तौ स्याद्वरूथ चर्मवेश्मनो., मे, वि वरूथ स्यात्तनुत्राणे रथगोपनवेश्मनो , हे वरूथो निजराष्ट्रक , त्रि

**वर्कर**—वर्कर परिहासे स्याच्छागे युवपशावपि, मे वर्करस्तरुणे मेषे, वि वर्कर पशुनर्मणो , हे

**वर्कराट**—वर्कराट कटाक्षे स्यात्तरुणादित्यरोचिपि। नारीपयोधरोत्सङ्गकान्तदत्तनखक्षते, मे वर्कराट कटाक्षे स्यात्तरुणादित्यरोचिपि। स्त्रीणा पयोधरोत्सङ्गकान्तदत्तनखेऽपि च, वि वर्कराटस्तु तरुणादित्यरोचि कटाक्षयो । स्त्रीणा पयोधरोत्सङ्गकान्तदत्तनखेऽपि च, हे वर्कराट कटाक्षे च स्त्रीणा स्तननखक्षते, त्रि

**वर्चस्**—वर्चो नपुसक रूपे विष्ठायामपि तेजसि। पुसि चन्द्रस्य तनये, मे वर्चो दीप्तौ पुरीषे च वर्चो रूपेऽपि च क्वचित्, वि वर्चस्तु तेजसि। गूथे रूपे, हे तेज पुरीषयोर्वर्च , अ , अने

**वर्जन**—अथ वर्जन हिंसात्यागयो , मे वर्जन त्यागहिसयो , वि., हे

**वर्ण**—वर्णो द्विजादिशुक्लादियशोगुणकुथासु च। स्तुतौ ना न स्त्रिया भेदरूपाक्षरविलेपने, मे वर्ण काञ्चनयज्ञयो । वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे। विलेपने कुथायाञ्च वर्ण स्याद् गुणभेदयो , वि वर्ण स्वर्णे मखे स्तुतौ। रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे। भेदे गीतक्रमे चित्रे यशस्तालविशेषयो । अङ्गरागे च वर्णन्तु कुङ्कुमे, हे वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्ण तु वाक्षरे, अ अक्षराणि स्मृता वर्णा वर्णा श्वेतादयो गुणा । वर्णो नाट्यमुखे गाथा वर्णा ज्ञेया द्विजादय , अने वर्णो गुणाक्षरयश शुक्लादिब्राह्मणादिषु। वर्ण स्तुतौ कुथायाञ्च वर्ण स्याद्रूपभेदयो , शा शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते। गीतक्रमे स्तुतौ वेषे वर्णशब्द प्रचक्षते, ह

**वर्णक**—वर्णकश्चारणे स्त्री तु चन्दने च विलेपने, मे वर्णकश्चारणे स्मृत । विलेपने चन्दने च वर्णक स्यात्, वि अथ वर्णक । विलेपने मलयजे चारणे, हे लेखन्या वर्णिकाऽपि स्यात्, हा

**वर्णविलोडक**—वर्णविलोडक एष श्लोकस्तेने च सन्धिचौरे च, मे वर्णविलोडक श्लोकच्छायाहारिणि कुम्भिले, वि वर्णविलोडक काव्यच्छायाहृत्सन्धिचौरयो , हे

**वर्णाट**—वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने, मे., वि वर्णाटश्चित्रकारिणि। गायने स्त्रीकृताजीवे, हे वर्णाटौ कामिगायनौ, त्रि

कोलमासे, हे. स्याद्गूपरे वनक्षेत्रे वल्लूरं गहनेऽपि च। वल्लूरा त्रिपु संशुष्कमास-शूकरमांसयोः, त्रि.

**वश**—वशा वन्ध्यासुतायोपास्त्रीगवीकरणीपु च। त्रिष्वायत्ते क्लीव-मायत्तत्वे चेच्छाप्रभुत्वयो, मे. वशमायत्ततायां स्याद्वशमिच्छाप्रभुत्वयो.। वशा वन्ध्यासुतायोपास्त्रीगवीकरणीपु च, वि वशो जन्मस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः। वशा नार्यां वन्ध्यगव्या हस्तिन्या दुहितर्यपि, हे वशा स्त्री करिणी च स्यात्, अ. आयत्तताप्रभुत्वेच्छे वश. परवशे त्रिपु, त्रि.

**वशिर**—वशिरः पुमान्। किणिहीहस्तिपिप्पल्यो. क्लीवेऽब्धिलवणे स्मृतम्, मे. वशिरं किणिहीसिन्धुलवणेभकणासु च, वि

**वसति**—वसतिः स्यात्स्त्रियां वासे यामिन्याञ्च निकेतने, मे. वसतिः स्यादवस्थाने यामिन्याञ्च निकेतने, वि वसति. स्यादवस्थाने निशायां सदनेऽपि च, हे. वसती रात्रिवेश्मनो, अ. वासेऽपि वसति, त्रि. वसतिर्जैनाश्रमेऽपि निर्दिष्टा, ह.

**वसन**—वसनं छादने वस्त्रे, मे., हे. वसनं छादनेंऽशुके, वि.

**वसन्तदूत**—वसन्तदूतश्चैत्रे स्यात्पिकपञ्चमरागयोः। वसन्तदूती पाटल्या-मतिमुक्ते च योषिति, मे. वसन्तदूतश्चूते स्यात्पिकपञ्चमरागयो। वसन्तदूती पाटल्या प्रतीताप्यतिमुक्तके, वि. वसन्तदूत आम्रके। पिके पञ्चमरागे वसन्त-दूत्यतिमुक्तके। पाटलायाम्, हे.

**वसु**—वसुर्ना देवभेदाग्निभायोक्त्रवकराजसु। क्लीवे वृद्धयौपधेऽस्वे च रैरत्नमधुरे त्रिपु, मे वसुर्मयूखाग्निधनाधिपेपु योक्त्रे वके स्याद्वसु हाटके च। वृद्धयौपधाख्यानधनेपु रत्ने. वसु स्मृतं स्यान्मधुरेऽन्यवच्च, वि. वसुस्त्वग्नौ देवभेदे नृपे रुचि। योक्त्रे शुष्के वसु स्वादौ रत्ने वृद्धयौपधे धने, हे. देवभेदेऽनले रश्मौ वसू रत्ने धने वसु, अ. योक्त्रे च वसुराख्याने, त्रि. वसु. सूर्यो वसुर्देवो वसुर्वह्नि-र्वसुर्मही। वसु रत्नं वसु द्रव्यं वसवोऽष्टौ ध्रुवादय, अन्ने अग्निधनरश्मिरत्न-त्रिदशविशेपेपु भवति वसुशब्द, ह.

**वसुक**—वसुक रोमके पुंसि शिवमल्ल्यर्कपर्णयो., मे. वसुक. शिवमल्ल्या स्यादर्कपर्णे च रोमके, वि. वसुकं पुनः। रोमके वसुकस्तु स्याच्छिवमल्ल्यर्कपर्णयो·, हे.

**वस्ति**—वस्तिर्द्वयोर्निरुहे नाभ्यधो भूम्नि दशासु च, मे.

**वस्न**—वस्नस्त्ववत्रये पुंसि वेतने स्यान्नपुंसकम्, मे. वस्नं स्याद्वेतने मूल्ये वसनद्रव्ययोरपि, वि. वस्नं वस्त्रे धने मूल्ये वेतने, हे.

समाद्वीपाशवृष्टिपु। वर्षधरेऽपि वर्षास्तु प्रावृषि, हे स्याद्वृष्टौ लोकधात्वशे वत्सरे वर्षमस्त्रियाम्, अ

**वर्षाभू**—वर्षाभू स्त्री च शोथघ्न्या भूलताप्लवयो पुमान्, मे वर्षाभू पुनर्नवाया प्लवे किञ्चुलकेऽपि च, वि वर्षाभू पुनर्नवाया स्याद् गण्डूपदभेकयो, हे पुनर्नवाया वर्षाभू स्त्री ना किञ्चुलुके प्लवे, त्रि

**वर्ष्मन्**—वर्ष्म देहप्रमाणातिसुन्दराकृतिपु स्मृतम्, मे वर्ष्म देहे प्रमाणातिसुन्दराकारयोरपि, वि वर्ष्म पुनस्तनौ। प्रमाणे सुन्दराकारे, हे वर्ष्म देहप्रमाणयो अ वर्ष्म देहप्रमाणे स्याद्वर्ष्म देहश्च कथ्यते, अने

**व(ब)र्हिस्**—वर्हि पुसि हुताशने। न स्त्री कुशे, मे वर्हि कुशहुताशयो, वि बर्हि कुशेऽग्नौ, हे वर्हिर्ना कुशशुष्मणो, त्रि वर्हिर्दर्भो जल वर्हि, अने

**वलय**—वलय कण्ठरोगे ना कङ्कणे पुनपुसकम्, मे वलय कण्ठरोगे स्याद्वलय कङ्कणेऽपि च, वि वलय कङ्कण कण्ठरुक्, हे

**वल्क**—वल्क वल्कलशल्कयो मे वल्क तु वल्कले खण्डे, वि वल्क शकले त्वचि शल्कवत् हे

**वल्गु**—वल्गु स्याच्छगले पुसि सुन्दरे चाभिधेयवत, मे वल्गुश्छागे मनोज्ञेऽपि वल्गु भापितमन्यवत्, वि वल्गुश्छागमनोज्ञयो हे वल्गुश्छागेऽपि, त्रि

**वल्मीक**—वल्मीको रोगभेदे च नाकौ च पुनपुसकम् मे वल्मीको वामलूरे स्यान्मुनिरोगविशेपयो, वि वल्मीको नाकुवाल्मीक्यो रोगभेदे, हे

**वल्लभ**—वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे मे वल्लभो दयितेऽध्यक्षे कुलीनाश्वे च वल्लभ, वि वल्लभोऽध्यक्षे कुलीनाश्वे प्रियेऽपि च, हे त्रिष्वध्यक्षेऽपि वल्लभ, अ

**वल्लर**—वल्लर शाद्वले प्रोक्त निर्जनस्थानकुञ्जयो। वनक्षेत्रे च मञ्जर्यां वल्लरी तु प्रकीर्तिता, वि वल्लर कुञ्जमञ्जर्यो क्षेत्रेऽनम्भसि शाद्वले, हे

**वल्लव**—वल्लव सूपकारे स्याद्भीमसेने च गोदुहि, मे वल्लव सूपकारे स्याद्भीमसेनेऽपि गोदुहि, वि वल्लव स्यात्सूपकारे गोदोग्धरि वृकोदरे, हे वल्लव सूदगोपयो, त्रि वल्लवौ सूपगोपालौ, अने

**वल्ली**—वल्ली स्यादजमोदाया व्रतत्यामपि योपिति, मे वल्ली स्यादजमोदाया पुष्पभेदेऽपि वीरुधि, वि वल्ली स्यादजमोदाया लताया कुसुमान्तरे, हे

**वल्लूर**—वल्लूर स्याद्वनक्षेत्रे गहनोपरयोरपि। वल्लूरा त्रिपु सशुष्कमासशूकरमासयो, मे वल्लूर स्याद्वनक्षेत्रे वाहनोपरयोरपि। वल्लूरमाहु सशुष्कमासशूकरमासयो, वि वल्लूरन्तु वनक्षेत्रे वाहनोपरयोरपि। शुष्कमासे

सङ्घे वाडवो रसमानयो, वि वाडव करणे स्त्रीणा वडवौघे रसातले। वाडवो विप्र अग्नौ च, हे अश्वौघे वाडव न स्त्री पाताले ना द्विजौर्वयो, त्रि वाडवो वह्निविप्रयो, अने

**वाढ**—वाढ दृढप्रतिज्ञयो, मे वाढ दृढे प्रतिज्ञायाम्, वि वाढ भृशप्रतिज्ञयो, हे भृशप्रतिज्ञयोर्बाढम्, अ अवश्यभृशयोर्बाढम्, ह

**वाण**—वाण स्याद् गोस्तने दैत्यभेदे केवलकाण्डयो। वाणा तु वाणमूले स्त्री नीलभिण्टचा पुनर्द्वयो, मे वाण स्यात्केवले काण्डे काण्डावयवदैत्ययो। वाणा भिण्टचा मता धीरै, वि वाणो वृक्षविशेषे स्याच्छरस्यावयवे शरे। वलिपुत्रेऽपि, हे वाणो वलिसुते शरे, अ वाणा भिण्टचा शरे वाणे, त्रि

**वाणि(णी)**—वाणी तु योषिति। व्यूतावपि सरस्वत्याम्, मे वाणि स्याद्व्यूतिभारत्योर्वाणिर्मूल्ये वलाहके, वि वाणिरम्बुदे। व्यूतौ मूल्ये सरस्वत्याम्, हे वाणी व्यूतिश्च भारती, त्रि

**वाणिनी**—वाणिनी नर्तकीमत्ताविदग्धवनितासु च, मे, वि स्याद्वाणिनी तु नर्तक्या छेकमत्तस्त्रियोरपि, हे मदमत्ताविदग्धस्त्रीनर्तकीषु च वाणिनी, हा वाणिन्यौ नर्तकीदूत्यौ, अ स्त्री विदग्धा च वाणिनी, त्रि

**वातकेलि**—वातकेलि कलालापे पिङ्गदन्तक्षते पुमान्, मे वातकेलि कलालापे पिङ्गाना दन्तलेखने, वि हे

**वातखुडा**—अथ वातखुडा वात्याराजशोणितयोरपि। पिच्छिलस्फोटिकायाञ्च वामायामपि योषिति, मे भवेद्वातखुडा वात्यावामयोर्वातशोणिते। पिच्छिलस्फोटिकायाञ्च, वि वातखुडा पुन। वात्याया पिच्छिलस्फोटे वामाया वातशोणिते, हे

**वातपुत्र**—वातपुत्रो महाधूर्ते भीमसेने हनूमति, मे वातपुत्रो हनूमति। महाधूर्ते च भीमे च, वि

**वातरायण**—वातरायण उन्मत्ते निष्प्रयोजनपूरुषे। काण्डे च करपत्रे च कूटे च शरसत्रमे, मे, वि वातरायण ऋच्चे सायके शरसत्रमे। निष्प्रयोजननरे चापि, हे

**वातरूप**—वातरूपस्तु वातूलोत्कोचयो शक्रकार्मुके, मे, वि वातरूप शक्रशरासने। वातूलोत्कोचयोश्चापि, हे

**वातिग**—वातिग पुसि भण्टाकया धातुवादिनि चायवत्, मे वातिग वर्धिनो भण्डे धातुवादिनि वातिग, वि

**वातूल**—वातूल पुसि वात्याया वात्ववन्मारुतामहे, मे वातूलो वात-

**वस्वौकसारा**—वस्वौकसारेन्द्रपुरे कुवेरनलिनीपुरोः, मे. वस्वौस्कसारा श्रीदस्य शक्रस्य नलिनीपुरोः, वि. वस्वौकसारा त्विन्द्रस्य धनदस्य च। नलिनीपुर्योः, हे.

**वह**—वहः स्याद्वृषभस्कन्धे वाहे गन्धवहेऽपि च, मे. वहः स्याद्वृषभ-स्कन्धदेशे गन्धवहेऽपि च, वि. वहो वृषस्कन्धदेशे वायौ, हे. वृषस्कन्धेऽनिले वहः, त्रि.

**वहति**—वहतिर्गौव। सचिवे पुंसि, मे. वहतिः सचिवे गवि, वि.

**वहतु**—वहतुः पथिके वृषभे पुमान्, मे. वहतु. पांथके वृषे, वि.

**वह्नि**—वह्निर्वैश्यानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्, मे.

**वा**—वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे। समुच्चये च विस्रम्भे नानार्थातीतयोरपि, मे. वा समुच्चय एवार्थे उपमानविकल्पयोः, हे. वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये, वि v वा

**वागर**—वागरस्तु गतातङ्के मुमुक्षौ वाडवेऽष्टके। विशारदेऽपि शाणेऽपि निर्णये वारकेऽपि च, मे. वागरो वारके शाणे निर्णरे वाडवे वृके। विशारदे मुमुक्षौ च गतातङ्के च वागर, वि वागरो वारके शाणे निर्णरे वाडवे वृके। मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च, हे

**वाग्मिन्**—वाग्मी पटौ सुराचार्ये, मे वाग्मी वाचस्पतौ पटौ, वि. वाग्मी पटुवृहस्पत्यो, हे

**वाच्(चा)**—वाग्वाचे भारत्या वचने स्त्रियौ, मे वाग्वचने सरस्वत्यां भाषा गीर्भारती यथा, वि वाग्भारत्या वचस्यपि, हे

**वाच्य**—वाच्यन्तु कुत्सिते हीने वचनार्हे च वाच्यवत्, मे

**वाज**—वाजो निस्वनपक्षयो। वेगे पुमानथ क्लीवं घृतयज्ञान्नवारिषु, मे. वाजं घृतेऽपि यज्ञान्ने वाजो निस्वनपक्षयोः। वाजं जले मुनौ वाजः, वि. वाजं सर्पिषि वारिणि। यज्ञान्ने वाजस्तु पक्षे मुनौ निस्वनवेगयो', हे. वाजमन्नं गरुद्वाजो वाजं पीयूषमिष्यते, अने.

**वाजिका**—वाजिका पक्षिजाति. स्याद्वाजिका नीलमक्षिका, अने.

**वाजिन्**—वाजी वाणाश्वपक्षिषु, मे., वि. वाजी वाणे हये खगे, हे. वाजिनोऽश्वेषुपक्षिण., अ.

**वाट**—वाटो मार्गे वृतिस्थाने स्यात्कुटीवास्तुनोः स्त्रियाम्, मे. वाटो वृतौ च मार्गेऽपि वाटी तु गृहनिष्कुटे, वि. वाटः पथि वृतौ वाटं वरण्डेऽङ्गान्नभेदयोः। वाटी वास्तौ गृहोद्याने, हे. पथि वास्तुनि वाटं स्यात्, त्रि.

**वाडव**—वाडवं करणे स्त्रीणां घोटकौघे नपुंसकम्। पाताले न स्त्रिया पुंसि ब्राह्मणे वडवानले, मे. वाडवं करणे स्त्रीणामुर्वे विप्रेऽपि वाडवः। वाडवं वडवा-

वृन्दयो । कुब्जवृक्षे हरे वारो वार मद्यस्य भाजने, वि वार सूर्यादिवासरे। महेश्वरावसरयोर्वृन्दे कुब्जाख्यपादपे, हे निवहावसरौ वारौ, अ कुब्जवृक्षे हरे वारम्, त्रि

**वारक**—वारकोऽश्वगतौ पुंसि वाच्यवत् स्यान्निषेधके, मे वारकोऽश्वगतावश्वविशेषे च निषेधके, वि

**वारकिन्**—वारकी शत्रुचित्राश्वपर्णीजीवपयोधिषु मे

**वारकीर**—वारकीरस्तु पुंसि स्याद्वारग्राहिणि वाडवे। यूकाया बाल वन्धिन्या नीराजितहयेऽपि च, मे

**वारण**—वारण प्रतिषेधे स्याद्वारणस्तु मतङ्गजे मे वि वारण स्यान्मतङ्गजे। वारण तु प्रतिषेधे, हे

**वारला**—v वरला

**वारवाण**—वारवाणस्तु कूर्पासे कवचेऽपि च हे कवचेऽपि वारवाण ह

**वारासन**—वारासन वा सदने शलापद्वारपालयो, वि

**वाराही**—वाराही मातृभेदे स्याद्विष्वक्सेनप्रियौषधौ मे वाराही मातृभेदे स्याद्गृष्टिनामौषधेऽपि च, वि वाराही गृष्टिभेषजे। मातर्यपि हे

**वारि**—वारिर्वाग्गजवन्धन्यो स्त्री क्लीवेऽम्बुनि बालके मे वारि स्मृता सरस्वत्या वारि ह्रीवेरनीरयो । वारी घटीभवन्धन्यो वि वारि ह्रीवेरनीरयो । वारिर्घटचा सरस्वत्या गजवन्धनभुव्यपि ह करिणा वन्धनस्थान वारि वारि जल मतम अने v वार

**वारुणी**—वारुणी गण्डदूर्वाया प्रतीचीसुरयोरपि मे वि वारुणी पश्चिमा सुरा। गण्डदूर्वा, हे सुरा प्रत्यक् च वारुणी, अ वारुणी मदिरा ज्ञेया पश्चिमा दिक् च वारुणी, अन

**वारुण्ड**—वारुण्डी द्वारपिण्डचा स्त्री गणिस्थराजके पुमान्। न स्त्रिया सेकपात्रे च मलेऽक्ष्ण श्रवणस्य च, मे वारुण्ड सेकपात्रे स्यान्मले दृक्कर्णयोरपि। गणिस्थराजे वारुण्डी द्वारपिण्डचामुदीरिता, वि वारुण्डस्तु कर्णदृङमले सेकभाजने। गणिस्थराजे, हे नौसेचनेऽपि वारुण्ड, हा

**वारूढ**—वारूढ इत्ययम्। वस्त्राञ्चले कपाटेऽग्नौ पञ्जरे शम्बलेऽपि च मे वारूढ सम्वलेऽपि स्याद्वस्त्राञ्चलकपाटयो । पावके च, वि वारूढ शम्वले वस्त्राञ्चलेऽग्नौ पञ्जरेऽररौ, हे

**वार्त**—वार्ता तु वर्तने वातिङ्गणे कृष्याद्युदन्तयो । नि सारारोग्ययो क्लीव वृत्तिमन्नीरुजोस्त्रिषु, मे वार्ता वातिङ्गणे वृत्तौ वार्ता कृष्याद्युदन्तयो । वृत्ति-

सङ्घाते वातले मारुतासहे, वि वातूलो वातले वातसमूहे मारुताहते, हे वातूल पुंसि वात्यायामपि वातासहे त्रिषु, अ

**वादर**—v वार्दर

**वान**—वान शुष्कफले शुष्के स्यूतिकर्मकटे गतौ, मे वान शुष्कफले शुष्के कटे सीवनकर्मणि। जलसस्रववातोर्मिसुरङ्गागतिसौरभे, वि वान शुष्कफले शुष्के सीवने गमने कटे। जलसप्लुतवातोर्मिसुरङ्गासौरभेषु च, हे अथ फले शुष्के वान स्यूते कटे गतौ, त्रि

**वानप्रस्थ**—वानप्रस्थो मधूकेऽपि स्यात्तृतीयाश्रमे पुमान्, मे वानप्रस्थो मधूके स्यात्किंशुके चाश्रमान्तरे, वि वानप्रस्थो मधूकद्रौ किंशुकाश्रमभेदयो, हे वानप्रस्थो मधकेऽपि स्यात्तृतीयेऽपि चाश्रमे त्रि

**वानीर**—वानीरश्चित्रकेऽपि च, हा

**वापित**—वापित जीवाकृतमुण्डितयोस्त्रिषु मे वापित मुण्डित मतम्। जीवाकृते, वि वापित जीवाकृते मुण्डिते च, हे

**वाम**—वाम धने हरे पुंसि कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्या स्त्रियामथ। वामी शृगालीवडवारासभीकरभीषु च मे वाम सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। पयोधरे हरे काम विद्याद्वामामपि स्त्रियाम्। वामी शृगालीवडवारासभीकरभीषु च, वि वाम कामे सव्ये पयोधरे। उमानाथे प्रतिकूले चारौ वामा तु योषिति। वामी शृगाल्या करभीरासभीवडवासु च, हे वामौ वल्गुप्रतीपौ द्वौ, अ वाम प्रतिकूलेऽपि प्रोक्त, ह

**वामन**—वामनोऽप्यतिखर्वे च त्रिषु पुंसि तु दिग्गजे। हरावङ्कोटवृक्षे, मे वामनोऽङ्कोठवैकुण्ठखर्वदक्षिणदिग्गजे, वि वामनो दिग्गजेऽच्युते। खर्वे काण्डे, हे वामनौ विष्णुदिग्गजौ। खर्वश्च, त्रि

**वामिल**—वामिलो दाम्भिके वामे त्रिषु, मे वामिलो दाम्भिके वामे, वि, हे

**वायस**—वायसोऽगुरुवृक्षे च श्रीवासध्वाङ्क्षयो पुमान्। काकोदुम्बरिकायाञ्च काकमाच्याञ्च वायसी, मे वायसो नाडिजङ्घे स्याच्छ्रीवासे चागुरुद्रुमे। काकोदुम्बरिकायाञ्च काकमाच्या च वायसी, वि वायसस्त्वगुरौ द्विके। श्रीवासे वायसी काकोदुम्बरी काकमाच्यपि, हे

**वायुफल**—अथ वायुफल शक्रकार्मुके करकेऽपि च, मे भवेद्वायुफल शक्रकार्मुके करकेऽपि च, वि वायुफलन्तु जलदोपले शक्रशरासने, हे

**वार**—वार मूर्यादिवासरे। द्वारे हरे कुञ्जवृक्षे वृन्दावसर्यो क्षणे। वारी स्याद्व्रजबन्धन्या कलश्यामपि योषिति, मे वार सूर्यादिदिवसे द्वारेऽवसर-

**वासित**—*वासिता करिणीनार्योर्वासितं भाविते रुते*, मे. *वासिता करिणी-नार्योर्वासितं सुरभीकृते।* ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते, वि. वासितम्। वस्त्रच्छन्ने ज्ञानमात्रे भाविते॒ऽप्यथ वासिता। स्त्रीकरेण्वो', हे. वासिता स्त्री-करेण्वोश्च, अ.

**वासुरा**—वासुरा वासितायां स्याद्वासतेयभुवि स्त्रियाम्, मे. वासुरा वासितायां स्याद्वासतेय्यां मता भुवि, वि. वासुरा वासितारात्र्योर्भुवि, हे वासुरा चालनी प्रोक्ता वासुरा वलभी मता, अने.

**वास्तु**—वास्तु स्याद् गृहभूपुर्योर्गृहे सीमतुरङ्गयो., हे.

**वास्र**—वास्रोऽपि दिवसे वास्रं मन्दिरे च चतुष्पथे, वि. वास्रो ना दिवसे क्लीवं मन्दिरे च चतुष्पथे, मे.

**वाह**—वाहो भुजे पुमान्मानभेदाश्ववृषवायुषु, मे वाहो भुजायां वाहस्तु मानभेदे वृषे हये, वि. वाहोऽश्वमानयोः। वृषे वाहा तु वाहौ स्यात्, हे. वाहो युग्मं घनो वाहः प्रवाहो वाह उच्यते। वाहो मायाविशेषश्च वाहो वाहुरिति स्मृतः, अने.

**वाहस**—वाहसो जलनिर्याणे शयालौ सुनिषण्णके, मे वाहसो जलनि-र्याणेऽजगरे सुनिषण्णके, वि. वाहसोऽजगरे वारिनिर्याणसुनिषण्णयो, हे.

**वाहिनी**—वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयो', वि, मे. वाहिनी तु सेनातद्भेदसिन्धुषु, हे. स्रवन्त्यामपि वाहिनी, अ. सेना नदी च वाहिन्यौ, त्रि.

**वि**—वि निग्रहे नियोगे च तथैव पदपूरणे। निश्चये सहने हेतावव्याप्ति-विनियोगयोः। ईषदर्थे परिभवे शुद्धावालम्बनेऽपि च। विज्ञाने, मे. वि श्रेष्ठा-तीतनानार्थे वि. स्यात्पक्षिप्वनव्ययम्, वि. वि श्रेष्ठेऽतीते नानार्थे, हे.

**विकच**—विकच. क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत्, मे. विकचः क्षपणे केतुग्रहे च स्फुटितेऽन्यवत्, वि. केतुग्रहेऽपि विकचः, त्रि.

**विकट**—विकटा वज्रवाराह्या त्रिपूरुविकरालयोः, मे. विकटः सुन्दरे प्रोक्तो विशालविकरालयोः, वि. विकट. पृथुले पृथुरम्ययोः, हे. विकटं विकृतं वृहत्, त्रि. विकटं श्रेष्ठेऽपि निर्दिष्टम्, ह.

**विकल्प**—विकल्पः पुंसि भ्रान्तौ कल्पने, मे.

**विकार**—विकारो विकृतौ रुजि, मे. विकारो विकृतौ रोगे, वि, हे. विकारो विकृते रोगे, त्रि.

**विकाश**—विकाशः पुंसि विजने प्रकाशे, मे. विकाशो रहसि व्यक्ते, हे. v. वीकाश.

मन्नीरुजोर्वार्ता वार्तमारोग्यफल्गुनो , वि वार्ता वार्ताक्युदन्तयो । कृप्यादौ वर्तने वार्तं त्वारोग्यारोगफल्गुपु। वृत्तिशालिनि, हे वार्ता वृत्तौ जनश्रुतौ, अ वार्तं कुशलनीरुजो , नि

**वार्दर, वार्दुर**—वार्दर कृष्णलावीजदक्षिणावर्तशङ्खयो । नीरे च काक-चिञ्चाया भारत्या च नपुसकम्, मे वार्दुर दक्षिणावर्ते शङ्खे कृमिजनीरयो । काकचिञ्च्याश्च वीजेऽपि वाचि वार्दुरमिष्यते, वि वार्दर कृमिजे जले। काक-चिञ्च्याश्च वीजे स्याद्दक्षिणावर्तशङ्खयो , हे

**वार्धक**—वार्धक वृद्धसङ्घाते वृद्धस्य भावकर्मणो , मे वार्धक वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि, वि वार्धकन्तु वृद्धत्वे वृद्धकर्मणि । वृद्धाना समवाये च, हे

**वार्षिक**—वार्षिक त्रायमाणाया क्लीव वर्षाभवे त्रिपु, मे वार्षिक त्रायमाणे स्याद्वर्षाकालभवेऽन्यवत्, वि वार्षिक त्रायमाणाया वर्षाकालभवे, हे

**वालक**—वालकोऽस्त्री पारिहार्ये त्रिपु स्यादङ्गुरीयके, मे v वालक

**वालुक**—वालुका सिकतासु स्याद्वालुक त्वेणवालुके, मे , वि वालुका तु सिकतासु वालुक हरिवालुके, हे

**वाल्मीक**—वाल्मीकस्तु ममीक स्याद्वाल्मीको वाग्विशारद , अने

**वाल्हिक, वाल्हीक**—अथ वाह्लिक वाह्लीक धीरहिङ्गुनो । द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे मे वाह्लिका देशभेदेऽश्वे वाह्लिक धीरहिङ्गुनो । अनयोरपि वाह्लीक वि अथ वाल्हिक । देशभेदेऽश्वभेदे च वाह्लिक हिङ्गु-कुङ्कुमम्। वाल्हीकवत् हे वाह्लीक रामठेऽपि च, अ वाह्लिक हिङ्गुराम्यान वाह्लिक कुङ्कुम मतम्। वाह्लिक स्याज्जनपदो वाह्लिकाश्वाश्वजातय , अने

**वाष्प**—वाष्प ऊष्मणि लाते, मे वाष्पो नेत्रजलोष्मणो , वि वाष्प ऊष्माक्षि-जलयो , हे वाष्पमूष्माश्रु, अ वाष्प ऊष्मा तथाश्रु च, अने

**वास**—वासो गेहेऽप्यवस्थाने वासा स्यादटरूपके, वि वासो वेश्मन्यवस्थाने वासा स्यादाटरूपके, हे

**वासन**—अथ वासन धूपनेऽपि च। वासिधान्याञ्च वस्त्रे च प्रयाणाशानयो स्त्रियाम्, मे वासन वमने वीरासने ज्ञाने च धूपने, वि

**वासन्त**—वासन्ती माधवीयूथ्यांष्टे नावश्ते त्रिपु, मे वासन्ती माधवी यूथ्यो पाटलाया अमेलके। वासन्ती कोकिलेऽपि स्याद्वासन्ती विहिते विटे, वि वासन्त परपुष्टे स्यात्करभे विहिते विटे। वासन्ती मागधीयूथीपाटलासु हे

**वासर**—वासरस्तु पुमान् नागप्रभेददिनयारपि, मे वासरो दिवसे नाग-प्रभेदेऽपि च वासर , वि वासरो नागभेदेऽह्नि, हे

**विजात**—विजाताख्या प्रसूताया जनिते विकृतेऽपि च, वि विजातो विकृते जाते विजाता तु प्रसूतिका, हे

**विजृम्भित**—विजृम्भितन्तु चेष्टाया क्लीव त्रिषु विकस्वरे, मे अभ्युद्यते विकसिते चेष्टिते च विजृम्भितम्, त्रि

**विज्ञान**—विज्ञान ज्ञानकर्मणो , मे विज्ञान कर्मणि ज्ञाने, वि विज्ञान कार्मणे ज्ञाने, हे

**विट**—विटोऽद्रौ लवणे पिङ्गे मूषिके खदिरेऽपि च, मे , वि , त्रि , हा विटस्तु मूषके । खदिरे लवणे पिङ्गेऽद्रौ च, हे

**विटप**—विटपो न स्त्रिया स्तम्बशाखाविस्तारपल्लवे । विटाधिपे ना, मे विटप पल्लवे पिङ्गे विस्तारे स्तम्बशाखयो , वि विटप पल्लवे स्तम्बे विस्तारे पिङ्गशाखयो , हे स्तम्बेऽपि विटपोऽस्त्रियाम्, अ विटप पल्लवे स्तम्बे पिङ्गे, त्रि

**विडङ्ग**—विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुनपुसकम् मे विडङ्ग कृमिहे ख्यात विडङ्गो नागरेऽन्यवत् वि विडङ्गस्तु स्यादभिज्ञकृमिघ्नयो , हे

**विडाल**—विडालो नेत्रपिण्डे स्याद्वृषदशकके पुमान्, मे विडालो नेत्रपिण्डे स्याद्विडालोऽपि खगान्तरे । विडाली पूतनाभेदे लताघूकेऽपि शस्यते, वि

**वितस, वीतस**—वीतसो बन्धनोपाये मृगाणा पक्षिणामपि । तेषामपि च विश्वासहेतो प्रावरणेऽपि च, मे , वि

**वितण्डा**—वितण्डा वादभेदे स्यात्कच्चीशाके शिलाह्वये । करवीर्यामपि स्त्री स्यात्, मे वितण्डा वादभेदे स्यात्कच्चीशाके शिलाह्वये । वितण्डा करवीर्यञ्च, वि वितण्डा कच्चीशाके शिलाह्वये । करवीर्या वादभेदे, हे वितण्डा शाकभिद्यपि, त्रि वितण्डा करवीर्यञ्च दर्वीवादप्रभेदयो , हा

**वितत**—v तत

**वितर्क**—वितर्कस्तु पुमानूहे सशये च निगद्यते, मे वितर्क सशयोहयो , वि , हे

**वितान**—वितानो यज्ञ उल्लोचे विस्तारे पुनपुसकम् । क्लीव वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयो , मे वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि । वृत्तभेदावसरयोर्वितान तुच्छमन्दयो , वि वितान कदके यज्ञे विस्तारे क्रतुकर्मणि । तुच्छे मन्दे वृत्तभेदे शून्यावसरयोरपि, हे क्रतुविस्तारयोरस्त्री वितान त्रिषु तुच्छके । मन्दे, अ रिक्ते वितानमुल्लोचे, त्रि प्रोक्त वितानमुल्लोचे वितान शून्य उच्यते, अने

**वितुन्न**—वितुन्न सुनिषण्णे च शैवाले च नपुसकम्, मे

**विकृत**—विकृत त्रिषु बीभत्से रोगिते सस्कृतेऽपि च, मे विकृत सस्कृतेऽपि स्याद्बीभत्से रोगितेऽपि च, वि विकृतो रोगिसस्कृत । बीभत्सश्च, हे विकृतौ रोगिबीभत्सौ, त्रि

**विकृति**—विकृतिर्डिम्बरोगयो , वि विकृती रुजि । डिम्बे विकारे मद्यादौ, हे

**विकेशी**—विकेशी पटुवर्तौ स्याद्विकेशी निष्कचस्त्रियाम्, वि

**विक्रम**—विक्रमस्तु पुमान् क्रान्तिमात्रे स्याच्छक्तिसम्पदि, मे विक्रम क्रान्तिमात्रे स्याद्विक्रम शक्तिसम्पदि, वि विक्रम शक्तिसम्पदि । क्रान्तौ च, हे क्रान्तौ च विक्रम , अ

**विक्लिन्न**—विक्लिन्नो जरसा जीर्णे शीर्णे चार्द्रे च वाच्यवत्, मे विक्लिन्नो जरया जीर्णे शीर्णे चार्द्रे च वाच्यवत् वि विक्लिन्ना जीर्णशीर्णार्द्रा , हे

**विगत**—विगतो निष्प्रभे वीते, हे विगतौ वीतनिष्प्रभौ, त्रि

**विगूढ**—विगूढो गर्हितेऽपि च । गुप्तेऽपि त्रिषु मे विगूढो गर्ह्यगुप्तयो , हे विगूढो गर्हिते गुप्ते, वि

**विग्रह**—विग्रह कायविस्तारे विभागे ना रणेऽस्त्रियाम्, मे विग्रह समरे काये विस्तारप्रविभागयो , वि विग्रहो युधि विस्तारे प्रतिभागशरीरयो , हे अथ विग्रह । सग्रामे प्रविभागे च देहविस्तारयोरपि त्रि विग्रह समरे भेदे विग्रहो वपुरुच्यते, अन्ये व्यासेऽपि विग्रह स्यात्, ह

**विघ्नकारिन्**—विघ्नकारी स्मृतो घोरदर्शनेऽपि विघातिनि, मे , वि विघ्नकारी विघातस्य कारके घोरदर्शने, हे

**विचकिल**—भवेद्विचकिलो मल्लीप्रभेदे मदने पुमान्, मे स्मृतो विचिकिलो मल्लीप्रभेदे मदनेऽपि च, वि विचिकिलो दमनके मल्ल्याम्, हे

**विच्छित्ति**—विच्छित्तिरङ्गरागे विच्छेदे हावभेदे स्त्री, मे विच्छित्तिरङ्गरागे स्याद्धावविच्छेदयोरपि, वि विच्छित्ति स्यादङ्गरागे हावविच्छेदयोरपि, हे छेदे विनाशे विच्छित्ति , त्रि

**विच्छिन्न**—विच्छिन्नश्च समालब्धे विभक्तेऽप्यभिधेयवत्, मे विच्छिन्नश्च समालब्धे विपन्ने कुटिलेऽन्यवत्, वि विच्छिन्न कुटिले स्यात्तु समालब्धविभक्तयो , हे समालब्धे विभक्ते च विच्छिन्न वाच्यलिङ्गकम्, त्रि

**विजय**—विजय स्याज्जये पार्थे स्त्रियां तिथ्यन्तरे स्मृता । उमासख्याम् मे विजयस्तु जये पार्थे गौर्यां तु विजया तिथौ, वि विजया जये । पार्थे विमाने विजयोमातस्सख्योस्तिथावपि, हे

**विजात**—विजाताख्या प्रसूतायां जनिते विकृतेऽपि च, वि. विजातो विकृते जाते विजाता तु प्रसूलिका, हे.

**विजृम्भित**—विजृम्भितन्तु चेष्टायां क्लीवं त्रिपु विकस्वरे, मे. अभ्युद्यते विकसिते चेष्टिते च विजृम्भितम्, त्रि.

**विज्ञान**—विज्ञानं ज्ञानकर्मणोः, मे. विज्ञानं कर्मणि ज्ञाने, वि. विज्ञानं कार्मणे ज्ञाने, हे

**विट**—विटोऽद्रौ लवणे पिङ्गे मूषिके खदिरेऽपि च, मे., वि., त्रि., हा. विटस्तु मूषके। खदिरे लवणे पिङ्गेऽद्रौ च, हे

**विटप**—विटपो न स्त्रिया स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना, मे. विटपः पल्लवे पिङ्गे विस्तारे स्तम्बशाखयोः, वि विटपः पल्लवे स्तम्बे विस्तारे पिङ्गशाखयोः, हे. स्तम्बेऽपि विटपोऽस्त्रियाम्, अ. विटपः पल्लवे स्तम्बे पिङ्गे, त्रि.

**विडङ्ग**—विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुनपुसकम्, मे विडङ्गं कृमिहे स्यातं विडङ्गो नागरेऽन्यवत्, वि विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः, हे.

**विडाल**—विडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्, मे. विडालो नेत्रपिण्डे स्याद्विडालोऽपि खगान्तरे। विडाली पूतनाभेदे लताघूकेऽपि शस्यते, वि.

**वितंस, वीतंस**—वीतंसो बन्धनोपाये मृगाणा पक्षिणामपि। तेषामपि च विश्वासहेतौ. प्रावरणेऽपि च, मे , वि.

**वितण्डा**—वितण्डा वादभेदे स्यात्कञ्चीशाके शिलाह्वये। करवीर्यामपि स्त्री स्यात्, मे. वितण्डा वादभेदे स्यात्कञ्चीशाके शिलाह्वये। वितण्डा करवीर्याञ्च, वि. वितण्डा कच्चीशाके शिलाह्वये। करवीर्या वादभेदे, हे. वितण्डा शाकभिद्यपि, त्रि. वितण्डा करवीर्यञ्च दर्वीवादप्रभेदयोः, हा.

**वितत**—v. तत

**वितर्क**—वितर्कस्तु पुमानूहे सशये च निगद्यते, मे. वितर्कः संशयोह्योः, वि., हे.

**वितान**—वितानो यज्ञ उल्लोचे विस्तारे पुंनपुसकम्। क्लीवं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयो, मे. वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि। वृत्तभेदावसरयोर्वितानं तुच्छमन्दयो., वि. वितानं कदके यज्ञे विस्तारे क्रतुकर्मणि। तुत्थे मन्दे वृत्तभेदे शून्यावसरयोरपि, हे. क्रतुविस्तारयोरस्त्री वितानं त्रिपु तुच्छके। मन्दे, अ. रिक्ते वितानमुल्लोचे, त्रि प्रोक्तं वितानमुल्लोचे वितानः शून्य उच्यते, अने.

**वितुन्न**—वितुन्नं मुनिपण्णे च शैवाले च नपुसकम्, मे.

**वितुन्नक**—वितुन्नकस्तु धान्याके झाटामलमयूरके, मे वितुनकस्तु धान्याके तथा झाटामलौषधौ, वि वितुनकस्तु धान्यके । झाटामलौषधौ चापि, हे

**वित्त**—वित्त क्लीव धने वाच्यलिङ्ग ख्याते विचारिते, मे वित्त स्याते धने लब्धे वित्त ज्ञाते विचारिते, वि वित्त विचारिते स्याते धने, हे वित्त ख्याते धनेऽपि च, नि

**वित्ति**—वित्तिर्विचारे च लाभसम्भवयो स्त्रियाम् मे वित्तिर्ज्ञाने विचारे च लाभसम्भवयोरपि, वि वित्तिस्तु सम्भवे । ज्ञाने लाभे विचारे च, हे

**विदथ**—विदथो योगिकृतिनो , मे , वि विदथो योगिनि प्राज्ञे, हे

**विदा**—विदा ज्ञाने च निर्दिष्टा मनीषायाञ्च योषिति, मे विदा ज्ञाने च बुद्धौ च, वि विदा ज्ञानधियो , हे

**विदार**—विदारो जलोच्छ्वासाऽजिदारणे । विदारी शालपर्ण्या च रोगभेदेक्षुगन्धयो , मे विदारो दारणे रणे । विदारी शालपर्ण्या च रोगभेदेक्षुगन्धयो वि विदारो युधि दारणे । विदारी रोगभेदे स्यात्सालपर्णीक्षुगन्धयो , हे

**विदारण**—विदारण विडम्बे च भेदे क्लीव रणे द्वयो , मे विदारण रणे भेदे विडम्बे च विदारणम् वि विदारण भेदने स्यात्सम्पराये विडम्बने, हे

**विदित**—विदित बुधितार्थितयो मे विदित विदितार्थयो , वि विदित बुधिते श्रुते, हे

**विदुर**—विदुरो नागरे धीरे कौरवाणा च मन्त्रिणि मे, वि विदुरो नागरे धीरे धृतराष्ट्रानुजेऽपि च, ह

**विदुल**—विदुलस्तु पुमानम्लवेतसे वेतसेऽपि च, मे

**विदूषक**—विदूषकश्चाटुबटौ परनिन्दाकरेऽपि च, मे , वि विदूषकोऽन्य निन्दके । क्रीडनीयकपात्रे च, हे

**विदेह**—विदेह कायशून्ये स्याज्जनकान्वयभूमिपे, मे विदेहो देहशून्ये स्याद्विदेहो मिथिले स्मृत , वि विदेहस्तु निर्देहे मैथिलेऽपि च, हे

**विद्ध**—विद्ध स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु, मे विद्ध स्याद्वेधिते क्षिप्ते सादृश्येऽपि निगद्यते, वि विद्ध सदृग्वेधितयो क्षिप्ते, हे

**विद्युत्**—विद्युत्तडिति सन्ध्याया स्त्रिया त्रिषु तु निष्प्रभे, मे विद्युत्सौदामिनीसन्ध्ये निष्प्रभे त्वभिधेयवत, वि

**विद्रव**—विद्रवो विद्रुतौ धियि, मे विद्रवस्तु पलायने । बुद्धौ च, वि विद्रवो धी पलायनम्, हे

**विद्रुम**—विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्, मे विद्रुमो रत्नवृक्षेऽपि प्रवाले पल्लवेऽपि च वि विद्रुमो वृक्षे प्रवाले, हे

**विद्वस्**—विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्, मे., वि. विद्वानात्मविदोः प्राज्ञे, हे. त्रिषु। विद्वान् विदंश्च, अ.

**विधा**—विधा गजाशने ऋद्धौ प्रकारे वेतने विधौ, मे. विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ, वि विधर्द्धिमूल्ययो। प्रकारेभान्नविधिषु, हे. विधा विधौ प्रकारे च, अ. प्रकारे वेधने विधा, त्रि.

**विधातृ**—विधाता तु वेधसि। स्मरे ना, मे. विधाता द्रुहिणे कामे, हे विधाता वेधसि स्मरे, वि.

**विधान**—विधानं हस्तिकवले प्रेरणेऽभ्यर्चने धने। वेतनोपायविधिषु प्रकारे वैरकर्मणि, हे.

**विधि**—विधिर्ना नियतौ काले विधाने परमेष्ठिनि, मे. विधिर्ब्रह्मविधानयो.। विधिर्वाक्ये च दैवे च प्रकारे कालकल्पयोः, हे. विधिर्विधाने दैवेऽपि, अ विधि-र्ब्रह्मणि काले च, त्रि. विधिर्विधाने नियतौ विधिः काले विधातरि, वि. काले कल्पेऽपि विधि., ह.

**विधु**—विधुर्ना कर्पूरेन्दुविष्णुषु, मे. विधुः शशाङ्के कर्पूरे हृषीकेशेऽपि राक्षसे, वि. विधुश्चन्द्रेऽच्युते, हे.

**विधुर**—विधुरं स्यात्परिश्लेषे न द्वयोर्विकले त्रिषु। रसालाया स्त्री, मे. विधुरं स्यात्प्रविश्लेषे विधुरो विकलेऽन्यवत्। विधुरापि रसालायाम्, वि विधुरं स्यात्प्रविश्लेषे विकले विधुरा पुनः। रसालायाम्, हे. वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु, त्रि. प्रत्यवायेऽप्यविश्लेषे विधुरं स्मर्यते बुधैः, ह.

**विधूत**—विधूतं कम्पिते त्यक्ते, हे.

**विनत**—विनता ताक्ष्यंजनन्या पिटकाभिदि। विनत. प्रणते भुग्ने शिक्षिते चाभिधेयवत्, मे. विनता पिटकाभेदे विनता ताक्ष्यंमातरि। विनत. प्रणते भुग्ने शिक्षितेऽप्यभिधेयवत्, वि. विनतः प्रणते भुग्ने विनता पिटकाभिदि। सुपर्णायाम्, हे.

**विनय**—विनया तु बलाया स्त्री शिक्षाया प्रणतौ पुमान्, मे. विनयं प्रणतौ प्राहुः शिक्षाया विनया मता, वि. विनयः शिक्षाप्रणत्योर्विनया तु बलौषधौ, हे.

**विनायक**—विनायकस्तु हेरम्बे ताक्ष्यें विघ्ने जिने गुरौ, वि., मे. विनायको गणाधिपे। बुद्धे ताक्ष्यें गुरौ विघ्ने, हे. सुगते च विनायकः, अ. गुरावनाथे गरुडे जिने विघ्ने विनायकः, त्रि.

**विनिपात**—विनिपातो निपाते स्याद्दैवादिव्यसने पुमान्, मे. विनिपातोऽवपाते स्याद्दैवादिव्यसनेऽपि च, वि. विनिपातस्तु दैवते। व्यसने चावपाते च, हे.

**विनीत**—विनीत सुवहाश्वे स्याद्वणिज्यपि पुमांस्त्रिपु। जितेन्द्रियेऽपनीते च निभृते विनयान्विते, मे विनीतमुपनीते स्यादपनीते जितेन्द्रिये। वाणिजे सुवहाश्वे च निभृते चाभिधेयवत्, वि विनीतस्तु निभृते निर्जितेन्द्रिये। वाणिजे साधुवाह्यश्वे विनयग्राहिते हृते, हे

**विनेतृ**—विनेता देशिके राज्ञि ना, मे विनेता देशिके राज्ञि, वि विनेता देशिके नृपे, हे

**विन्दु**—विन्दुर्दन्तक्षतान्तरे। भ्रुवोर्मध्ये रूपकार्यप्रकृतौ पृषते पुमान्। वेदितर्यन्यलिङ्ग स्यात् मे विन्दुस्तु दन्तिदाने स्यात्तथा वेदितृविप्रुषो, वि विन्दुर्विप्रुड्ज्ञातो रदक्षते, हे विप्रुड् ज्ञाता च विन्दु स्यात्, त्रि विन्दुस्तु विदुरेऽपि च, हा

**विन्दुतन्त्र**—विन्दुतन्त्र पुमान् शारिफलके च तुरङ्गके, मे विन्दुतन्त्र विदु शारिफलके च तुरङ्गके, वि विन्दुतन्त्र पुन शारिफलके च तुरङ्गके, हे

**विन्ध्य**—विन्ध्या स्त्रिया लवल्या स्यात्पसि व्याधाद्रिभेदयो, मे विन्ध्या त्रुटौ लवल्या च विन्ध्यो रुक्शैलभेदयो वि विन्ध्यो व्याधाद्रिभेदयो। विन्ध्या त्रुटौ लवल्या च, हे ध्वान्ताचलौ मतौ विन्ध्यौ श्रने

**विन्न**—विन्न विचारिते लब्धे मे विन्न ज्ञाते स्थिते लब्धे, वि विन्न विचारिते लब्धे स्थिते, हे लब्धे ज्ञाते स्थिते विन्नम् त्रि

**विपञ्ची**—विपञ्ची केलिवीणयो मे वि

**विपणि**—विपणि पण्यवीथ्याञ्च भवेदापणपण्ययो, मे, वि विपणि पण्यहट्टयो। पण्यवीथ्याम्, हे वणिक्पथे च विपणि, अ

**विपत्ति**—विपत्तिरपि यातनापदो मे विपत्तिर्यातनापदो, हे, वि

**विपन्न**—विपन्न विपदाक्रान्ते त्रिपु पुंमि भुजङ्गमे, मे विपन्न व्यथितो नष्टे विपन्नस्त भुजङ्गमे, वि विपन्ना भुजगे नष्टे, हे विपन्नोऽह्नौ विपद्गते, त्रि

**विपाक**—विपाक पचने स्वेदे कर्मणो विमदृक्फले, मे विपाक कीर्त्यते स्वादौ परिणामे च दुर्गतौ, वि विपाक परिणामे च दुर्गतिस्वादुनोरपि, हे विपाक परिणामेऽपि, त्रि

**विपाश**—विपाशाख्या सरिद्भेदपाशवर्जितयोर्मता, वि

**विपुल**—विपुल पृथुलेऽगाधे मेरुपश्चिमभूधरे, मे, वि विपुल पृथ्वगाधयो। विपुलार्याभिदि क्षोण्याम, हे

**विप्रति(ती)सार**—विप्रतीसार उद्दिष्ट कौकृत्येऽनुशये रुषि, मे विप्रतीसारमिच्छन्ति कौकृत्येऽनुशये रुषि, वि विप्रतिसारस्त्वनुशये रुषि। कौकृत्ये, हे

**विप्रलाप**—विप्रलापो विरोधोक्तावपार्थवचनेऽपि च, मे, वि. विप्रलापो विरोधोक्तावनर्थकवचस्यपि, हे.

**विबुध**—विबुधो ज्ञे सुरे, मे. विबुध· पण्डिते देवे, वि विबुधः पण्डिते सुरे, हे

**विभव**—विभवो रैमोक्षैश्वर्ये, मे. विभवो निवृतौ धने, वि निर्वाणे विभवो धने, त्रि. विभवो धननिवृत्योः, हे.

**विभाकर**—विभाकरोऽग्निसूर्ययो., मे., हे विभाकरोऽग्नौ तपने, वि.

**विभाव**—विभावः स्यात्परिचये रसस्योद्दीपनादिपु, मे विभाव. स्यात्परिचितौ कामस्योद्दीपनेऽपि च, वि. विभाव. स्यात्परिचये रत्यादीना च कारणे हे.

**विभावरी**—विभावरी निशाराव्योः कुट्टन्या चक्रयोपिति। विवादवस्त्रगुण्ठ्यां च, मे विभावरी हरिद्राया रजन्यां च विभावरी। विवादवस्त्रलुण्ठ्या च कुट्टन्या चक्रयोषिति, वि. /

**विभावसु**—विभावसुः पुमान्सूर्ये हारभेदे च पावके, मे. विभावसुर्दिनमणौ हारभेदे च पावके, वि. विभावसुस्तु भास्करे। हुताशने हारभेदे चन्द्रे, हे. सूर्यवह्नी विभावसू, अ. वसुसूर्यौ विभावसू, अने.

**विभु**—विभुः प्रभौ सर्वगते शङ्करब्रह्मणोस्तु ना, मे. विभुः शिवे प्रभौ नित्ये, वि. विभुः प्रभौ। व्यापके शङ्करे नित्ये, हे. विभु स्यात्स्वामिभृत्ययो·, त्रि.

**विभ्रम**—विभ्रमो भ्रान्तिहावयो., मे., वि. अथ विभ्रमः। शोभाया सशये हावे, हे. चेष्टालङ्कारे भ्रान्तौ च विभ्रमः, अ. विभ्रमौ भ्रमहावयो·, त्रि. शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमा·, ह

**विमल**—विमला स्त्रियाम्। शीतलाया भुवो भेदे निर्मले त्वभिधेयवत्, मे. विमला शीतलाया स्याद्भुवो भेदे च निर्मले। विमलं च, वि. विमलोऽर्हति निर्मले, हे

**विमान**—विमानो व्योमयाने च सार्वभौमगृहेऽपि च। घोटके यानमात्रे च पुनपुसकयोर्मतः, मे. विमानं देवतायाने सार्वभौमगृहेऽपि च, हे.

**विम्ब**—विम्बं तु प्रतिविम्बेऽपि मण्डले पुनपुसकम्। विम्बिकाया. फले क्लीवं कृकलासे पुनः पुमान्, मे. विम्बं फले विम्बिकायाः प्रतिविम्बे च मण्डले, वि. विम्बन्तु प्रतिविम्बे स्यान्मण्डले विम्बिकाफले, हे. विम्बं विम्बफले रूपे, त्रि.

**विरिञ्च, विरिञ्चि**—विरिञ्चिर्ना विरिञ्चश्च वैकुण्ठे परमेष्ठिनि, मे.

**विरूढ**—विरूढोऽङ्कुरिते जाते, मे, हे. विरूढस्तु सञ्जातेऽङ्कुरितेऽन्यवत्, वि.

**विरोचन**—विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः, मे. विरोचनोऽर्के

दहने चन्द्रे प्रह्लादनन्दने, वि विरोचनोऽग्निसूर्ययो । प्रह्लादनन्दने चन्द्रे, हे चन्द्राग्न्यर्का विरोचना , अ

**विल**—विल छिद्रे गुहाया च पुमानुच्चैः श्रवोहये, मे विल छिद्रे गुहाया च विल उच्चैःश्रवोहये, वि विल रन्ध्रे गुहाया च हे

**विलग्न**—विलग्न न स्त्रिया मध्ये त्रिपु स्याल्लग्नमानके, मे विलग्नो मध्य-लग्नयो , वि विलग्न मध्यलग्नयो , हे त्रि

**विलास**—विलासो हावभेदे स्याल्लीलायामपि पुस्ययम्, मे विलासो हाव-लीलयो , वि विलासो हावे लीलायाम् ह

**विलासिन्**—विलासी भोगिनि व्याले विष्वक्सेनेऽग्निचन्द्रयो , मे विलासी भोगिनि व्याले वि विलासी भोगिसर्पयो , हे

**विलीन**—विलीनौ लीनविद्रुतौ हे

**विलेपनी**—विलेपनी सुवेपस्त्रीयवाग्वोरपि योपिति, मे विलेपनी स्यात्तरला सुवेशाङ्गनयोरपि, वि विलेपनी स्याद्ययवाग्वा चारुवेशस्त्रियामपि हे

**विलेशय**—विलेशयस्तु पुलिङ्गो मूपिके च भुजङ्गमे मे विलेशयो मूपिके स्याद्भुजङ्गेऽपि विलेशय वि विलेशयो मूपिकेऽही हे

**विलोम**—विलोमस्तु प्रतीपे स्याद्भुजङ्गे वरुणे शुनि । आमलक्या विलोमी च विलोम चारघट्टक मे, वि विलोममरघट्टके । विलोमो वरुणे सर्पे प्रतीपे कुक्कुरेऽपि च । विलोमी स्यादामलक्याम् हे

**विल्व**—विल्व फले श्रीफले ना मे

**विवक्षित**—विविक्षित शोभनेऽपि स्यात् ह

**विवध**—विवधो वीवधश्चापि पर्याहारेऽध्वभारयो मे विवधो वीवधश्चापि पर्याहारेऽध्वभारयो वि विवधो वीवधो भारे पर्याहाराध्वनोरपि, हे पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ अ

**विवर**—विवर दूपणे गर्ते, मे विवर दूपणे गर्ते कथित छिद्ररन्ध्रवत् वि v छिद्र

**विवर्त**—विवर्त समुदाये स्यादपवर्तननृत्ययो , मे, वि विवर्तो नर्तने सङ्क्षेपावृतौ, हे

**विवश**—विवशस्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि, मे , वि विवश स्याद-वश्यात्मारिष्टदुष्टमतिश्च य , हे विवशौ वशविह्वलौ, त्रि

**विवस्वत्**—विवस्वान् विबुधे सूर्ये तन्नगर्यां विवस्वती, मे विवस्वान् विबुधे भानौ, वि विवस्वास्तु देवे सूर्ये, हे देवसूर्यौ विवस्वन्तौ, अ विवस्वान्देवतापि, ह

**विविक्त**—विविक्त त्रिष्वसपृक्ते रह पूतविवेकिपु । वसुनन्दे ना, मे विविक्त स्यादसपृक्ते विवेकान्वितपूतयो । वाच्यवद्दर्शितो धीरैर्विविक्त रहसि स्मृतम्, वि विविक्तो वसुनन्दके । विविक्त स्यादसपृक्ते रह पूतविवेकिपु, हे विविक्तौ पूतविजनौ, अ

**विवृत**—विवृता क्षुद्ररुग्भेदे विस्तृते त्वभिधेयवत्, मे विवृता क्षुद्ररोगे स्याद्विवृत स्फुटे, हे

**विवेक**—विवेक स्याज्जलद्रोण्या पृथग्भावविचारयो , मे विवेक स्याज्जलद्रोण्या विचारेऽपि रहस्यपि, वि विवेक पुनरेकान्ते जलद्रोणीविचारयो , हे

**विश्**—विट् पुसि मनुजे वैश्ये, मे विट् स्मृतो वैश्यमनुजप्रवेशेपु मनीपिभि , वि विट् प्रवेशे नृवैश्ययो , हे द्वौ विशौ वैश्यमनुजौ, अ

**विशद**—विशद पाण्डरे व्यक्ते, मे , त्रि विशद पाण्डुरे व्यक्ते, वि, हे

**विशल्या**—विशल्याग्निशिखादन्तीगुड्चीत्रिपुटासु च, मे विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च, वि विशल्या लाङ्गलीदन्तीगुड्चीत्रिपुटासु च । शल्येन रहिताया च प्रियाया लक्ष्मणस्य च, हे विशल्या दन्तिकापि च, अ

**विशाख**—विशाखस्तर्कके स्कन्दे स्त्रियामृक्षे कटिल्लके, मे विशाखस्तर्कुके स्कन्दे विशाखर्क्षे कटिल्लके, वि विशाखो याचके स्कन्दे विशाखा भे कटिल्लके, हे विशाखा भे गुहे पुमान्, त्रि

**विशारद**—विशारद पण्डिते च धृष्टे, मे विशारदो बुधे धृष्टे, वि , हे विद्वत्सुप्रगल्भौ विशारदौ, अ

**विशाल**—विशाला त्विन्द्रवारुण्यामुज्जयिन्या तु योपिति । मृगपक्षिभिदो पुसि पृथुले त्वभिधेयवत्, मे विशाला त्विन्द्रवारुण्या विशालोज्जयिनीपुरि । विशालो वृक्षभेदेऽपि विशाल पृथलेऽन्यवत्, वि

**विशालाक्ष**—विशालाक्षो हरे तार्क्ष्ये ना सुनेत्रेऽभिधेयवत्, मे विशालाक्षो हरे तार्क्ष्ये विशालाक्षी वरस्त्रियाम्, वि विशालाक्षो महेश्वरे । तार्क्ष्ये विशालनेत्रे च, हे हरतार्क्ष्यौ विशालाक्षौ, त्रि

**विशिख**—विशिखस्तोमरे शरे । विशिखा तु खनित्र्या च रथ्यानलिकयोरपि, मे विशिखस्तोमरे शरे । रथ्याखनित्रयोर्विशिखा नलिकायामपि क्वचित्, वि विशिख शरे । विशिखा खनित्रिकाया रथ्यायाम्, हे काण्डे ना विशिखा रथ्या, त्रि विशिखाऽपि खनित्रिका, हा

**विशेष**—विशेषस्तिलकेऽपि च, हा

**विशेपक**—विशेपकोऽस्त्री तिलके विशेपयितरि त्रिपु, मे विशेपक स्यात्तिलके विशेपावाहकेऽपि च, वि विशेपकस्तु पुण्ड्रके। विशेपाधायके चापि, हे

**विश्रब्ध**—विश्रब्धोऽनुद्धटेऽपि स्याद्गाढविश्वस्तयोस्त्रिपु, मे विश्रब्धोऽनुद्धटेऽत्यर्थे शान्तविश्वस्तयोरपि, वि विश्रब्धोऽनुद्धटे शान्ते विश्वस्तात्यर्थयोरपि, हे विश्वस्तोऽनुद्धटश्च विश्रब्ध । विश्रब्ध वाढार्थम्, त्रि

**विश्रम्भ**—विश्रम्भ केलिकलहे विश्वासे प्रणयेऽपि च, मे, त्रि विश्रम्भ केलिकलहे विश्वासे प्रणये वधे, वि विस्रम्भ केलिकलहे विश्वासे प्रणये वधे, हे विश्रम्भ प्रणयेऽपि च, अ

**विश्राणन**—विश्राणन विहापिते। सप्रेपणे परित्यागे, हे

**विश्रुत**—विश्रुतम्। ज्ञाते हृष्टे प्रतीते च, हे

**विश्लेप**—विश्लेपो विधुरेऽयोगे मे विश्लेप स्याद्विघटने विश्लेपो विधुरेऽपि च, वि विश्लेपस्तु वियोजने। विधुरे च, हे

**विश्व**—विश्वा त्वतिविपाया स्त्री जगति स्यान्नपुसकम्। न ना शुण्ठ्या पुसि देवप्रभेदेष्वखिले त्रिपु मे विश्व समस्ते जगति विश्वो देवेपु नागरे। विश्वा चातिविपाया स्यात वि विश्वा सुरपु विश्वन्तु शुण्ठ्या भुवनकृत्स्नयो । विश्वा विपायाम् हे विश्व शुण्ठ्या समस्ते च त्रि

**विश्वकर्मन्**—विश्वकर्मा सहस्राशौ मुनिभिद्देवशिल्पिनो, मे विश्वकर्मा देवशिल्पिमुनिभेदोष्णरश्मिपु, वि विश्वकर्मार्के मुनिभिद्देवशिल्पिनो, हे विश्वकर्मार्कसुरशिल्पिनो अ

**विश्वकद्रु**—विश्वकद्रुस्त्रिपु खल ध्वानाखेटशुनो पुमान्, मे विश्वकद्रु खले ध्वाने स्यादाखेटिककुक्कुरे, वि विश्वकद्रुस्तु मृगयाकुक्कुरे पिशुने ध्वनौ, हे विश्व कद्रू श्वभित्खलो, त्रि

**विश्वप्सन्**—विश्वप्सा वह्निचन्द्रयो । समीरणे कृतान्ते च, हे विश्वप्साऽनलचन्द्रयो, वि

**विश्वम्भर**—विश्वम्भरोऽच्युते शक्रे पुसि विश्वम्भरा भुवि, मे विश्वम्भरोऽच्युते शक्रे भवेद्विश्वम्भरा भुवि, वि विश्वम्भरोऽच्युतेन्द्रयो। विश्वम्भरा तु मेदिन्याम्, हे

**विश्वस्त**—विश्वस्तो जातविश्वासे विश्वस्ता विधवास्त्रियाम्, मे विश्वस्ता निभृते स्मृत । विश्वासयोग्ये विश्वस्तो विश्वस्ता विधवास्त्रियाम्, वि विश्वस्त कृतविश्वासे विश्वस्ता विधवास्त्रियाम्, हे विश्वस्ता विधवाऽपि च, त्रि

**विश्वावसु**—विश्वावसु स्याद्गन्धर्वभेदे विश्वावसुर्निशि, वि विश्वावसु पुन । निशि गन्धर्वभेदे च, हे

**विष्**—विट् स्त्री व्यापनविष्ठयो , मे विड् व्यापने च विष्ठायाम्, वि

**विष**—विषन्तु गरले तोयेऽतिविषायाञ्च योषिति, मे विषन्तु गरले तोयेऽतिविषाया विषा भवेत्, वि विष जले। क्ष्वेडे विषा त्वतिविषा, हे विषमप्सु च, अ विष पानीयमित्युक्त विषमन्तकरो रस , अने

**विषघ्न**—विषघ्नस्तु शिरीषे ना गुडूचीत्रिवृतो स्त्रियाम्, मे विषघ्नाख्या शिरीषे स्यात्त्रिवृतामृतयोरपि, वि विषघ्न शिरीषतरौ विषघ्ना त्रिवृताऽमृता, हे

**विषय**—विषयो गोचरे देशे तथा जनपदेऽपि च। प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्, मे विषय स्यादिन्द्रियार्थे देशे जनपदेऽपि च। गोचरे च प्रबन्धाद्यो यस्य ज्ञातस्तु तत्र च, वि विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयो । शब्दादौ जनपदे च, हे विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेऽपि च, अ विषयौ देशगोचरौ, त्रि

**विषयायिन्**—विषयायी पुमान् राज्ञि वैषयिकजनेऽपि च। इन्द्रिये कामदेवे च विषयासक्तपूरुषे, मे

**विषयिन्**—विषयी विषयासक्ते वाच्यवत्क्लीवमिन्द्रिये। पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च, मे विषयी त्विन्द्रिये स्यात वाच्यवद्विषयान्विते, वि विषयी विषयासक्ते वैषयिकजने नृपे। कामे विषयि हृषीके, हे वेशकारेऽपि विषयी कामिनि क्लीवमिन्द्रिये, त्रि

**विषाण**—विषाणी क्षीरकाकोल्यामजशृङ्ग्याञ्च योषिति। कुष्ठनामौषधे क्लीव पशुशृङ्गेभदन्तयो , मे विषाणन्तु क्रोडद्विरददन्तयो । पशो शृङ्गे विषाणी तु मेषशृङ्ग्या प्रकीर्तिता, वि विषाणन्तु शृङ्गे कोलेभदन्तयो । विषाणी मेष-शृङ्ग्या स्यात्, हे अतस्त्रिषु विषाण स्यात्पशुशृङ्गेभदन्तयो , अ

**विष्कम्भ**—विष्कम्भो योगभेदे स्याद्विस्तारप्रतिबन्धयो । रूपकाङ्गप्रभेदे *च बन्धभेदे च योगिनाम्, मे, वि विष्कम्भो विस्तृतौ योगविशेषप्रतिबन्धयो ।* योगिनाञ्च बन्धभेदे रूपकावयवेऽपि च, हे

**विष्टम्भ**—विष्टम्भ प्रतिबन्धे स्यात्प्रभेदे चामयस्य च, मे, विष्टम्भ प्रतिबन्धे च वैदर्भे च प्रयुज्यते, वि

**विष्टर**—विष्टर कुशमुष्टौ स्यादासनेऽपि महीरुहे, मे विष्टरस्तु महीरुहे। आसने कुशमुष्टौ च, वि विष्टर आसने। पादपे कुशमुष्टौ च, हे विष्टरो विटपी दर्भमुष्टि पीठाद्यमासनम्, अ विष्टरो वर्हिषो मुष्टिर्विष्टरो ज्ञेयमासनम् । विष्टरो द्रुविशेषश्च विष्टर क्रतुरेव च, अने

**वीतिहोत्र**—वीतिहोत्रोऽनलेऽर्के च, मे वीतिहोत्रोऽनलार्कयो, वि वीति होत्रस्तु दिवाकरहुताशयो, हे

**वीथी**—वीथी पक्तौ गृहाङ्गे च रूपकान्तरवर्त्मनो, मे वीथी गृहाङ्गे पक्तौ च नाट्यरूपकवर्त्मनो वि वीथी वर्त्मनि पक्तौ च गृहाङ्गे नाट्यरूपके, हे वीथी पदव्यपि अ वीथी पक्तौ गृहाशके त्रि

**वीर**—वीरो रसविशेष स्यादुत्तरे सुभटे त्रिषु। स्त्री सुराक्षीरकाकोलीता मलक्येलवालुके। पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च। मलपूक्षीरविदार्यो क्लीव शृङ्गचा नलेऽपि च, मे वीरा स्यात्क्षीरकाकोलीतामलक्येलवालुषु। पति पुत्रवतीरम्भागम्भारीमदिरासु च। गोष्ठोदुम्बरिकाक्षीरविदारीदुग्धिकासु च। वीरस्तु सुभटे श्रेष्ठे वीर शृङ्गचा नतेऽपि च वि वीरो जिने नटे श्रेष्ठे वीर शृङ्गचा नतेऽपि च। वीरा गम्भारिका रम्भा तामलक्येलवालुका। मदिराक्षीरकाकोलीगोष्ठोदुम्बरिकासु च। पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि हे वीरौ विक्रमबान्धवौ अन

**वीरतर**—स्याद्वीरतर वीरणे वीरश्रेष्ठे शरे च ना मे विदुर्वीरतर श्रेष्ठ शरवीरणयोरपि वि वीरतरो वीरश्रेष्ठ शरे वीरतर पुन। वीरणे, हे

**वीरभद्र**—वीरभद्रोऽश्वमेधाश्व वीरश्रेष्ठे च वीरणे म वि वीरभद्रो वीरणऽश्वमेधाश्वे वीरसत्तमे ह

**वीरवृक्ष**—वीरवृक्षस्तु भल्लातककुभद्रुमयो पुमान् मे वीरवृक्षस्तु भल्ला तककुभद्रुमयोर्मत वि वीरवृक्षोऽर्जुनद्रुम। भल्लाते ह

**वीरुध्**—वीरुल्लताविटपयो स्त्रियाम् म वीरुद्विटपिशाखयो वि वीरुल्लताया विटपेऽपि च ह

**वीर्य**—वीर्यं शुक्रे प्रभावे च तेज सामर्थ्ययोरपि म वि वीर्यं तेज प्रभावयो। शुक्रे शक्तौ च, ह वीर्यं बले प्रभावे च अ वीर्यं प्रधाने धातौ च, त्रि वीर्यं शुत्र बल वीर्यं वीर्यं बीजमुदाहृतम् अने

**वीवध**—विवध

**वृकधूप**—वृकधूपस्तु सरलद्रवकृत्रिमधूपयो मे वि वृकधूपो वृक्षधूपे सिह्लके, हे

**वृक्षादन**—वृक्षादनश्चलदले मधुच्छत्रकुठारयो। वृक्षादनी तु वन्दाया विदारीकन्दकेऽपि च मे वृक्षादनश्चलदले मधुच्छत्रकुठारयो। वृक्षादनी स्मृता वन्दाविदारीगन्धयोरपि, वि वृक्षादनो मधुच्छत्रे चलपत्रकुठारयो। वृक्षादनी तु वन्दाया विदारीगन्धिकौषधे, हे वृक्षादनी स्याद्वन्दाया स्त्रिया कुठारक पुमान् त्रि

**वृजिन**—वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु, मे. वृजिन कल्मषे केशे वृजिन. कुटिलेऽन्यवत्, वि. वृजिनः केशे वृजिनं भुग्नेऽघे रक्तचर्मणि, हे. केशेऽपि वृजिन', अ. वृजिनं मलिने पापे, अने. वृजिन. केशेऽप्युक्त', ह.

**वृति**—वृतिस्तु वरणेऽपि स्याद्वेष्टनेऽपि च योषिति, मे वृति' स्याद्वरणे वाटे, वि वृतिर्वरणवाटयोः, हे.

**वृत्त**—वृत्तोऽधीतेऽप्यतीतेऽतिवर्तुलेऽपि वृते मृते। दृढेऽन्यलिङ्गं वा क्लीव छन्दश्चारित्रवृत्तिषु, मे. वृत्तं वृत्तौ दृढे मृते। चरित्रे वर्तुले छन्दस्यतीताधीतयोर्वृते, हे वृत्तोऽतीते दृढे ख्याते वर्तुलेऽपि मृते वृते। वाच्यवद्वर्तने वृत्त चरित्रच्छन्दसोरपि, वि. वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले, अ वर्तुलाधीतयोर्वृत्तम्, त्रि.

**वृत्तान्त**—वृत्तान्त प्रक्रियाया स्यात्कात्स्न्र्यवार्ताप्रभेदयो। प्रस्तावे, मे वृत्तान्तस्तु प्रकरणे कात्स्न्र्ये वार्ताप्रकारयोः, हे. वृत्तान्त स्यात्प्रकरणे प्रकारे कात्स्न्र्यवार्तयो., अ वृत्तान्तोऽवसरे भावकात्स्न्र्यवार्ताविशेषयो। वृत्तान्त प्रक्रियाया स्यात्क्वचिदेकान्तवाचकः, वि.

**वृत्ति**—वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने। स्त्री, मे. वृत्तिर्विवरणे जीव्ये कैशिक्यादिषु चेष्यते, वि. वृत्तिस्तु वर्तने। कैशिक्यादौ विवरणे, हे कैशिक्याद्याश्च वृत्तय', अ. वर्तने विवृतौ वृत्ति', त्रि.

**वृत्र**—वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे, मे वृत्रो रिपौ घने ध्वान्ते शैले शक्रे च दानवे, वि. वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ, हे ध्वान्तारिदानवा वृत्रा, अ. वृत्रौ दानववैरिणौ, अने. त्वाष्ट्रे तमसि शत्रौ च वृत्रशब्दस्त्रिषु स्मृतः, ह

**वृथा**—वृथा वन्ध्ये निष्कारणे, मे वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते, वि. वृथा त्वविधौ स्यादनर्थके, हे वृथा निरर्थकाऽविध्यो, अ.

**वृद्ध**—वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीवन्तु शैलजे, मे. वृद्धन्तु शैलजे सूरिजीर्णरूढेषु भेद्यवत्, वि. वृद्ध. प्राज्ञे स्थविरे च वृद्ध शैलेयरूढयो', हे. बुधवृद्धौ पण्डितेऽपि अ

**वृद्धि**—वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे। कलान्तरे चाभ्युदये समृद्धचामपि योषिति, मे. वृद्धिरानन्दने ऋद्धौ वर्धनेऽपि कलान्तरे, वि. वृद्धिः कलान्तरे हर्षे वर्धने भेषजान्तरे, हे.

**वृन्त**—वृन्त प्रसवबन्धे च घटीधाराकुचाग्रयो., मे. वृन्तं स्तनमुखे पुष्पबन्धे, हे. वृन्त प्रसवबन्धे स्याद्घटधाराकुचाग्रयो', वि.

**वृन्दारक**—वृन्दारक सुरे पुसि मनोज्ञश्रेष्ठयोस्त्रिपु, मे वृन्दारक सुरे श्रेष्ठे मनोज्ञे पुनरन्यवत्, वि वृन्दारको मनोरमे। सुरे श्रेष्ठे, हे वृन्दारकौ रूपिमुख्यौ (त्रिपु), अ वृन्दारकौ सुरश्रेष्ठौ, त्रि

**वृश्चिक**—वृश्चिकश्च द्रुणे राशौ शूककीटौपधीभिदो, मे वृश्चिकस्तु द्रुणे राशौ शूककीटे तथौपधे, वि वृश्चिकश्च द्रुणे राशावौपधे शूककीटके, हे शूककीटे च वृश्चिक, अ

**वृष**—वृपो धर्मे बलीवर्दे शृङ्गया पुराशिभेदयो। श्रेष्ठे स्यादुत्तरस्थश्च व्यासमूपिकशुक्ले। तथा वास्तुस्थानभेदे पुमानेप प्रकीर्तित। वृषा मूपिकपर्ण्याञ्च यतीनामासने वृषी, मे वृष स्याद्वासवे धर्मे सौरभेये च शुक्ले। पुराशिभेदयो शृङ्गचा मूपिकश्रेष्ठयोरपि। कपिकच्छ्वां वृषा प्रोक्ता व्रतिनामासन वृषी वि वृपो गव्याखुधर्मयो। पुराशिभेदयो शृङ्गचा वासवे शुक्लेऽपि च। श्रेष्ठे स्यादुत्तरस्थश्च वृषी तु व्रतिविष्टरे। वृषा चित्राकपिकच्छ्वो, हे शुक्ले मूपिके श्रेष्ठे मुक्ते वृषभे वृष अ धर्मो वृषो वृष श्रेष्ठो वृषो गौर्महिषो वृष। वृषो वल वृष कामो वृषणो वृष उच्यते अन

**वृषन्**—वृषा कर्णे महेन्द्रे ना मे वृषा तु वासवे। वृषभे तुरगे पुसि, हे वृषा कर्णमहेन्द्रयो वि

**वृषपर्वन्**—वृषपर्वा पुमान्दैत्यभेदेऽप्यन्धकसूदने मे वृषपर्वा हरे दैत्ये शृङ्गारिणि कशेरुणि वि वृषपर्वा तु शृङ्गारिहरदैत्यकशेरुपु हे वृषपर्वा शिवे दैत्ये त्रि

**वृषभ**—वृषभ श्रेष्ठवृषयो मे वृषभ स्यादादिजिने वृषपुङ्गवयोरपि, हे वृषभ पुङ्गवे वृषे वि

**वृषल**—वृषलो गृञ्जने शूद्रे चन्द्रगुप्ते च वाजिनि मे वृषल कथित शूद्रे चन्द्रगुप्ते च वाजिनि वि वृषलस्तुरगे शूद्रे, हे

**वृषाकपायी**—वृषाकपायी श्रीगौरीवरीजीवन्तिकासु च, मे वृषाकपायी श्रीगौर्यो जीवन्त्याञ्च शतावरी, वि वृषाकपायी जीवन्त्या शतावर्युमयो श्रियाम् हे वृषाकपायी श्रीगौर्यो, अ

**वृषाकपि**—वृषाकपि पुमान् कृष्णे शङ्करे जातवेदसि मे वृषाकपि शिवे कृष्णे ज्वलने च वृषाकपि, वि वृषाकपि। वासुदेवे शिवेऽग्नौ च, हे हरविष्णू वृषाकपी, अ शिवकृष्णौ वृषाकपी, अने

**वृषाङ्क**—वृषाङ्क शङ्करे साधौ भल्लातकमहल्लयो मे, वि वृषाङ्क साधुभल्लातशङ्करेषु महल्लके, हे वृषाङ्कौ शिवभल्लातौ, त्रि

**वृष्णि**—वृष्णि पापण्डचण्डयो । त्रिपु ना यादवे मेपे, मे वृष्णिस्तु यादवे मेपे वृष्णि पापण्डचण्डयो, वि वृष्णिर्मेपे यादवे च हे वृष्णिर्यादवमेपयो, त्रि

**वृहतिका**—वृहतिका स्याद्रुवस्त्रभेदयो, हे विद्याद्वृहतिकाभिख्यामूरुवस्त्रप्रभेदयो, वि

**वृहन्नल**—वृहन्नला गुडाकेशे महापोटगले पुमान्, मे वृहन्नलो गुडाकेशे महापोटगले मत वि वृहन्नल । महापोटगले पार्थे, हे

**वेकट**—वेकट स्याद्वैकटिके मत्स्यभेदे च यूनि च, मे वेकटो जाततारुण्ये मणिकारे, हे वेकट स्याद्वैकटिके तथा सञ्जातयौवने, वि

**वेग**—वेगो जवे प्रवाहे च महाकालफलेऽपि च, मे वि वेगो रयप्रवाहयो । रेत किम्पाकयोश्चापि हे वेग प्रवाहजवयोरपि अ वेगस्तु महाकालफलेऽपि च, त्रि

**वेणी**—वेणी केशस्य बन्धने । नद्यादेरन्तरे देवताले, मे वेणी कचस्य बन्धे स्यान्नदीना मेलकेऽपि च । देवताडे च, वि वेणी सेतुप्रवाहयो । देवताडे केशबन्धे, हे

**वेणु**—वेणुर्नृपान्तरे । त्वक्सारेऽपि च पुसि स्यात, मे वेणुर्भूपान्तरे वशे, वि वेणुर्वंशे नृपान्तरे, हे त्रि

**वेद**—वेद श्रुतौ च वृत्ते च, मे

**वेदना**—वेदना ज्ञानदुःखयो मे, वि, त्रि वेदना ज्ञाने पीडायाम्, हे सवित्तावपि वेदना ह

**वेदि**—वेदि: स्यात्पण्डिते पुमान् । स्त्रियामङ्गुलिमुद्राया स्यात्परिष्कृतभूतले म वेदिरङ्गुलिमुद्राया बुधेऽलङ्कृतभूतले, वि, हे

**वेदिका**—वेदिकाऽङ्गुलिमुद्रायाम्, ह

**वेधस्**—वेधा पुसि हृषीकेशे बुधे च परमेष्ठिनि, मे वेधा विधौ बुधे विष्णौ, वि वेधा धातृज्ञविष्णुपु, हे विष्णौ च वेधा, अ विद्वुष्यपि स्मृतो वेधा, ह

**वेर**—वेर कलेवरे क्लीब वार्ताकौ कुङ्कुमेऽपि च, मे वेर शरीरे काश्मीरे वेर वातिङ्गणेऽपि च, वि वेर घुसृणवृन्ताकशरीरेषु, हे वराङ्गे कुङ्कुमे वेरम्, त्रि

**वेरट**—अथ वेरट । मिश्रीकृते च नीचे च वेरट बदरीफले, हे

**वेला**—वेला काले च सीमायामब्धे कूलविकारयो । अक्लिष्टमरणे रागे ईश्वरस्य च भोजने, मे वेला काले च जलधेस्तीरनीरविकारयो । अक्लिष्टमरणे रागे सीम्नि वाचि बुधस्त्रियाम् । भोजनेऽपीश्वराणा स्यात्, वि वेला बुधस्त्रिया काले सीमनीश्वरभोजने । अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयो, हे अब्ध्यम्बु-

विकृतौ वेला कालमर्यादयोरपि, अ अथ वेला स्यात्सिन्धो कूले च भोजने, नि वेला कालविशेष स्याद्वेला सिन्धुजलोद्‌गति । वेला शफाङ्गुलीच्छेदे वेला द्रोण्यन्तरात्मनि, अने दन्तमासेऽपि वेला स्यात्, हा व्यवस्थाऽनेहसोर्वेला, ह

**वेल्लित**—वेल्लित गमने क्लीव कुटिले विधुते त्रिपु, मे वेल्लित कुटिले प्रोक्त वाच्यवद्विधुते प्लुते, वि वेल्लित कुटिले धुते । प्लुते, हे

**वेश**—वेशो वेश्यागृहे गृहे मे, हे वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमानके, वि वेशो वेश्यागृहेऽपि च, त्रि

**वेश्य**—वेश्य वेश्यागृहे क्लीव गणिकायान्तु योपिति, मे वेश्य वेश्यागृहे वेश्या गणिकायामुदीरिता, वि वेश्यन्तु गणिकागृहे । वेश्या तु पण्ययोपायाम्, हे

**वेष्टन**—वेष्टन कर्णशष्कुल्यामुष्णीपे मुकुटे वृतौ, मे वेष्टन कर्णशष्कुल्या-मुष्णीपे परिवारणे वि वेष्टन मुकुटे कर्णशष्कुल्युष्णीपयोर्वृतौ, हे

**वेष्टित**—वेष्टित रुद्धे लासके करणान्तरे मे वेष्टित लसके रुद्धे स्त्रीणाञ्च करणान्तरे, वि वेष्टित लासके रुद्धे स्त्रीकरणान्तरे, हे

**वै**—वै स्यात्सम्बोधने पादपूरणेऽनुनयेऽपि च, मे वि वै हेतौ पादपूरणे, हे

**वैकुण्ठ**—वैकुण्ठ कृष्णशक्रयो मे वि वैकुण्ठो वासवे विष्णौ हे

**वैजयन्त**—वैजयन्तो गृहे शक्रध्वजप्रासादयो पुमान् । वैजयन्ती पताकाया जयन्तीपादपे स्त्रियाम् मे वैजयन्ती गृहे शक्रप्रासादध्वजयोरपि । वैजयन्ती पताकाया जयन्तीवह्निमन्थयो, वि वैजयन्तो गृहे ध्वजे । इन्द्रालये वैजयन्ती त्वग्निमन्थपताकयो । जयन्त्याञ्च, हे

**वैजिक**—वैजिक शिग्रुतैले स्याद्धेतौ सद्योऽङ्कुरे तु ना, मे वैजिक शिग्रुतैले च हेतौ सद्योऽङ्कुरेऽपि च, वि वैजिक कारणे शिग्रुतैले च वैजिकोऽङ्कुरे, हे

**वैतरणी**—अथ वैतरणी नद्या प्रेताना यातुमातरि, मे भवेद्वैतरणी नद्या प्रेताना यातुमातरि, वि वैतरणी प्रेतनद्या जनन्यामपि रक्षसाम्, हे

**वैतालिक**—वैतालिक पुमान् खेटिताले बोधकरे त्रिपु, मे वैतालिको बोधकरे खेटितालेऽप्युदीरित, वि वैतालिक खड्‌गताले मङ्गलापाठकेऽपि च, हे

**वैदर्भ**—वैदर्भ वाक्यवक्रत्वे वैदर्भी रीतिभिद्यपि, मे वैदर्भ वाक्यवक्रत्वे वैदर्भश्च नृपान्तरे, वि

**वैदेहक**—वैदेहको वाणिजके शूद्राद्वैश्यामुतेऽपि च, मे, वि वैदेहको वाणिजका वैश्यापुनश्च शूद्रत, हे वैदेहको वाणिजके वैश्यायामपि शूद्रजे, त्रि

**वैदेही**—वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीपु च, मे वैदेही रोचनासीता-वणिक्स्त्रीपिप्पलीष्वपि, वि वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि, त्रि

**वैनतेय**—वैनतेयस्तु गरुडे स्यात्प्रभाकरसारथौ, मे

**वैनाशिक**—वैनाशिक स्यात्क्षणिके परतन्त्रोर्णनाभयो, मे, वि वैनाशिक स्यात्क्षणिके परायत्तोर्णनाभयो, हे

**वैरोचन(नि)**—वैरोचनिस्तु सुगते बलिदैत्यार्कपुत्रयो, मे वैरोचनस्तु सुगते बलिदैत्यार्कपुत्रयो वि वैरोचनो रविसुते सुगते बलिदानवे, हे

**वैशाख**—वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्तित मे वैशाखो राधमन्थयो वि वैशाख खजके राधे, हे वैशाखो मन्थमासयो, त्रि

**वोड़**—वोड़ी स्त्री पणपादे ना गोनसाहौ झपान्तरे, मे

**वोढ़**—वोढा ना भारिके सूते, मे वोढा स्याद्भारिके सूते, वि, हे

**व्यक्त**—व्यक्त स्फुटमनीषिणो मे वि व्यक्तो मनीषिस्फुटयो हे व्यक्त प्राज्ञेऽपि, अ स्पष्टप्राज्ञौ स्मृतौ व्यक्तौ, अने

**व्यग्र**—व्यग्रो व्यासक्त आकुले, मे, वि, अ व्यग्रो व्यापृताकुलयो हे

**व्यङ्ग**—व्यङ्गो भके च हीनाङ्गे, मे, हे व्यङ्गो हीनाङ्गभेकयो, वि

**व्यञ्जन**—व्यञ्जन तेमने चिह्ने श्मश्रुण्यवयवे हलि, मे व्यञ्जन तेमने चिह्ने श्मश्रुण्यवयवेऽपि च, वि व्यञ्जन श्मश्रुचिह्नयो। तेमनेऽवयवे कादौ, हे व्यञ्जन लाञ्छन श्मश्रुनिष्ठानावयवेष्वपि, अ

**व्यतिकर**—अथ व्यतिकर पुंसि व्यसनव्यतिपङ्गयो, मे, त्रि व्यतिकर समाख्यातो व्यसनव्यतिपङ्गयो, वि व्यतिकरो व्यसनव्यतिपङ्गयो हे

**व्यतीपात**—व्यतीपातो महोत्पाते योगभेदापयानयो, मे, वि व्यतिपात उपद्रवे। योगभेदेऽपयाने च, हे

**व्यलीक**—व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीडने। ना नागरे, मे व्यलीको नागरे स्मृत। व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीडने, वि व्यलीक व्यङ्गवैलक्ष्याप्रियाऽकार्येषु पीडने, हे पीडार्थेऽपि व्यलीक स्यात् अ वैलक्ष्याकार्ययो क्लीव व्यलीक त्रिषु नागरे, त्रि

**व्यवहार**—व्यवहारो द्रुभेदे स्यात्पणे न्यायेऽपि च स्थितौ, मे व्यवहारो द्रुभेदे स्याद्व्यवहारो पणे स्थितौ, वि व्यवहार स्थितौ पणे। द्रुभेदे, हे

**व्यवहारिका**—व्यवहारिका स्याल्लोकयात्रासम्मार्जनीङ्गुदे, मे अथ स्याद्व्यवहारिका। लोकयात्रेङ्गुदीवर्धनीषु, हे स्याद्व्यवहारिका लोकयात्रासम्मार्जनीङ्गुदे, वि

**व्यवाय**—व्यवाय सुरतेऽन्तर्धौ पुंसि क्लीवन्तु तेजसि, मे व्यवाय सुरते-

ऽन्तर्धौ व्यवाय तेजसि स्मृतम्, वि व्यवायन्तु मैथुनव्यवधानयो, हे सुरतेऽपि व्यवाय स्यात्, ह

**व्यवायिन्**—व्यवायी कामुके द्रव्यविशेष च समीरित, वि

**व्यसन**—व्यसन त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे, मे, वि व्यसन निष्फलोद्यमे। दैवानिष्टफले सक्तौ स्त्री-पानमृगयादिषु। पापे विपत्तावशुभे, हे व्यसन विपदि भ्रशे दोषे कामजकोपजे, अ दैवानिष्टफले सक्तौ व्यसन निष्फलोद्यमे, त्रि

**व्यस्त**—व्यस्तन्तु व्याकुले व्याप्ते, मे व्यस्त व्याप्ते च सकुले, वि

**व्याघात**—व्याघातो योगभेदे स्यादन्तरायप्रहारयो, मे, वि व्याघातो योग-विघ्नयो। घाते, हे

**व्याघ्र**—व्याघ्र स्यात्पुसि शार्दूले रक्तैरण्डकरञ्जयो। श्रेष्ठे नराद्युत्तर-स्थ कण्टकार्यान्तु योषिति, मे व्याघ्रो द्विपिनि विख्यात रक्तैरण्डकरञ्जयो। व्याघ्री निदिग्धिकायाञ्च श्रेष्ठे स्यादुत्तरस्थित, वि व्याघ्र करञ्जे शार्दूले रक्तैरण्डतरावपि। श्रेष्ठे तूत्तरपदस्थ स्याद्व्याघ्री कण्टकारिका, हे

**व्याघ्रनख**—भवेद्व्याघ्रनख कन्दगन्धद्रव्यविशेषयो। नखक्षतान्तरे क्लीवम मे भवेद्व्याघ्रनख कन्दगन्धद्रव्यविशेषयो, वि व्याघ्रनखस्तु कन्दे स्याद गन्धद्रव्यान्तरेऽपि च, हे

**व्याज**—व्याज शाठ्येऽपदेशे, मे, हे व्याज शाठ्यापदेशयो, वि व्याज शाठ्येऽपदेशे च त्रि

**व्याड**—व्याडो हिंस्रपशौ सर्पे, मे, वि, हे सर्पमांसात्पशू व्याडौ, अ,

**व्याध**—व्याधो मृगयुदुष्टयो। तारामये खे च मे व्याधो मृगदुष्टयो, वि, हे

**व्याधि**—व्याधि कुष्ठे च रोगे ना, मे व्याधिरामयवाप्ययो, वि

**व्याप्त**—व्याप्त ख्याते समाक्रान्ते, मे, वि

**व्याप्ति**—व्याप्तिर्व्यापनलम्भयो, वि, मे व्याप्तिर्व्यापने लम्भनेऽपि च, हे लाभसम्बन्धयोर्व्याप्ति, त्रि

**व्यायत**—व्यायत व्यापृते दीर्घे दृढे चातिशयेऽन्यवत्, मे, वि व्यायत दीर्घे व्यापृतेऽतिशये दृढे, हे दृढेऽपि व्यायतम्, त्रि

**व्यायाम**—व्यायाम पौरुषे श्रमे। विषमे दुर्गसञ्चारे, मे व्यायामो दुर्गसञ्चारे वियामे पौरुषेऽपि च, वि व्यायाम पौरुषे श्रमे। वियामे दुर्गसञ्चारे, हे.

**व्याल**—व्यालो दुष्टगजे सर्पे श्वापदे नाऽन्यवत्खले मे व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि, वि व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयो , हे भेद्य-लिङ्ग शठे व्याल पुंसि श्वापदसर्पयो , अ अर्थव्यवसहे व्यालस्तथा हिंस्रपशौ स्मृत , ह व्यालोऽहि श्वापदो व्यालो व्याल स्यात्कुटिल करी। प्रमाद-वान्नरो न व्यालो व्यालो वाल उदाहृत , अने व्याल सर्प शठे व्यालो व्यालो ज्ञेयश्चतुष्पद , अने

**व्यास**—व्यासो भा विस्तृते मुनौ, मे व्यासो मुनिप्रपञ्चयो , हे व्यासो मुनौ च विस्तारे, त्रि व्यासो मुनौ स्याद्विस्तारे, वि

**व्युत्थान**—व्युत्थान स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च, मे व्युत्थान स्वैर-करणे विरोधाचरणेऽपि च, वि व्युत्थान प्रतिरोधने। विरोधाचरणे स्वैरवृत्तौ समाधिपारणे, हे व्युत्थान प्रतिरोधे च विराधाचरणेऽपि च अ स्वतन्त्रता च व्युत्थानम्, त्रि

**व्युष्ट**—व्युष्ट कल्ये त्रिपूषिते, मे , त्रि व्युष्ट फले दिने। पर्युषिते प्रभाते च, हे व्युष्ट दिने प्रभाते च फले पर्युषितेऽपि च वि व्युष्ट कल्ये तयोषिते हा

**व्युष्टि**—व्युष्टि फले समृद्धौ च अ व्युष्टि स्तुतिफलर्द्धिषु हे व्युष्टि फले समृद्धौ स्त्री, मे व्युष्टिरुक्ता समृद्धौ च नियमादिफलेऽपि च वि

**व्यूढ**—व्यूढ सहतविन्यस्तपृथुलेष्वभिधेयवत्, म व्यूढ सहतविन्यस्तपृथुलेषु च भेद्यवत्, वि व्यूढा न्यस्तोरुसहता , हे व्यूढौ विन्यस्तसहतौ, अ

**व्यूह**—व्यूह स्याद्बलविन्यासे निर्माणे वृन्दतर्कयो , मे , वि व्यूहो निर्माण-तर्कयो । समूहे बलविन्यासे, हे देहनिर्माणसैन्येषु व्यूह स्यात्, त्रि व्यूहो वृन्देऽपि, अ व्यूह रचनायामपि, ह

**व्योमचारिन्**—व्योमचारी तु निर्दिष्टो देवताया विहङ्गमे, मे व्योमचारी खगे देवे, वि

**व्योमन्**—व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये, मे व्योम वारि-विहायसो , वि

**व्योष**—व्योष स्यात्त्रिकटुद्रव्ये करिभेदे पुमानयम्, मे

**व्रज**—व्रजो गोष्ठाध्ववृन्देषु, मे , वि व्रजोऽध्वगोष्ठसङ्घेषु, हे गोष्ठाध्वनि-वहा व्रजा , अ व्रजो गोष्ठ व्रजो मार्गो व्रज सङ्घो व्रजो गण , अने

**व्रज्या**—व्रज्या पर्यटने प्रोक्ता वर्गप्रस्थानयोरपि, मे , वि

**व्रीहि**—व्रीहि सामान्यधान्ये स्यादाशुधान्ये तु पुंस्ययम्, मे

**व्रीहिराजिक**—स्याद्व्रीहिराजिक कङ्गुधान्यचीनकधान्ययो , मे स्याद्

व्रीहिराजिक कामलिकाया चीनधान्यके, वि अथ व्रीहिराजिक । चीनान्ने कामलिकायामपि, हे

**श**—श वदन्ति बुधा श्रेय शश्च शस्त्र निगद्यते। शीञ्च शयनमित्याहु शास्त्र शा च निगद्यते, मे श सुख शङ्कर श्रेय शश्च सीम्नि निगद्यते। शयने श समाख्यातो हिंसाया शो निगद्यते, ए मृत्युर्वको विपघ्नश्च हृदो दक्षकरस्थित । शकुकर्णोऽस्थिसज्ञश्च शकार सद्भिरीरित , मा

**शसा**—शसा वचसि वाञ्छायाम्, मे , हे शसा वचनवाञ्छयो , वि

**शक**—शको जात्यन्तरे नृपे, मे शको राजन्यदेशयो , वि शको देशे राजभेदे हे

**शकल**—शकल त्वचि खण्डे स्याद्रागवस्तुनि वल्कले, मे , वि शकल रागवस्तुनि। वल्कले त्वचि खण्डे च, हे शकल वल्कले खण्डे, त्रि

**शकुन**—शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेपयो । शुभशसिनिमित्ते च शकुन स्यान्नपुसकम् मे शकुन च शुभाशसिनिमित्ते शकुन खगे, वि शकुन स्याद्दैव शसिनिमित्ते शकुन खगे हे दैवशसिनिमित्ते च शकुन पुसि पक्षिणि, त्रि

**शकुनि**—शकुनि पुसि विहगे सौवले करणान्तरे, मे शकुनि सौवले करणे खगे वि शकुनि खगे करणभेदे कौरवमातुले, हे शकुनि सौवले खगे, त्रि

**शकुन्त**—शकुन्त कीटभेदे स्याद्भासपक्षिविहङ्गयो , मे शकुन्तो विहगे भासे, हे शकुन्तौ भासपक्षिणौ अ शकुन्त पक्षिभेदे स्याद्भासपक्षिविहङ्गयो वि

**शकुलादनी**—शकुलादनी स्त्रिया कृष्णभेदीकटुकशाकयो , मे शकुलादन्यभिख्या तु मासीकिञ्चुलिकाह्वयो । कटुकाजलपिप्पल्यो कथ्यते शकुलादनी, वि शकुलादनी। कटुमासीकिञ्चुलिकाजलपिप्पलिकासु च, हे कटुकाया कञ्चटके कथिता शकुलादनी, हा

**शक्ति**—शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्, मे शक्तिर्बले प्रभावादौ शक्ति प्रहरणान्तरे, वि शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्, हे कासूसामर्थ्ययो शक्ति , अ अस्त्रभेदेऽपि शक्ति स्यात्, त्रि

**शक्र**—शक्र पुमान्देवराजे कुटजार्जुनभूरुहो , मे शक्रो महेन्द्रे स्यात्कुटजार्जुनभूरुहो , वि शक्रोऽर्जुनतराविन्द्रे कुटजे, हे कुटजे वासवे शक्र , त्रि

**शक्वरी**—शक्वरी छन्दसो भेदे नदीमेखलयोरपि, मे शक्वरी मेखलानद्यो छन्दोभेदेऽपि शक्वरी, वि शक्वरी सरिदन्तरे। छन्दोजातौ मेखलायाम्, हे शक्वरी मेखला च्छन्द , त्रि

**शङ्का**—शङ्का त्रासे वितर्के च, मे, वि. शङ्का स्यात्संशये भये, हे

**शङ्कु**—शङ्कुः संख्यास्त्रयादोभित्कीलेशकलुषेषु ना, मे. शङ्कुः पत्रशिराजाले संख्याकीलकशम्भुषु। यादोऽस्त्रभेदयोर्मेढ़े, हे. शङ्कुः कीले शिवेऽस्त्रे च सख्या-यादःप्रभेदयोः, वि. शङ्कुः कीलकसंख्यास्त्रजलजन्तुषु दृश्यते, त्रि.

**शङ्ख**—शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे, मे. शङ्खो निध्यन्तरे कम्बुललाटास्थिनखीषु च, वि. शङ्खः कम्बौ निधिभेदे स्यान्नख्यामलिकास्थनि, हे. शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री, अ.

**शङ्खक**—शङ्खकं वलये कम्बौ अस्त्री पुंसि शिरोरुजि, मे. शङ्खकं वलये कम्बौ शिरोरोगे च शङ्खकम्, वि. शङ्खकं वलये कम्बौ शङ्खकस्तु शिरोरुजि, हे

**शङ्खिन्**—शङ्खी हरौ समुद्रे ना शङ्खवत्यभिधेयवत्। शङ्खिनी श्वेतचुकाया चौरपुष्प्या वधूभिदि, मे शङ्खिनी श्वेतपुन्नागे चौरपुष्प्या वधूभिदि, वि

**शची**—शचीन्द्राण्या शतावर्यां तथा स्त्रीकरणान्तरे, मे. शचीन्द्राण्यां शतावरी, वि. शचीन्द्राणीशतावर्योः, हे.

**शठ**—शठो मध्यस्थपुरुषे धूर्तधूस्तूरयोरपि, मे. शठो मध्यस्थपुरुषे शठो धुत्तूरधूर्तयोः। शठोऽलसे च मूर्खे च, वि. शठो मध्यस्थपुरुषे धूर्ते धुत्तूरकेऽपि च, हे मध्यस्थखलयो शठः, त्रि

**शणीर**—शणीर शोणमध्यस्थपुलिने दर्दुरीतटे, मे, वि.

**शण्ढ**—शण्ढो वर्षवरे क्लीबे गोपतौ वन्ध्यपूरुषे, वि. शण्ढपण्ढौ तु सौविदे। वन्ध्यपुंसीट्चरे क्लीवे, हे. v. पण्ढ.

**शतघ्नी**—शतघ्नी शस्त्रभेदे स्याद्वृश्चिकाल्या करञ्जके, मे., वि. शतघ्नी तु वृश्चिकाल्या शस्त्रभेदकरञ्जयोः, हे

**शतधृति**—भवेच्छतधृतिः पुंसि शक्रे च परमेष्ठिनि, मे. शतधृतिर्धातरीन्द्रे, वि. ब्रह्मशक्रौ शतधृती, त्रि.

**शतपत्र**—शतपत्रः शिखण्डिनि। दार्वाघाटे सारसे च कमले तु नपुंसकम्, मे. शतपत्रो राजकीरे दार्वाघाटमयूरयोः। राजीवे शतपत्रं तु, वि. शतपत्रो दार्वाघाटे राजकीरमयूरयोः। शतपत्रं तु राजीवे, हे. दार्वाघाटेऽपि शतपत्रम्, हृ.

**शतपर्वा**—शतपर्वा तु दूर्वायां तथा भार्गवयोषिति, मे. शतपर्वा तु दूर्वाया भार्गवस्य स्त्रियामपि, वि.

**शतपर्विका**—शतपर्विका तु दूर्वाया वचायामपि योषिति, मे. अथो शतपर्विका। स्याद्वचादूर्वयोः, हे. स्याच्छतपर्विका दूर्वावचयोः, वि. वचाऽपि शतपर्विका, त्रि.

**शतह्रदा**—शतह्रदा स्त्रिया वज्रे सौदामिन्या च कीर्तिता, मे शतह्रदा भवेद्वज्रे व सौदामिन्या च कीर्तिता, वि शतह्रदा तु विद्युति। वज्रेऽपि, हे v ऐरावत

**शतानन्द**—शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च, मे

**शतानीक**—शतानीकस्तु वृद्धे स्यान्मुनिराजप्रभेदयो, मे शतानीको मुनेर्भेदे वृद्धे च, वि शतानीको मुनौ वृद्धे, हे

**शतावरी**—शतावरी तु शच्या स्यादिन्दीवर्यामपि स्त्रियाम्, मे वरीशच्यो शतावरी त्रि

**शद्रि**—शद्रिर्नाऽम्भोधरे जिष्णौ मे शद्रिर्विष्णौ तडित्यपि, हे शद्रि रम्भोधरे जिष्णौ वि

**शनैस्**—शनै स्वैर शनैश्चरे मे शनै शनैश्चर स्वैरे वि

**शफ**—शफ मूले तरूणा स्याद गवादीना खुरेऽपि च वि मे शफ खुरे गवादीना मूले विटपिनामपि हे

**शब्द**—शब्दोऽक्षर यशोगीत्योर्वाक्य ख श्रवणे ध्वनौ हे

**शम्**—श कल्याणे सुखे म श सुख शर्मणि प्रोक्तम वि श कल्याणे सुखेऽपि च, हे

**शमथ**—शमथ शान्तिमन्त्रिणो म शमथ सचिवे शान्तौ वि शमथ सचिव शम ह

**शमन**—शमन शान्तिवधयो। शमन श्राद्धदैवते मे वि शमनस्तु यमे शमन शान्तहिंसयो ह यमे ना शमन वधे त्रि

**शमी**—शमी सक्तुफलाया च शिम्बिकाया च वागुजौ, मे शमी सक्तुफलाया च शिम्बायामपि वल्गुलौ वि शमी द्रुभदे वल्गुल्या शिम्ब्याम हे

**शम्पा**—शम्पा विद्युत्पवि शम्पा शम्पा शङ्खध्वनिर्मत, अने

**शम्पाक**—शम्पाकस्तु वियाते स्याद्याचके चतुरङ्गुले, हे v सम्पाक

**शम्ब**—शम्ब स्यान्मुसलाग्रस्थलौहमण्डलके पवौ। शुभान्विते त्रिपु मे शम्ब स्यान्मुसलाग्रस्थलौहमण्डलक पवौ। शुभान्विते च, वि शम्ब पवौ लोहकाञ्च्याम् हे शम्बस्तु मुसलानने। कल्याणवति वज्रे च, त्रि

**शम्बर**—शम्बर सलिले पुसि मृगदैत्यविशेषयो। शम्बरी चाखुपर्ण्या स्यात मे शम्बर सलिल चित्रबौद्धव्रतविशेषयो। शम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे॥ औषधौ शम्बरीमाहु, वि शम्बर जल। चित्रे बौद्धव्रतभेदे शम्बरो दानवान्तर। मत्स्यैणगिरिभिदपु शम्बरी पुनरौषधौ, हे शम्बर सयमे जले। शम्बरो दैत्यहरिणौ त्रि

**शम्बल**—शम्बलोऽस्त्री सम्बलवत्कुलपाथेयमत्सरे, मे. शम्बलं कुलपाथेय-मत्सरेषु समीरितम्, वि. शम्बलं मत्सरे तटे। पाथेये, हे.

**शम्बू(म्बु)क**—शम्बूको गजकुम्भान्ते घोङ्के च शूद्रतापसे। जलजन्तुविशेषे च शम्बूका न नपुंसकम्, मे. शम्बूको गजकुम्भान्ते दैत्यभेदे च घोङ्के, वि. शम्बूको दैत्यविशेषे करिकुम्भान्तशङ्खयो, हे.

**शम्भु**—शम्भु पुंसि महादेवे परमेष्ठिनि चार्हति, मे शम्भुर्ब्रह्मार्हतोर्हरे, वि. शम्भुर्ब्रह्मार्हतो शिवे, हे शम्भू ब्रह्मत्रिलोचनौ, अ शम्भू ब्रह्म-महेश्वरौ, अने.

**शयः**—शय शय्याहिपाणिषु, मे., वि.

**शयथ**—शयथः स्यादजगरे निद्रालौ मरणेऽपि च, हे

**शयन**—शयनं सुरते निद्राशय्ययोश्च नपुंसकम्, मे शयनं सुरते निद्राशय्य-योरपि भाषितम्, वि. शयन स्वापशय्ययो.। रते, हे.

**शयालु**—शयालुः स्यादजगरे निद्राशीले च कुक्कुरे, मे शयालु. स्यादजगरे निद्राशीलेऽपि कुक्कुरे, वि. शयालुस्तु निद्रालौ वाहसे शुनि, हे. शयालु कुक्कुरे-ऽलसे, त्रि.

**शय्या**—शय्या स्याच्छयनीये च गुम्फनेऽपि च योषिति, मे शय्या तल्पे शब्दगुम्फे, वि, हे. विज्ञेयं शयनं शय्या शय्या पुस्तकसञ्चय, अने

**शर**—शरस्तेजनके बाणे दध्यग्रे ना शर जले, मे शरं नीरे शर काण्डे शर-स्तेजनकेऽपि च, वि. शर जले। शर पुनर्दधिसरे काण्डतेजनयोरपि, हे. v सर.

**शरण**—शरणं गृहरक्षित्रोर्वधरक्षणयोरपि, मे. शरणं वधरक्षित्रोः शरणं रक्षणे गृहे, वि. शरणं रक्षणे गेहे वधरक्षकयोरपि, हे शरणं गृहरक्षित्रोः, अ. शरणं मारणेऽपि च, त्रि.

**शरण्ड**—शरण्डस्तु पुमान् धूर्ते शरटे भूषणान्तरे, मे. सरण्ड. सरटे धूर्ते सरण्डो भूषणान्तरे, वि. शरण्डः स्यात्कृकलासे भूषणान्तरधूर्तयोः, हे.

**शरण्यु**—शरण्युर्वारिदे वाते, वि. v. सरण्यु.

**शरद्**—शरदस्त्री वत्सरेऽप्यृतौ, मे. शरत्संवत्सरे ऋतौ, वि. शरद्वर्षात्यये वर्षे, हे. ऋतौ वत्सरे शरत्, अ. शरत्संवत्सरेऽपि च, हा.

**शरभ**—शरभस्तु पशोर्भिदि। करभे वानरभिदि, मे. शरभस्त्वष्टापदे मृगान्तरे, वि.

**शरवाणि**—शरवाणिः शरमुखे पापिष्ठे शरजीविनि, मे, वि शरवाणिः शरमुखे पदातौ शरजीविनि, हे.

**शरु**—शरुर्ना कोपवज्रयो, मे शरु कुलिशकोपयो, वि शरु कोपे शरे वज्रे, हे

**शर्करा**—शर्करा खण्डविकृतावुपलाकर्पराशयो। शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च, मे, वि शर्करा खण्डविकृतौ कर्पराशे रुगन्तरे। उपलाया शर्करायुग्देशेषु शकलेऽपि च, हे शर्करा कर्पराशेऽपि, अ

**शर्वरी**—शर्वरी यामिनीस्त्रियो, मे शर्वरी रात्रियोषितो। हरिद्राया च, वि शर्वरी निशि नार्या च, हे

**शल**—शलस्तु शलले पुंसि भृङ्गिक्षेत्रभिदोर्विधौ, मे शल तु शल्लकीलोम्नि शलो भृङ्गिगणे विधौ, वि

**शलाका**—शलाका शल्यमदनशारिकाशल्लकीषु च। छत्रादिकाष्ठीशरयो, मे शलाका शारिका शल्य श्वाविदालेख्यकूर्चिका, हे स्याच्छलाकाऽपि मदनशारिकाशल्ययो शरे। छत्रपञ्जरकाष्ठया च वि

**शलि**—शलिर्मुख शलिर्गर्भ शलिर्भृङ्ग शलिर्गद। शलि सर्पविशेषश्च शलि कलिरुदाहृत अने

**शल्क**—शल्कन्तु शकले वल्के मे शल्क शकलवल्कयो, वि द्वे शल्के शकलवल्कले अ शल्कश्चूर्णेऽपि त्रि v वल्क

**शल्य**—शल्यन्तु न स्त्रिया शङ्कौ क्लीव क्ष्वेडेषु तोमरे। मदनद्रुश्वाविधोर्ना, मे शल्य शङ्कौ शरे वशकम्बिकाया च तोमरे। शल्यस्तु कथित श्वाविन्मदनद्रुमयोरपि वि शल्य स्यान्मदनद्रुमे। नृपभेदे श्वाविधि च सीम्नि शस्त्रशलाक्यो, हे शलाकायुधयो शल्यम् ह

**शल्लकी**—शल्लकी पशुवृक्षयो मे वि श्वाविद्वृक्षौ च शल्लक्यौ, त्रि

**शव**—*शव स्यात्कुणपे पुमान्। शव पानीये,* मे शवो मृते शव नीरे वि

**शवर**—शवरो म्लेच्छभेदे च पानीये शङ्करेऽपि च, मे शवरो वारिचण्डालभेदयो शङ्करेऽपि च, वि शवरो म्लेच्छभेदेऽप्सु हरे, हे शवर सलिले शिवे, त्रि

**शश**—शशो बोले लोध्रे नृपशुभेदयो, मे शशो गन्धरसे लोध्रे स्यात्पशौ पुरुपान्तरे, वि शश पशौ बोले लोध्रे नृभेदे च, हे

**शशविन्दु**—शशविन्दु पुमान्वासुदेवे राजान्तरेऽपि च, मे

**शशिलेखा**—शशिलेखा कलाभागे गुडूचीवृत्तभेदयो, मे शशिलेखा कलाभागे वाकुचीवृत्तभेदयो, वि शशिलेखा वृत्तभेदे वाकुचीचन्द्रलेखयो, हे

**शश्वत्**—शश्वत्स्यादात्मप्रश्ने च मङ्गले। पुराकल्पे मदार्थे च पुनरर्थे च

दृश्यते, मे शश्वत्पुन सदार्थयो, वि शश्वत्सहपुनर्नित्ये, हे पुन सहार्थयो शश्वत्, अ

**शष्प**—शष्प बालतृणे स्मृतम्। पुंसि स्यात्प्रतिभाहानौ, मे शष्प स्यात्प्रतिभाहानौ शष्प बालतृणेऽपि च, वि शष्पन्तु प्रतिभाहीनताया बालतृणेऽपि च, हे शष्प बालतृण प्रोक्तम्, अने

**शस्त**—शस्त क्षेमे प्रशस्ते च, मे, वि, हे

**शस्त्र**—शस्त्र लोहास्त्रयो क्लीव छुरिकायान्तु योषिति, मे शस्त्र लोहास्त्रयो शस्त्री क्षुरिकाया च विश्रुता, वि शस्त्रमायुधे। लोहे शस्त्री छुरिकायाम्, हे शस्त्रमायुधलोहयो, अ

**शस्य**—शस्य शस्ते फले गुणे, वि

**शाक**—शाको द्वीपान्तरेऽपि च। शक्तौ द्रुमविशेषे च पुमान् हरितकेऽस्त्रियाम्, मे शाको द्वीपे नृपे द्रुमे। शक्तौ हरितके चापि, हे शाको द्वीपान्तरे शक्तौ नृपद्रुमविशेषयो। शाक हरितके चापि, वि v मोक्ष

**शाकट**—शाकट शकटस्येदमित्यर्थे तस्य वोढरि, मे

**शाखा**—शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयो, मे शाखा द्रुमाशे वेदाशे भुजे पक्षान्तरेऽन्तिके, हे शाखा पक्षान्तरे भुजे। शाखा वेदविभागे च पादपाङ्गेऽन्तिकेऽपि च, वि शाखा वेदविभागेऽपि, त्रि

**शाखिन्**—शाखी स्यात्पादपे वेदे तुरुष्काख्यजने पुमान्, मे शाखी स्यात्पादपे वेदे तुरुष्काख्यजनेऽपि च, वि शाखी तु द्रुमवेदयो। राजभेदे, हे

**शाङ्कर**—शाङ्करस्तु बलीवर्दे छन्दोभेदे नपुसकम्, मे शाङ्करो वृषभे छन्दोविशेषे शाङ्कर मतम्, अने, v शार्कर

**शाङ्करि**—शाङ्करि पुंसि कार्तिकेये गणाधिपे, मे शाङ्करिर्विघ्नपे स्कन्दे, वि

**शाण**—शाणो माषचतुष्टये। लोहादीना च निकषे शाणी प्रावरणान्तरे, मे शाणो मासचतुष्टये। कषणे करपत्रे च शाणी प्रावरणान्तरे, वि शाण कषे मानभेदे, हे कषे माषचतुष्के च शाण, त्रि

**शाण्डिल्य**—शाण्डिल्य पावकान्तरे। मुनिभेदे च मालूरे, मे शाण्डिल्यो मुनिभेदे स्यान्मालूरे पावकान्तरे, वि शाण्डिल्य पावकान्तरे। विल्वे मुनौ च, हे शाण्डिल्यौ मुनिमालूरौ, त्रि

**शात**—शात शितञ्च दुर्बले। निशिते च, मे दुर्बले निशिते स्याता शितशातौ, त्रि शित शातञ्च निशिते कृशे। शात शर्मणि, वि

**शातकुम्भ**—शातकुम्भ सुवर्णे स्याच्छातकुम्भोऽश्वमारके, मे, वि शातकुम्भोऽश्वमारके। शातकुम्भन्तु कनके, हे

**शात्रव**—शात्रव भावसहत्यो शत्रूणा शात्रवो द्विषि, मे, वि शात्रव शत्रुसञ्चये। शत्रुत्वे शात्रव शत्रौ, हे

**शाद**—शाद स्यात्कर्दमे शष्पे, मे शाद कर्दमशष्पयो, वि, हे शादो जम्बालशष्पयो, अ शाद शष्पे, ह

**शान्त**—शान्तोऽभियुक्तरसयो पुसि त्रिपु शमान्विते। अव्यय वारणे शान्तम्, मे शान्तो रसविशेषे स्यादतिमुक्तवदान्तयो, वि शान्तो दान्ते रसान्तरे, हे

**शान्ति**—शान्ति स्त्री मङ्गले शमे, मे शान्ति शमे च कल्याणे, वि शान्तिर्भद्रे शमेऽर्हति, हे शान्ति स्यान्मङ्गले शमे, त्रि

**शाप**—शाप आक्रोशदिव्ययो मे शाप शपथ आक्रोशे वि, हे आक्रोशे शपथे शाप, त्रि

**शार**—शार स्याच्छबले वाच्यलिङ्ग पुसि समीरणे। अक्षोपकरणे, मे शार शवलवातयो। द्यूतस्य चोपकरणे ह शारो वायौ स तु त्रिपु कर्बुरे, अ शार शवलवातयो, वि

**शारद**—शारदोऽब्दे स्त्रिया तोयपिप्पलीसप्तपर्णयो। सस्ये क्लीव शरज्जातनूतनाप्रतिभे त्रिपु मे शारद पीतमुद्गे स्याच्छालीनेऽप्रतिभे नवे। वर्षेऽथ जलपिप्पल्या सप्तपर्णे च शारदी वि शारदो वत्सरे नवे। शरद्भवे पीतमुद्गे शालीनेऽप्यथ शारदी। सप्तपर्ण्यम्बुपिप्पल्यो हे द्वौ तु शारदौ प्रत्यग्राप्रतिभौ, अ शारदो जलदेऽपि च। स्त्रिया च शारदी तोयपिप्पलीसप्तपर्णयो, त्रि शारदस्तु शरत्काल स्यादधृष्टस्तु शारद अन

**शारि**—शारिर्नाऽक्षोपकरणे स्त्रिया शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च मे शारि कुञ्जरपर्याणे शकुनौ द्यूतसाधने, हे पर्याणेऽक्षोपकरणे शारि शकुनिकान्तरे त्रि शारिरक्षोपकरणे तथा शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारेऽपि च क्वनित वि

**शारीर**—शारीर देहजे वृषे, मे, हे वि

**शार्कक**—शार्कक स्याद्दुग्धफेनशर्करापिण्डयो पुमान्, मे शार्कक शर्करापिण्डे दुग्धफेने च शार्कक, वि शार्कक स्याद्दुग्धफेने शर्करायाश्च पिण्डके, हे

**शार्कर**—शार्कर स्याद्दुग्धफेनशर्करान्वितदेशयो, मे शार्करो दुग्धफेनेऽपि शर्करान्वितदेशवत्। शार्करो वृषभे छन्दोविशेषे शार्कर मतम्, वि शार्करम्। छन्दोभिच्छार्करस्तूक्षा, हे v शाङ्कर

**शार्ङ्ग**—शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने, मे., वि. शार्ङ्गं विष्णुधनुर्धनुः, हे. शार्ङ्गं धनुर्विष्णुधनुः, त्रि.

**शार्दूल**—शार्दूलो राक्षसान्तरे। व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थित, मे., वि., हे.

**शार्वर**—शार्वरस्त्वन्धतमसे घातुके भेद्यलिङ्गकम्, मे., अ. शार्वरं त्वन्धतमसे शार्वरो घातुकेऽन्यवत्, वि. शार्वरं घातुके ध्वान्ते, हे.

**शाल**—शालो हालनृपे मत्स्यप्रभेदे सर्जपादपे। शाला गृहे तरुस्कन्धशाखागारैकदेशयो, वि. शाला द्रुस्कन्धशाखाया गृहगेहैकदेशयोः। ना क्षपे, मे. शालो हाले मत्स्यभेदे शालौकस्तत्प्रदेशयोः। स्कन्धशाखायाम्, हे. शाला स्याद् गृहशाखयोः। तरजातौ मत्स्यभेदे शालो हाले नृपेऽपि च, त्रि. शाला श्लाघा शिला शाला शाला शाखा च वेश्म च, अने. v मोक्ष.

**शालङ्कायन**—शालङ्कायन उद्दिष्टो मुनिभेदे च नन्दिनि, मे. शालङ्कायनशब्दः स्यादृषिभेदे च नन्दिनि, वि. शालङ्कायनो नन्द्यृष्यो, हे.

**शालसार**—शालसारो द्रुमे हिङ्गौ, वि v. सालसार.

**शालार**—शालारं स्याद्धस्तिनखे सोपाने पक्षिपञ्जरे, मे, वि. शालारं पक्षिपिञ्जरे। सोपानहस्तिनखयोः, हे.

**शालावृक**—शालावृकः शृगाले स्यात्सारमेये वलीमुखे, मे शालावृक शृगालेऽपि सारमेये वलीमुखे, वि. शालावृको वलीमुखे। सारमेये शृगाले च, हे. शालावृकाः कपिक्रोष्टुश्वानः, अ. शालावृकौ कपिश्वानौ, हा

**शालि**—शालिस्तु कलमादौ च गन्धमार्जारके पुमान्, मे. शालिस्तु गन्धमार्जारे कलमादिषु च स्मृतः, वि. शालिस्तु गन्धोतौ कलमादिषु, हे शालिर्गन्धमृगे धान्ये, त्रि.

**शालु**—शालुः कषायद्रव्ये स्याच्चौरकाख्यौषधे पुमान्, मे. शालु कषायद्रव्ये स्याच्चौरकाख्यौषधेऽपि च, हे., वि.

**शालेय**—शालेयः स्यान्मिसौ पुमान्। त्रिषु शाल्युद्भवे क्षेत्रे, मे. शालेय शतपुष्पायामाहुः शाल्युद्भवोचिते, वि. शालेय शतपुष्पाह्वयौषधे। क्षेत्रे च शालिधान्यस्य, हे.

**शाल्मलि(ली)**—शाल्मलिस्तरुभेदे स्याद् द्वीपभेदेऽपि च द्वयोः, मे. शाल्मली तरुभेदे स्याद् द्वीपभेदे च शाल्मली, वि. शाल्मलिः पादपे द्वीपे, हे.

**शावर**—शावरो मूकनिम्ब्यां स्यात्पुमि पापापराधयोः। रोध्रे च, मे.

शावर पठ्यते रोध्रे तथा पापापराधयो । शावरी शूकशिम्ब्या च, वि शावरो रोध्रपापयो । अपराधे शावरी तु शूकशिम्ब्या च, हे

**शासन**—शासन राजदत्तोर्व्या लेखाज्ञाशास्त्रशास्तिपु, मे, वि शासन नृप दत्तोर्व्या शास्त्राज्ञालेखशास्तिपु, हे

**शास्तृ**—शास्ता समन्तभद्रे ना शासने पुनरन्यवत्, मे शास्ता जिने शासके च, हे शास्ता च शासके बुद्धे, वि

**शास्त्र**—शास्त्र न द्वयोरागमाज्ञयो, मे शास्त्र ग्रन्थनिदेशयो, वि, हे निदेशग्रन्थयो शास्त्रम्, अ

**शिखण्ड**—शिखण्डो बर्हचूडयो, मे, वि, हे शिखण्डौ च शिखाबर्हौ, त्रि जटाजूटे शिखण्डोक्ति कलापेऽपि शिखण्डिन, अने

**शिखण्डिन्**—शिखण्डिनी यूथिकाया गुञ्जायामपि योषिति। शिखण्डी ना कलापे स्याद् गाङ्गेयारिमयूरयो, मे शिखण्डी तु मयूरे स्याद्वाणक्षत्रियभेदयो। कलापे चाथ गुञ्जाया यूथिकाया शिखण्डिनी, वि शिखण्डी कुक्कुटे चित्रमेखले बर्हिबर्हयो । भीष्मारौ वाणे हे मयूरे भीष्मशत्रौ च शिखण्डी, त्रि

**शिखर**—शिखरोऽस्त्री द्रुमाग्राद्रिशृङ्गे पुलककक्षयो । पक्वदाडिमवीजाभ माणिक्यशकलाग्रयो मे शिखर शैलवृक्षाग्रकक्षापुलककोटिपु । पक्वदाडिमवीजाभ माणिक्यशकलेऽपि च वि त्रि शिखर पुलकाग्रयो । पक्वदाडिमवीजाभमाणिक्य-शकलेऽपि च। वृक्षाग्रे पर्वताग्रे च, हे

**शिखरिणी**—अथो शिखरिणी रसालावृत्तभेदयो । नारीरत्ने मल्लिकाया रोमावल्यामपि स्त्रियाम् मे शिखरिणी स्याद्रोमाल्या रसालावृत्तभेदयो । स्त्रीरत्ने मल्लिकाया च प्रोक्ता शिखरिणी बुधै, वि शिखरिणी वृत्तभेदे रोमाली-पेयभेदयो । स्त्रीरत्ने मल्लिकाया च, हे

**शिखरिन्**—शिखरी स्यादपामार्गे शैलपादपयो पुमान्, मे शिखरी पादपे शैले तथाऽपामार्गकोट्टयो, वि शिखरी कोट्टकोयोष्टयोर्द्रुमेऽपामार्गशैलयो हे तरुशैलौ शिखरिणौ, अ

**शिखा**—शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफाया च ज्वालाया प्रपदेऽपि च, मे शिखाऽग्रमात्रे चूडाया केकिचूडाप्रधानयो । ज्वालाया लाङ्गलिकाया शिफाशाखाघृणिष्वपि, हे शिखा शिफाया चडाया ज्वालायामग्र-मात्रके। लाङ्गलिक्या च शाखाया चूडाया च शिखण्डिन, वि घृणिज्वाले अपि शिखे, अ शिखा चूडाग्रयोरपि, त्रि

**शिखिन्**—शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुसि शिखा-

वत्यन्यलिङ्गकः, मे. शिखी वह्नौ वलीवर्दे शरे केतुग्रहे द्रुमे। केकिकुक्कुटयोश्चापि शिखी चूडान्वितेऽन्यवत्, वि. शिखी त्वग्नौ वृक्षे केतुग्रहे शरे। चूडावति वलीवर्दे मयूरे कुक्कुटे हये, हे. शिखिनौ वह्निवर्हिणौ, अ. चूडावान् कुक्कुटश्चापि शिखी, त्रि. शिखिनौ वर्हिपावकौ, अने.

**शिग्रु**—शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे, मे. शिग्रु. शोभाञ्जने शाके, वि., हे.

**शिङ्घाण (सिंहाण)**—शिङ्घाणं काचपात्रे च लोहवासिकयोर्मले, मे. सिंहाणं काचपात्रे च लोहनासिकयोर्मले, वि. सिंहाणं तु घ्राणमलेऽय किट्टे काचभाजने, हे.

**शित**—शितं शान्तौ कृशे तीक्ष्णे, हे. v. शात.

**शिति**—शितिर्भूर्जे ना सितासितयोस्त्रिषु, मे. शिति. कृष्णे शितिर्भूर्जे, वि. शितिर्भूर्जे सितेऽसिते, हे. शिती धवलमेचकौ, अ. शितिर्भूर्जे सिते कृष्णे, त्रि.

**शिपिविष्ट**—शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृतः, मे, वि. शिपिविष्टस्तु खल्वाटे दुश्चर्मणि पिनाकिनि, हे. शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे, अ. दुश्चर्मण्यपि निर्दिष्टः शिपिविष्टो मनीषिभि, ह.

**शिफा**—शिफा जटाया सरिति मासिकाया च मातरि, मे., वि. शिफा मातरि मास्यां च जटाया स्यात्सरित्यपि, हे. शिफा शेफालिका ज्ञेया शिफा शाखा शिफा जटा, अने.

**शिर**—शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति, मे. v. सिर.

**शिरस्**—शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च, मे. शिरः प्रधाने सेनाग्रभागमस्तकयोरपि, वि शिरो मूर्धप्रधानयोः। सेनाग्रभागे, हे.

**शिल**—शिलमुञ्छे स्याद् गण्डूपद्यां शिली मता। स्तम्भशीर्षे शिलाशिल्यौ शिला तु प्रस्तरे मता। तथा मन.शिलाया च द्वाराध.स्थितदारुणि, मे शिला कुनट्या दृषदि द्वाराध.स्थितदारुणि। शिलं शिली भवेदुञ्छे गण्डूपद्या यथाक्रमम्, वि. शिलमुञ्छ. शिला द्वाराधोदारु कुनटी दृषत्। शिली गण्डूपदी, हे.

**शिलाटक**—शिलाटकः पुमानट्टे विलेपे परिकीर्तितः, मे. शिलाटकः शिलाट्टयोः, वि., हे. शिलाटको विलेपेऽट्टे, त्रि.

**शिलि**—v. शिल.

**शिलीन्ध्र**—शिलीन्ध्रं कदलीपुष्पे कवके ना झषान्तरे। द्रुभेदे स्त्री तु विहगीभेदे गण्डूपदीमृदोः, मे. शिलीन्ध्रं कदलीपुष्पे कवकत्रिपुटाख्ययोः। शिलीन्ध्रः कथितो धीरैस्तरमीनप्रभेदयोः॥ गण्डूपदीमृदि प्रोक्ता शिलीन्ध्री विहगीभिदि, वि. शिलीन्ध्रस्तु तरमीनप्रभेदयोः। शिलीन्ध्र कदलीपुष्पे कवकत्रिपुटाख्ययोः।

शिलीन्ध्री विहगी गण्डूपदी मृत्, हे छत्रके वृक्षजातौ च शिलीन्ध्र कथ्यते बुधैः, ह

**शिलीमुख**—शिलीमुखोऽलिकाण्डयो, मे शिलीमुखोऽलिवाणयो, वि शिलीमुखोऽलौ वाणे च, हे अलिवाणौ शिलीमुखौ, अ भृङ्गवाणौ शिलीमुखौ, अने

**शिल्प**—शिल्प स्रुवे क्रियायोगे, मे, वि शिल्प स्रुवे क्रियादिके, हे

**शिल्पिन्**—शिल्पी तु वाच्यवत्कारौ स्त्रिया कोलदलौपधौ, मे शिल्पी स्याद्वाच्यवत्कारौ नखिकाया च शिल्पिनी, वि

**शिव**—शिवो मोक्षे महादेवे कीलकग्रहयोगयो। वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान्॥ सुखक्षेमजले क्लीव शिवा झाटामलौपधौ। अभयामलकीगौरीफेरुसक्तुफलासु च, मे शिव मोक्षे शुभे भद्रे सलिलेऽथो शिवो हरे। वेदे योगान्तरे कीले वालुके गुग्गुलेऽपि च। पुण्डरीकद्रुमे चापि शिवा झाटामलौपधौ। अभयामलकीगौरीक्रोष्ट्रीसक्तुफलासु च, वि शिवन्तु मोक्षे क्षेमे सुखे जले। शिवो योगान्तरे वेदे गुग्गुलौ वालुके हरे। पुण्डरीकद्रुमे कीले शिवा झाटामलोमयो। फेरौ शम्या पथ्याधात्र्यो, हे शिवा गौरीफेरवयो, अ शिव भद्र शिव शम्भु शिवा गौरी शिवाऽभया। शिव कील शिव क्रोष्टा भवेदामलकी शिवा अने

**शिवकीर्तन**—शिवकीर्तनस्तु पुंसि भृङ्गरीटे मुरद्विपि, मे शिवकीर्तननामाऽपि भृङ्गरीटे मुरद्विपि, वि

**शिवि**—शिविर्भूर्जे नृपे पुमान्, मे शिविर्भूर्जे नृपान्तरे, वि, हे

**शिशिर**—शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिपु, मे शिशिर स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्, वि शिशिर शीतले हिमे। ऋतुभेदे, हे

**शिशुक**—शिशुक शिशुमारे स्याद्बालकोलूपिनोरपि, मे, वि शिशुक पादपे वाले शिशुमारे, हे. शिशुक शिशुमारेऽपि, त्रि.

**शिशुमार**—शिशुमारोऽम्बुसम्भूतजन्तौ तारात्मकाच्युते, वि, मे

**शिष्प**—शिष्प क्रोधे वलात्कृतौ, वि v खष्प

**शीकर**—शीकर शवले वातसृताम्बुकणयो पुमान्, मे शीकर शवले वातसृताम्बुकणयोर्विदु, वि अथ शीकर। वातास्तजलेऽम्बुकणे, हे

**शीघ्र**—शीघ्र नलदे चक्राङ्गे क्लीव द्रुतगतौ त्रिपु, मे शीघ्र द्रुतगतौ शीघ्र चक्राङ्गोशीरयोरपि, वि शीघ्र चक्राङ्गतूर्णयो। उशीरे, हे

**शीत**—शीत हिमगुणे क्लीव शीतलालसयोस्त्रिपु। वानीरे बहुवारे ना, मे

शीतो हिमे च जिह्मे च वानीरबहुवारयोः। शीतं गुणे, हे. शीतस्तु वानीरबहु-वारयोः। शीतं हिमगुणे प्रोक्तं वाच्यवच्छीतलेऽलसे, वि. वेतसेऽपि च शीतो ना, त्रि.

**शीतक**—शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि, मे, वि. अथ शीतकः। शीतकालेऽलसे स्वस्थे, हे.

**शीतचम्पक**—शीतचम्पक इत्येष स्यादातर्पणदीपयोः, मे शीतचम्पकशब्दोऽयं स्यादातर्पणदीपयोः, वि. शीतचम्पको दीपतर्पणे, हे.

**शीतमयूख**—शीतमयूखश्चन्द्रे घनसारे चापि पुलिङ्गः, मे शीतमयूखोऽपि शशाङ्कघनसारयोः, वि. शीतमयूखः कर्पूरे चन्द्रे, हे.

**शीतल**—शीतलं पुष्पकाशीसे शैलजे मलयोद्भवे। पुमानासनपर्ण्यां स्याच्छि-शिरे वाच्यलिङ्गकः, मे. शीतलं पुष्पकासीसे शैलजे मलयोद्भवे। भवेदासनपर्ण्यां च शीतलः शिशिरेऽन्यवत्, वि शीतल शिशिरेऽर्हति। श्रीखण्डे पुष्पकाशी-शतालपर्ण्योः शिलोद्भवे, हे. शीतलः शिशिरेऽनिले, त्रि.

**शीतशिव**—अथ शीतशिव क्लीवं शैलेयमणिमन्थयोः। पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधे, मे. विदुः शीतशिवं शम्या शैलेयशतपुष्पयो। सैन्धवेऽपि, वि

**शीन**—शीनो मूर्खे चाजगरे, मे. शीनोऽजगरमूर्खयो, वि. शीनो मूर्खा-जगरयोः, हे.

**शीर्ण**—शीर्णं तनुविशीर्णयोः, मे., वि.

**शीर्षण्य**—स्याच्छीर्षण्यन्तु शीर्षके। सुकेशे पुंसि, मे. शीर्षण्यमाहुर्विशद-केशशीर्षकयोरपि, वि. शीर्षण्यं शीर्षरक्षणे। शीर्षण्यो विशदे केशे, हे

**शील**—शीलं स्वभावे सद्वृत्ते, मे., वि., अ शीलं साधुवृत्तस्वभावयो., हे

**शीवल**—शीवलं स्याच्च शैवाले शैलेये च नपुंसकम्, मे. शीवलाख्या तु शैवाले शैलेयेऽपि च शीवलम्, वि.

**शुक**—शुको व्याससुते कीरे रावणस्य च मन्त्रिणि। शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्, मे शुको व्यासजकीरयो.। रक्षोऽमात्ये शुकं ग्रन्थिपर्णे रेणु-शिरीषयो॰, हे. शुको व्याससुते कीरे रावणस्य च मन्त्रिणि। ग्रन्थिपर्णे शिरीषे च शुकं स्याच्छ्रोणके क्वचित्, वि. शुकं ग्रन्थिशिरीषयोः। क्लीव रावणपात्रे ना, त्रि.

**शुक्त**—शुक्तं पूताम्लनिष्ठुरे, मे. शुक्तमम्ले पूतीभूते च वर्ज्ये, हे. शुक्तोऽम्ले परुषे पूते, वि. द्वौ चाम्लपरुषौ शुक्तौ, अ शुक्तं पूताम्लनिष्ठुरम्, त्रि

**शुक्ति**—शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च। नख्यस्यावर्त्तदुर्नाम-

मुक्तास्फोटेषु च स्त्रियाम्, मे शुक्ति कपालशकले नख्यश्वावर्तयोरपि। मुक्तास्फोटे च दुर्नामिशङ्खशङ्खनखेषु च, वि शुक्ति शङ्खनखे शङ्खे कपालखण्ड-दृग्रुजो। नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि, हे शुक्तिर्मुक्तास्फोटाश्व-लक्ष्मणो, त्रि

शुक्र—शुक्र स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदो क्लीवम्, मे शुक्र काव्येऽनले ज्येष्ठे शुक्रो रेतोऽक्षिरोगयो। शुक्रम्, वि शुक्रस्तु शुक्रे ज्यैष्ठमासेऽग्निकाव्ययो। शुक्रन्तु रेतोऽक्षिरुजो, हे शुक्र रेतोऽक्षिरुक् शुक्रो ना काव्यज्येष्ठवह्निषु, त्रि शुक्र देहवता बीज शुक्रमक्षिरज विदु। ज्यैष्ठमास स्मृत शुक्र शुक्रो दैत्यपुरोहित, अने

शुक्ल—शुक्लो योगान्तरे सिते। नपुसकन्तु रजते, मे शुक्लो योगान्तरे श्वेते शुक्ल च रजते मतम् वि शुक्ल रूप्ये शुक्लो योगे श्वेते, हे

शुङ्ग—शुङ्गो वटाम्रातकयो पर्कट्यामपि च स्त्रियाम्, मे शुङ्गी वटाम्रातकयो पर्कट्यामपि विश्रुता, वि शुङ्गचाम्राते वटे प्लक्षे, हे

शुचि—शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुसि धवले शुद्धेऽनुपहते त्रिषु मे शुचि शुद्धेऽनुपहते शृङ्गाराषाढयो सिते। ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि, वि शुचि शुद्धे सितेऽनले। ग्रीष्माषाढाऽनु-पहतेषूपधाशुद्धमन्त्रिणि। शृङ्गारे, हे पावके शुचि। मास्यमात्ये चात्युपधे पुसि मेध्ये सिते त्रिषु अ ग्रीष्मानलौ शुची त्रि मास्याषाढे विशुद्धेऽग्नौ शुक्लेऽनुपहते शुचि, अने शुक्लेऽपि शुचिरामौ, ह

शुण्ड—शुण्डा पानगृहे मता। अप्यम्बुहस्तिनीवेश्याहस्तिहस्तसुरासु च, मे शुण्डाऽपि जलहस्तिन्या मदिराकरिहस्तयो। नलिन्या वारयोषाया शुण्डस्तु मद निर्झरे, वि शुण्डा करिकर सुरा। जलेभी नलिनी वारस्त्री शुण्डो मदनिर्झरे, हे शुण्डा करिकर सुरा, त्रि कुञ्जरकरेऽपि शुण्डा, ह

शुद्ध—शुद्ध स्यात्त्रिषु केवले। निर्दोषे च पवित्रे च, मे शुद्ध केवलपूतयो हे शुद्ध त्रिषु पूतकेवलयो, त्रि

शुद्धान्त—शुद्धान्तोऽन्त पुरे क्ष्माभृद्रह कक्षान्तरेऽपि च, मे शुद्धान्तोऽन्त पुरे राज्ञो रह कक्षान्तरेऽपि च, वि शुद्धान्त स्याद्रह कक्षान्तरे राज्ञोऽवरोधने, हे कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे, अ

शुभ—शुभो योगे शुभ क्षेमे वाच्यवत्क्षेमशालिनि। खसञ्चारिपुरे स्त्री तु, मे शुभो योगे शुभ क्षेमे, वि, हे शुभा सुधा शुभा सभा स्नुहीक्षीर शुभा मता। शुभ क्षेम शुभा शोभा शुभा स्याता हरीतकी, अने

शुभ्र—शुभ्रं स्यादभ्रके क्लीवमुद्दीप्तशुक्लयोस्त्रिषु, मे. शुभ्रं प्रदीप्ते धवलेऽभ्रके च, वि. शुभ्रं दीप्तेऽभ्रके सिते, हे. शुभ्रमुद्दीप्तशुक्लयो , अ.

शुभ्रदन्ती—शुभ्रदन्ती सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति, मे., वि.

शुल्क—शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहे स्त्रियाम्, मे. शुल्कं घट्टादिदातव्ये जामातुश्चापि बन्धके, हे. शुल्कं घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च, वि. शुल्को यौतुकदानयोः, त्रि. शुल्कं नारीधनेऽपि च, हा. पथिदेये स्त्रीधने च शुल्कं स्यात्, ह

शुल्व—शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ, मे., हे.

शुश्रूषा—शुश्रूषा स्यादुपासने। कथने श्रोतुमिच्छायाम्, मे. शुश्रूषा श्रोतुमिच्छायां परिचर्याकथानयोः, वि. शुश्रूषोपासनाश्रवणेच्छयोः, हे. शुश्रूषा परिचर्या च, त्रि.

शुषि—शुषिः शोषे विले स्त्री स्यात्, मे. शुषिः शोषे विलेऽपि च, वि. शुषि. शुषिरशोषयोः, हे.

शुषिर—शुषिरं वंशादिवाद्ये विवरेऽपि नपुंसकम्। मूषिके ना स्त्रिया नल्यौषधौ रन्ध्रान्विते त्रिषु, मे. शुषिरं विवरे वाद्ये सरन्ध्रे शुषिरोऽन्यवत्। शुषिरोऽग्नौ च, वि. शुषिरं वाद्यगर्तयोः। शुषिरोऽग्नौ सरन्ध्रे च, हे शुषिरं गर्तवाद्ययो , नि.

शुष्म—शुष्मं तेजसि सूर्ये ना, मे. शुष्मं तेजोऽर्कयोरुक्तम्, वि. शुष्ममोजसि सूर्ये च, हे.

शूक—शूकोऽस्त्री शुङ्गदययो', मे. शकोऽनुक्रोशशुङ्गयो , वि. शूकोऽनुक्रोशकिशार्वोः शोकेऽभिषवशृङ्गयोः। शूका हल्लेखे (?), हे. शूकस्तु स्यादनुक्रोशशुङ्गयोः, त्रि.

शूकक—शूककः प्रावटेऽपि स्याद्रसेऽपि परिकीर्तित., मे. शूककः प्रावटे रसे, वि., हे.

शून्य—शून्यं स्यान्निर्जने वाच्यलिङ्गं नल्यां तु योषिति, मे. शून्याख्या निर्जने नल्याम्, वि. शून्यं बिन्दौ च निर्जने। शून्या तु तूलिका, हे. स्त्री नल्या निर्जने शून्यम्, त्रि.

शूर—शूरः स्याद्यादवे भटे, मे. शूरश्चारभटे सूर्ये, हे., वि.

शूल—शूलोऽस्त्री रोग आयुधे। मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति, मे. शूलं प्रहरणे मृत्यौ केतने रोगयोगयोः। शूला दुष्टवधार्थाय कीलके पण्ययोषिति, वि. शूलं रगस्त्रयोः। योगे शूला तु पण्यस्त्री वधहेतुश्च कीलकः, हे. अस्त्री शूल रगायुधम्, अ.

शृगाल—शृगालो वञ्चके दैत्यभेदे ना डमरे स्त्रियाम्, मे. शृगालो जम्बुके

मुक्तास्फोटेपु च स्त्रियाम्, मे शुक्ति कपालशकले नख्यश्वावर्तयोरपि। मुक्तास्फोटे च दुर्नामिशङ्खशङ्खनखेपु च, वि शुक्ति शङ्खनखे शङ्खे कपालखण्ड दृग्रुजो । नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि, हे शुक्तिर्मुक्तास्फोटाश्वलक्ष्मणो , नि

**शुक्र**—शुक्र स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदो क्लीवम्, मे शुक्र काव्येऽनले ज्येष्ठे शुक्रो रेतोऽक्षिरोगयो । शुक्रम्, वि शुक्रस्तु शुक्रे ज्यैष्ठमासेऽग्निकाव्ययो । शुक्रन्तु रेतोऽक्षिरुजो , हे शुक्र रेतोऽक्षिरुक् शुक्रो ना काव्यज्येष्ठवह्निपु, नि शुक्र देहवता वीज शुक्रमक्षिरज विदु । ज्यैष्ठमास स्मृत शुक्र शुक्रो दैत्यपुरोहित अने

**शुक्ल**—शुक्लो योगान्तरे सिते । नपुसकन्तु रजते, मे शुक्लो योगान्तर श्वेते शुक्ल च रजते मतम् वि शुक्ल रूप्ये शुक्लो योगे श्वेते हे

**शुङ्ग**—शुङ्गो वटाम्रातकयो पर्कटयामपि च स्त्रियाम् मे शुङ्गी वटाम्रातकयो पर्कटयामपि विश्रुता, वि शुङ्गयाम्राते वटे प्लक्षे, हे

**शुचि**—शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वापाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुसि धवले शुद्धेऽनुपहते निपु मे शुचि शुद्धेऽनुपहते श्रृङ्गारापाढयो सिते। ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि वि शुचि शुद्धे सितेऽनले। ग्रीष्मापाढाऽनुपहतेपूपधाशुद्धमन्त्रिणि। श्रृङ्गारे हे पावके शुचि । मास्यमात्ये चात्युपधे पुसि मेध्ये सिते निपृ अ ग्रीष्मानलौ शुची, नि मास्यापाढे विशुद्धेऽग्नौ शुक्लेऽनुपहते शुचि अने शुक्लेऽपि शुचिरामौ ह

**शुण्ड**—शुण्डा पानगृहे मता। अप्यम्वुहस्तिनीवेश्याहस्तिहस्तसुरासु च, मे शुण्डाऽपि जलहस्तिन्या मदिराकरिहस्तयो । नलिन्या वारयोपाया शुण्डस्तु मद निर्झरे, वि शुण्डा करिकर सुरा। जलेभी नलिनी वारस्त्री शुण्डो मदनिर्झरे, हे शुण्डा करिकर सुरा, नि कुञ्जरकरेऽपि शुण्डा, ह

**शुद्ध**—शुद्ध स्यात्त्रिपु केवले। निर्दोपे च पवित्रे च मे शुद्ध केवलपूतयो, हे शुद्ध निपु पूतकेवलयो , नि

**शुद्धान्त**—शुद्धान्तोऽन्त पुरे क्ष्माभृद्रह कक्षान्तरेऽपि च, मे शुद्धान्तोऽन्त पुरे राज्ञो रह कक्षान्तरेऽपि च, वि शुद्धान्त स्याद्रह कक्षान्तरे राज्ञोऽवरोधने हे कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे, अ

**शुभ**—शुभो योगे शुभ क्षेमे वाच्यवत्क्षेमशालिनि। खसञ्चारिपुरे स्त्री तु मे शुभो योगे शुभ क्षेमे, वि हे शुभा सुधा शुभा सभा स्नुहीक्षीर शुभा मता। शुभ क्षेम शुभा शोभा शुभा स्याता हरीतकी, अने

**शुभ्र**—शुभ्रं स्यादभ्रके क्लीवमुद्दीप्तशुक्लयोस्त्रिषु, मे. शुभ्रं प्रदीप्ते धवलेऽभ्रके च, वि. शुभ्रं दीप्तेऽभ्रके सिते, हे. शुभ्रमुद्दीप्तशुक्लयो., अ.

**शुभ्रदन्ती**—शुभ्रदन्ती सुदन्त्यां स्यात्पुष्पदन्तेभयोषिति, मे., वि.

**शुल्क**—शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहे स्त्रियाम्, मे. शुल्कं घट्टादिदातव्ये जामातुश्चापि बन्धके, हे. शुल्कं घट्टादिदेये स्याज्जामातुर्बन्धकेऽपि च, वि. शुल्को यौतुकदानयोः, त्रि. शुल्कं नारीधनेऽपि च, हा पथिदेये स्त्रीधने च शुल्कं स्यात्, ह

**शुल्व**—शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ, मे , हे

**शुश्रूषा**—शुश्रूषा स्यादुपासने । कथने श्रोतुमिच्छायाम्, मे. शुश्रूषा श्रोतुमिच्छायां परिचर्याकथानयोः, वि. शुश्रूषोपासनाश्रवणेच्छयो·, हे. शुश्रूषा परिचर्या च, त्रि.

**शुषि**—शुषिः शोषे विले स्त्री स्यात्, मे. शुषि शोषे विलेऽपि च, वि शुषि· शुषिरशोषयोः, हे.

**शुषिर**—शुषिरं वंशादिवाद्ये विवरेऽपि नपुंसकम् । मूषिके ना स्त्रियां नल्यौपधौ रन्ध्रान्विते त्रिषु, मे. शुषिरं विवरे वाद्ये सरन्ध्रे शुषिरोऽन्यवत् । शुषिरोऽग्नौ च, वि. शुषिरं वाद्यगर्तयोः । शुषिरोऽग्नौ सरन्ध्रे च, हे. शुषिरं गर्तवाद्ययो·, त्रि

**शुष्म**—शुष्मं तेजसि सूर्ये ना, मे. शुष्मं तेजोऽर्कयोरुक्तम्, वि. शुष्ममोजसि सूर्ये च, हे.

**शूक**—शूकोऽस्त्री शुङ्गदययो·, मे. शकोऽनुक्रोशशुङ्गयो , वि. शूकोऽनुक्रोशकिशार्वोः शोकेऽभिषवशृङ्गयोः । शूका हल्लेरवे (?), हे. शूकस्तु स्यादनुक्रोशशुङ्गयोः, त्रि.

**शूकक**—शूककः प्रावटेऽपि स्याद्रसेऽपि परिकीर्तितः, मे. शूककः प्रावटे रसे, वि., हे.

**शून्य**—शून्यं स्यान्निर्जने वाच्यलिङ्गं नल्यां तु योषिति, मे. शून्याख्या निर्जने नल्याम्, वि. शून्यं विन्दौ च निर्जने । शून्या तु तूलिका, हे स्त्री नल्यां निर्जने शून्यम्, त्रि.

**शूर**—शूरः स्याद्यादवे भटे, मे. शूरश्चारभटे सूर्ये, हे., वि.

**शूल**—शूलोऽस्त्री रोग आयुधे । मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति, मे. शूलं प्रहरणे मृत्यौ केतने रोगयोगयोः । शूला दुष्टवधार्थाय कीलके पण्ययोषिति, वि. शूलं रुगस्त्रयोः । योगे शूला तु पण्यस्त्री वधहेतुश्च कीलकः, हे. अस्त्री शूल रुगायुधम्, य.

**शृगाल**—शृगालो वञ्चके दैत्यभेदे ना डमरे स्त्रियाम्, मे. शृगालो जम्बुके

दैत्ये शृगाली डमरे विदु , वि शृगालो दानवे फेरौ शृगाली स्यादुपप्लवे, हृ शृगालो जम्बुको भीरु शृगालो दानवो मत , अने

**शृगालजम्बू**—शृगालजम्बूर्गोडिम्बे तथा घोण्टाफले स्त्रियाम्, मे शृगालजम्बूर्गोडुम्बे क्वापि घोण्टाफलेऽपि च, वि शृगालजम्बूर्गोडिम्बे फले च बदरीतरो , हे

**शृगालिका**—शृगालिका शिवाया स्यात्त्रासादपि पलायने, मे , वि

**शृङ्खल**—शृङ्खला पुस्कटीवस्त्रबन्धे च निगडे त्रिपु, मे शृङ्खला पुस्कटीवस्त्रबन्धेऽपि निगडेऽपि च, वि शृङ्खल पुस्कटीकाञ्च्या लोहरज्जौ च बन्धने, हे निगडे पुस्कटीवद्धवस्त्रे च शृङ्खल त्रिपु त्रि

**शृङ्ग**—शृङ्ग प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विपाणोत्कर्पयोश्चाथ शृङ्ग स्यात्कूर्चशीर्पके। स्त्री विपाया स्वर्णमीनभेदयोर्ऋपभौपधौ मे शृङ्ग प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विपाणोत्कर्पयोश्चाथ शृङ्ग स्यात्कूर्चशीर्पके। शृङ्गी विपायामृपभे स्वर्णमीनविशेपयो , वि शृङ्ग चिह्नविपाणयो । क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्पसानुपु। शृङ्ग कूर्चशीर्पे शृङ्गी स्वर्णमीनविशेपयो । विपायामृपभौपध्याम् हे जलोत्क्षेपे समुत्सर्गे शृङ्गमुत्कर्पचिह्नयो , त्रि *शृङ्ग प्राधान्यसान्वोश्च, अ शृङ्ग प्रधानमिच्छन्ति शृङ्गञ्च शिखर विदु ।* शृङ्ग विपाणमित्याहु शब्दकोशविचक्षणा अने

**शृङ्गाटक**—शृङ्गाटक भवेद् द्वारि कण्टके च चतुष्पथे मे वि शृङ्गाटक पथा श्लेपे पानीयकण्टकेऽपि च हे

**शृङ्गार**—शृङ्गार सुरते नाटचरसे च गजमण्डने। नपुसक लवङ्गेऽपि नागसम्भवचूर्णयो , मे शृङ्गार सुरते नाटचरसेऽपि गजमण्डने। शृङ्गार चूर्णसिन्दूरलवङ्गकुसुमेपु च, वि शृङ्गारो गजमण्डने। सुरते रसभेदे च शृङ्गार नागसम्भवे। चूर्णे लवङ्गपुष्पे च, हे

**शृङ्गारिन्**—शृङ्गारी पूगगजयो सशृङ्गारसुवेशयो , मे शृङ्गारी तु सुवेशे स्यात्क्रमुके च मतङ्गजे, वि शृङ्गारी सुवेशे क्रमुके द्विपे, हे शृङ्गारिणौ त्विभौ। क्रमुकश्च सुवेशश्च, त्रि

**शृङ्गिन्**—शृङ्गी शृङ्गयुते नागे वृपपर्वतयोरपि, मे शृङ्गो नागद्रुमादिपु वि

**शेष**—शेष सकर्पणे वधे। अनन्ते ना प्रसादेन स्वनिर्माल्यार्पणे स्त्रियाम्। उपयुक्तेतरे न स्त्री, मे शेष सकर्पणेऽनन्त उपयुक्तेतरे वधे। प्रसादाग्रिजनिर्माल्यदाने शेपेति कीर्तिता, वि शेपोऽनन्ते वधे शौरिण्युपयुक्तेतरेऽपि च। शेपा निर्माल्यदाने स्यात्, हे शेपो नाऽनन्तसीरिणो । उपयुक्तेतरे त्वस्त्री, त्रि

**शैल**—शैलो भूभृति शैल तु शैलेये तार्क्ष्यशैलके, मे , वि , हे

**शैलाट**—शैलाटो देवले सिंहे शुक्लकाचकिरातयो , मे, वि शैलाटो देवले शुक्लकाचे सिंहकिरातयो , हे

**शैलूष**—शैलूषो नटविल्वयो , मे, त्रि शैलूष कथितो नटविल्वयो , वि शैलूष स्यान्नटे विल्वे, हे

**शैलेय**—शैलेय तालपर्ण्या च सैन्धवे। शैलजे ना तु मधुपे शिलातुल्येऽन्य-लिङ्गकम् मे शलेय सिन्धुलवणे तालपर्ण्या च सिन्धुजे। चञ्चरीके तु शैलेय त्रि शैलेय शैलसम्भवे। सिन्धूत्थे तालपर्ण्या च शैलेयस्तु मधुव्रते हे

**शैवल**—शैवल पद्मकाष्ठे स्याच्छैवाले च पुमानयम मे शैवल पद्मकाष्ठे च शैवल च जलाञ्चले, वि

**शोठ**—शोठो मूर्खेऽलसेऽपि च, मे , वि शोठोऽलसे च मूर्खे च, त्रि

**शोण**—शोण कृशानौ श्योनाके लोहिताश्वे नदे पुमान्। त्रिपु कोकनदच्छाये, मे शोण श्योणाकनदयो शोण कोकनदाकृतौ, वि शोणो नदे रक्तवर्णे स्योनाकेऽग्नौ हयान्तरे, हे शोणो नदेऽरुणे, त्रि पङ्कपक्षारुणौ शोणौ, अने

**शोभन**—शोभनो योगभेदे ना सुन्दरे वाच्यलिङ्गक , मे शोभनो ग्रहयोगे स्याच्छोभन सुन्दरेऽन्यवत्, वि शोभन सुन्दरे योगे, हे

**शोभा**—शोभा कान्तीच्छयोर्मता, मे, हे शोभा कान्तीच्छयोरुक्ता, वि

**शोष**—शोषो यक्ष्मणि शोषणे, मे शोषस्तु शोषणे राजयक्ष्मण्यपि निगद्यते, वि शोष शोषणयक्ष्मणो , हे

**शौक**—शौक शुकगणे स्त्रीणा करणे, मे शौक शुकाना समूहे स्त्रीणा च करणान्तरे, हे शौक शुकसमूहे च स्त्रीणा च करणान्तरे, वि

**शौण्ड**—शौण्डो मत्ते च विख्याते पिप्पल्या च भवेत्स्त्रियाम्, मे शौण्डो मत्ते च विख्याते शौण्डी पिप्पलिचव्ययो , वि शौण्डी चविकपिप्पल्यो शौण्डो विख्यातमत्तयो , हे

**शौर्य**—शौर्यमारभटीशक्त्यो , मे शौर्यं चारभटीशक्त्यो , वि शौर्य चार-भटचा बलेऽपि च, हे, शौर्यं चारभटी बलम्, त्रि

**शौष्कल**—शौष्कल शुष्कमासस्य पणिके पिशिताशिनि, मे , वि , हे

**श्याम**—श्यामो वटे प्रयागस्य वारिदे वृद्धदारके। पिके च कृष्णहरितो पुसि स्यात्तद्वति त्रिपु। मरिचे सिन्धुलवणे क्लीव स्त्री शारिवौषधौ। अप्रसूताङ्गनाया च प्रियङ्गावपि वागुजौ। यमुनाया त्रियामाया कृष्णत्रिवृतिकौषधौ। नीलिकायाम्, मे श्याम स्यान्मेचके वृद्धदारके हरिते घने। वटद्रुमे प्रयागस्य श्याम श्यामा तु

वल्गुलौ। अप्रसूताङ्गनायां च तथा सोमलतौषधौ। त्रिवृताशारिवागुन्द्रानिशा-कृष्णाप्रियङ्गुषु। श्यामा नील्या पिके श्याम मरीचे लवणान्तरे, वि श्यामोऽम्बुदे शितौ। हरिते प्रयागवटे कोकिले वृद्धदारके। श्याम सैन्धवे मरिचे श्यामा सोमलतानिशो। शारिवावागुजीगुन्द्रात्रिवृत्कृष्णाप्रियङ्गुषु। अप्रसूतस्त्रिया नील्याम्, हे त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा, अ श्यामा गुन्द्रा कोकिला च, त्रि श्यामा रात्रिर्दृपच्छचामा श्यामा स्त्री मुग्धयौवना। श्यामा प्रियङ्गुराख्याता श्यामा स्याद्वृद्धदारिका, अने

**श्यामल**—श्यामल पिप्पले कृष्णे, मे श्यामलो मेचकेऽश्वत्थे, वि श्यामल पिप्पले श्यामे, हे

**श्येन**—श्येन पक्षिणि पाण्डुरे, मे श्येन सिते खगे, वि श्येन शुक्ले पतत्रिणि, हे श्येन शुक्ले पक्षिभेदे, त्रि

**श्रद्धा**—श्रद्धादरे च काङ्क्षायाम्, मे श्रद्धा श्राद्धत्वकाङ्क्षयो, वि श्रद्धास्तिक्येऽभिलाषे च, हे श्रद्धा सम्प्रत्यय स्पृहा, अ

**श्रद्धालु**—श्रद्धालुर्दोहदिन्या स्त्री श्रद्धायुक्ते तु वाच्यवत्, मे श्रद्धालुर्दोहदिन्या च श्रद्धायुक्ते तु वाच्यवत्, वि

**श्रम**—श्रम स्वेद श्रम क्रिया, अने

**श्रमण**—श्रमणो यतिभेदे ना निन्दचजीविनि तु त्रिषु। स्त्रिया सुदर्शनामास्योर्मुण्डीरीशवरीभिदो, मे श्रमणो यतिभेदेऽपि श्रमणो निन्दचजीविनि। सुदर्शनामुण्डितिकामासीषु श्रमणा विदु, वि श्रमणस्तु निर्ग्रन्थे निन्दचजीविनि हे श्रमणा भिक्षुक्या मुण्डीर्या च दृश्यते, त्रि

**श्रवण**—श्रवण च श्रुतौ कर्णे नक्षत्रे न नपुंसकम्, मे श्रवण स्यादृक्षभेदे श्रवण श्रुतिकर्णयो, वि श्रवणो नक्षत्रभेदे श्रवण श्रवसि श्रुतौ, हे कर्णे श्रुतौ च श्रवणम्, त्रि

**श्राण**—श्राण पक्वे यवाग्वा स्त्री, मे श्राणा यवाग्वा पक्वे तु श्राणम्, वि पक्वे श्राण यवाग्वा स्त्री, त्रि

**श्राद्ध**—श्राद्ध श्रद्धान्विते त्रिषु। हव्यकव्यविधौ क्लीवम्, मे श्राद्ध श्रद्धासमन्विते। हव्यकव्यविधाने च, हे श्राद्ध निवापे श्रद्धालौ, त्रि

**श्राम**—अथ श्रामो मासे मण्डपकालयो, मे श्रामो मण्डपकालयो, हे, त्रि

**श्रावण**—श्रावणो मासि पाषण्डे दध्याल्या श्रावणा स्त्रियाम्, मे श्रावणो मासि पाषण्डे दध्याल्या श्रावणी मता, वि

**श्री**—श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्या त्रिवर्गसम्पत्तिविधोप-

करणेषु च। विभूतौ च मतौ च स्त्री, मे श्रीर्वेपरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्या त्रिवर्गसम्पत्तौ वेपोपकरणे मता, वि श्रीर्लक्ष्म्या सरलद्रुमे। वेपोपकरणे वेपरचनाया मतौ गिरि। शोभात्रिवर्गसम्पत्त्यो, हे श्रीर्लक्ष्मीवेशसम्पत्सु भारती-शोभयोरपि, त्रि v विभ्रम

**श्रीकण्ठ**—श्रीकण्ठो देशभिद्युग्रे, मे श्रीकण्ठ खण्डपरशौ श्रीकण्ठ कुरुजाङ्गले, वि श्रीकण्ठ कुरुजाङ्गले। शङ्करे च, हे श्रीकण्ठ स्थावर स्थाणु, अने

**श्रीपति**—श्रीपति पुसि पृथिवीनाथे च मधुसूदने, मे श्रीपति क्ष्मापतौ हरौ, वि श्रीपतिर्विष्णुभूपयो, हे

**श्रीपर्ण**—श्रीपर्णी काश्मरीकुम्भ्यो क्लीव पद्माग्निमन्थयो, मे श्रीपर्ण-मग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे, वि, हे श्रीपर्ण कमलेऽपि च, अ श्रीपर्ण गणिकारिका। पद्म च, त्रि

**श्रीफल**—श्रीफल पुसि मालूरे धात्रीनीलिकयो स्त्रियाम्, मे श्रीफली नीलिकाधात्र्योर्मालूरे श्रीफल स्मृत, वि

**श्रीमत्**—श्रीमास्तिलकवृक्षे ना मनोज्ञे धनिके त्रिषु, मे श्रीमास्तिलकवृक्षे स्यान्मनोज्ञे धनिकेऽपि च, वि श्रीमान्मनोज्ञे तिलकपादपे धनवत्यपि हे श्रीमन्तौ तिलकेश्वरौ, त्रि

**श्रीवास**—श्रीवासो वृकधूपेऽपि पङ्कजे मधुसूदने, मे श्रीवासो वृकधूपे स्यात्पङ्कजे पीतवाससि, वि श्रीवास स्याद्वृकधूपे कमले मधुसूदने, हे श्रीवासो विष्णुधूपयो, त्रि

**श्रुत**—श्रुतमाकर्णिते शास्त्रे, मे, हे श्रुत शास्त्रावधृतयो, वि, अ

**श्रुति**—श्रुति श्रौते च तत्कर्मण्याम्नायवार्तयो स्त्रियाम्, मे श्रुति श्रोत्रे तथाम्नाये वार्ताया श्रौतकर्मणि, वि श्रुतिराम्नायवार्तयो। षड्जाद्यारम्भिकाया च कर्णाकर्णनयोरपि, हे (वेदे श्रवसि च श्रुति, अ) वार्ताया श्रवणे श्रुति, त्रि

**श्रुतिकट**—अथ श्रुतिकट प्राञ्चलोहेऽह्रौ पापशोधने, मे श्रुतिकट प्राञ्च-लोहे प्रायश्चित्तभुजङ्गयो, वि प्राञ्चलोहे श्रुतिकट प्रायश्चित्तभुजङ्गयो, त्रि श्रुतिकट प्रायश्चित्ते प्राञ्चलोहभुजङ्गयो, हे प्राञ्चलोहे श्रुतिकट प्रायश्चित्ते सरीसृपे, हा

**श्रेणि(णी)**—श्रेणि स्त्रीपुसयो पक्तौ समानशिल्पिसहतौ, मे श्रेणि पक्तौ सेक्पात्रे श्रेणि स्यात्कारुसहतौ, वि श्रेण्याल्या कारुसहतौ, हे श्रेणि पक्तौ सेक्पात्रे न क्लीव कारुसहतौ, त्रि

**श्रेयस्**—श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्। श्रेयसी करिपिप्पल्या-मभयापाठयोरपि, मे श्रेयस्तु मङ्गले धर्मे श्रेयान् शस्ते तु वाच्यवत्। श्रेयसी करिपिप्पल्यामभयारास्नयोरपि, वि श्रेयस्तु मङ्गले धर्मशस्तयो। श्रेयसी गज-पिप्पल्यामभयारास्नयोरपि, हे

**श्रेष्ठ**—श्रेष्ठो वरे कुवेरे च मे श्रेष्ठोऽग्रये धनदे, हे

**श्लाघा**—श्लाघा स्त्रिया प्रशसाया परिचर्याभिलापयो, मे, वि श्लाघो-पास्तीच्छयो स्तोत्रे हे

**श्लेष्मघना**—श्लेष्मघना मल्ल्या केतक्यामपि योपिति, मे श्लेष्मघना मल्लिकाया केतक्यामपि कथ्यते वि श्लेष्मघना तु केतक्या मल्ल्याम् हे

**श्लेष्मघ्नी**—श्लेष्मघ्नी मल्लिकाया च ज्योतिष्मत्या च योपिति, मे श्लेष्मघ्नी कथिता मल्ल्या कम्पिल्लकफणिज्जयो, वि श्लेष्मघ्नी स्यान्मल्लिकाया कम्पिल्लक-फणिज्जयो, ह

**श्लोक**—श्लोक पद्ये यशस्यपि, मे श्लोक पद्यबन्धे यशस्यपि, हे श्लोको यशसि पद्ये च वि पद्ये यशसि च श्लोक, अ

**श्वसन्**—श्वा पुमान् कुक्कुरे ख्यात स्थानभेदे च वास्तुन, मे

**श्वशुर**—श्वशुर पूज्ये स्त्री ब्राह्मयाम् मे

**श्वशुर्य**—श्वशुर्यो देवरे श्याले मे वि हे श्वशुर्यौ देवरश्यालौ, अ श्वशुर्यौ श्यालदेवरौ, ह

**श्व श्रेयस**—श्व श्रेयस च कल्याणे परमात्मनि शर्मणि, मे श्व श्रेयस च भद्रे स्यात्परानन्द च शर्मणि, वि श्व श्रेयस सुखे। परानन्दे च भद्रे च हे

**श्वसन**—श्वसन श्वसिते पुसि मारत मदनद्रुमे, मे श्वसनो मारते श्वासे श्वसनो मदनद्रुमे, वि श्वसन श्वासे श्वसन पवन मदनद्रुमे, हे

**श्वेत**—श्वेतो द्वीपाद्रिभेदयो। श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च। क्लीव रूप्येऽन्यवत शुक्ले, मे श्वेत रूप्ये श्वेतो द्वीपे वर्णे शैले कपर्दके। श्वेता तु शङ्खिनीकाष्ठपाटल्यो स्यात, हे श्वेत रूप्येऽन्यवत् शुक्ले श्वेतो द्वीपाद्रिभेदयो। श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च, वि श्वेत रूप्येऽपि, अ श्वेत रजतेऽपि, ह

**श्वेतधामन्**—श्वेतधामा पुमानिन्दौ घनसाराब्धिफेनयो, मे श्वेतधामा कला-नाथे घनसाराब्धिफेनयो, वि श्वेतधामा घनसारे कलानाथाब्धिफेनयो, हे

**श्वेतवाहन**—श्वेतवाहन इत्येष सुधाधाम्नि धनञ्जये, मे श्वेतवाहन इत्याख्या सुधाधाम्नि धनञ्जये, वि श्वेतवाहन शशी। पार्थे, हे पार्थेन्दो श्वेतवाहन त्रि

**प**—प कचे पुसि विज्ञे च श्रेष्ठे स्यादभिधेयवत्, मे वृष श्वेतेश्वर पीतो मज्जा हृद्वामबाहुग । षडानन षडाकार पकार कीर्तितो बुधै, मा प कीर्तितो बुधै श्रेष्ठे पश्च गम्भीरलोचने । उपसर्गे परोक्षे च पकार परिकीर्तित, ए

**षड**—षड पेयान्तरे भेदे, हे षड पेयान्तरे भिदि, वि v खड

**षड्ग्रन्थ**—षड्ग्रन्था तु वचाया स्त्री स्यात्करञ्जान्तरे पुमान्, मे षड्-ग्रन्थाऽपि वचाशट्यो षड्ग्रन्थस्तु करञ्जके, वि षड्ग्रन्थ करञ्जभेदे षड्ग्रन्था तु वचा शटी, हे षड्ग्रन्थ करञ्जवचयो, त्रि

**षड्बिन्दु**—षड्विन्दु स्यात्कीटभेदपुण्डरीकाक्षयो पुमान्, मे

**षण्ड**—षण्ड पद्मादिसघाते न स्त्री स्याद् गोपतौ पुमान् मे षण्ड पद्मादि-सघाते षण्ड स्याद् गोपतावपि, वि षण्ड कानन इड्वरे, हे षण्डकञ्चुकिनौ षण्डौ, त्रि (सघातेऽपि) षण्डश्च पादपानाम्, ह

**षण्डाली**—षण्डाली तैलमाने च सरसीकामुकस्त्रियो, मे षण्डाली सरसी-तैलमानयो कामुकस्त्रियाम्, हे षण्डाली तैलमाने स्यात्सरसीकामुकस्त्रियो, वि

**षण्ढ**—षण्ढ स्यात्पुसि गोपतौ । आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि, मे v शण्ढ

**षष्टिहायन**—स्यात्षष्टिहायनो धान्यविशेषे कुञ्जरे पुमान्, मे स्यात्षष्टि हायनो धान्यविशेषेऽपि मतङ्गजे, वि धान्यभेदे पुमान् षष्टिहायन कुञ्जरेऽपि च, त्रि

**षष्ठ**—षष्ठी कात्यायनीतिथ्योस्त्रिषु षण्णा च पूरणे, मे षष्ठी षण्णा च पूरण्या कात्यायन्यामपीष्यते, वि षष्ठी गौरी षण्णा च पूरणी, हे

**स**—भृगु श्वेतस्तथा हसो हृद्गो दक्षिणपादग । समय सामग शुक्र सगति सार्णक शशी, मा स कोपे वरणे स स्यात्तथा शूलिनि कीर्तित । सा च लक्ष्मीर्बुधै प्रोक्ता गौरी सा च स ईश्वर, ए

**सयमन**—सयमनी यमपुर्या सयमन बन्धने व्रतेऽपि स्यात्, मे सयमनी व्रते पुर्या सयमनी यमस्य च, वि सयमन व्रते बन्धे सयमनी यमस्य पू, हे

**सरूढ**—सरूढ प्रौढे चाङ्कुरिते त्रिपु, मे सरूढोऽङ्कुरिते प्रौढे, वि, हे

**सरोध**—सरोधो रोधने क्षपे, वि सरोध क्षेपरोधयो, हे

**सवदन(ण)**—स्यात्सवदनमालोचे वशीकारे नपुसकम्, मे सवदन समालोचे वशीकारे प्रकीर्तितम्, वि सवदनन्तु सवादे समालोचे वशीकृतौ, हे

**सवर्त**—सवर्त प्रलये मुन्यन्तरे कर्पफनेऽपि च, मे सवर्त प्रलये प्रोक्तो विभीतकतरावपि, वि सवर्त प्रलयेऽक्षद्रौ, हे v परिवर्त

**सवाहन**—सवाहन वाहने स्याद्भारादेरङ्गमर्दने, मे सवाहन वाहनेऽपि भारादेरङ्गमर्दने, वि सवाहन पुन । वाहनेऽङ्गमर्दने च, हे

**सवित्ति**—सवित्ति प्रतिपत्तौ स्यादविवादे जनस्य च, मे, वि सवित्ति प्रतिपत्त्यविवादयो , हे सम्वन्धेऽपि च सवित्ति , त्रि

**सविद्**—सवित्स्त्रिया प्रतिज्ञायामाचारज्ञानसङ्गरे। सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोपणे, मे सविज् ज्ञाने प्रतिज्ञाया सङ्केताचारनामसु। सम्भाषणे तोषणेऽपि क्रियाकारे च सङ्गरे, वि सवित्सम्भाषणे ज्ञाने सयमे नाम्नि तोपणे। क्रियाकारे प्रतिज्ञाया सङ्केताचारयोरपि, हे स्त्री सविज् ज्ञानसम्भापक्रियाकारा-जिनामसु, श्र सवित्सङ्केतकेऽपि स्यात्, त्रि

**सवेश**—सवेश स्वापस्त्रीरतवन्धयो , मे सवेश शयने चासनेऽपि च, वि सवेश शयने पीठे, हे

**सव्यान**—सव्यान छादनेऽशुके मे , वि सव्यान छादने वस्त्रे, हे

**ससरण**—अथ ससरण क्लीवमसम्बाधचमूगतौ। घण्टापथे च ससारे रणा-रम्भे च कुत्रचित्, मे ससरण रणारम्भे पुरनिर्गमगोपुरे। घण्टापथे च ससारे-ऽप्यसम्बाधचमूगतौ, वि ससरण त्वसम्बाधचमूगतौ। ससारे च समारम्भे नगर-स्योपनिर्गमे हे प्राण्युत्पादे ससरणमसम्बाधचमूगतौ। घण्टापथे, श्र

**ससिद्धि**—ससिद्धि प्रवृत्तौ सिद्धौ मदोग्रायामपि स्त्रियाम्, मे ससिद्धि सहजे सिद्धौ मदोग्रायामपि स्मृता, वि ससिद्धि सम्यक्सिद्धिस्वभावयो , हे

**ससृति**—प्रवाहेऽपि च ससृति , त्रि

**ससृष्ट**—ससृष्ट त्रिपु सङ्गते सशुद्धे चमनादिना, मे ससृष्ट तु सङ्गते स्याच्छुद्धे च चमनादिना, हे समृष्ट सगते विद्यात्सशुद्धे चमनादिना, वि

**सस्कार**—सस्कार प्रतियत्नेऽनुभवे मानसकर्मणि, मे सस्कार प्रतियत्ने स्यात्सङ्कल्पेऽनुभवेऽपि च, वि सस्कार प्रतियत्नेऽनुभवे मानसकर्मणि। गुणभेदे, हे

**सस्कृत**—सस्कृत कृत्रिमे शस्ते भूपितेऽप्यन्यलिङ्गक । क्लीवन्तु लक्षणो-पेते, मे सस्कृत कृत्रिमे शस्ते भूपिते भेद्यवन्मत । सस्कृत लक्षणापेते, वि सस्कृत लक्षणान्विते। भपिते कृत्रिमे शस्ते, हे अथ सस्कृतम्। कृत्रिमे लक्षणोपेते, श्र

**सस्तर**—सस्तर प्रस्तरे यज्ञे, मे सस्तरप्रस्तरावेतौ प्रस्तराध्वरयोरपि। मणिपापाणयोश्चापि यथाक्रममुदीरितौ, वि सस्तर प्रस्तरेऽध्वरे, हे सस्तरौ प्रस्तराध्वरौ, श्र सस्तर प्रस्तरेऽप्युक्त , ट

**संस्त्याय**—संस्त्याय. सन्निवेशे च संस्थाने विस्तृतावपि, मे., वि. संस्त्यायो विस्तृतौ गृहे। सन्निवेशे, हे. सङ्घाते सन्निवेशे च सस्त्यायः, अ.

**संस्थ**—संस्थश्चरेऽवस्थिते स्त्री स्थितौ सादृश्यनाशयो', मे. संस्था स्थितौ चरे नाशे व्यक्तिसादृश्ययोरपि, वि सस्था नाशे व्यवस्थाया व्यक्तिसादृश्ययोः स्थितौ। ऋतुभेदे समाप्तौ च चरे च निजराष्ट्रके, हे. सस्थाऽधारे स्थितौ मृतौ, अ. सस्था स्थितिविनाशयो'। संस्थासमाप्तिऋतुपु, त्रि. व्यवस्थायाञ्च संस्था स्यात्, ह.

**संस्थान**—संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे, मे , वि संस्थानं त्वाकृतौ मृतौ। चतुष्पथे सन्निवेशे, हे. अथ चतुष्पथे सन्निवेशे च संस्थानम्, अ. संस्थानं मृत्युरूपयो , त्रि.

**संहत**—सहत सङ्गते दृढे, मे , वि सहत मिलिते दृढे, हे.

**संहर्ष**—संहर्षमाहु. स्पर्धाया प्रमोदेऽपि प्रभञ्जने, वि. सहर्षः पवने मुदि। स्पर्धाया च, हे सहर्षस्तु पुमान् हृष्टौ स्पर्धाया च प्रभञ्जने, मे. संहर्ष. स्पर्धने मुदि, त्रि.

**संहिता**—सहिता वर्णसयोगे शास्त्रवेदैकदेशयो , हे.

**सकटाक्ष**—सकटाक्षो वराक्षे ना कटाक्षसहिते त्रिपु, मे. सकटाक्षो धवद्रौ स्यात्कटाक्षसहिते त्रिपु, वि. सकटाक्षस्तु कटाक्षिणि धवद्रुमे, हे.

**सकृत्**—सकृत्सहैकवारे स्यात्, मे , वि सकृत्सहैकवारयो', हे. सकृत्सहैकवारे च, अ.

**सकृत्प्रज**—सकृत्प्रजो द्विके सिंहे, हे

**सखि**—सखा मित्रे सहाये ना वयस्याया सखी मता, मे. सखा सहाये मित्रे च, हे. सखा मित्रे सहाये च, वि. सखा मित्रसहाययो', त्रि.

**सङ्कार**—सङ्कारोऽग्निचटत्कारे सम्मार्जन्यवपुञ्जिते। नवदूषितकन्याया सङ्कारी पुनरुच्यते, मे , वि. सङ्कारोऽवकरेऽग्निचटत्कृतौ। सङ्कारी भुक्तकन्यायाम्, हे. सङ्कारोऽग्निचटत्कारे सम्मार्जन्यपसारिते, हा.

**सङ्काश**—सङ्काश. सदृशेऽन्तिके, वि , हे.

**सङ्कीर्ण**—सङ्कीर्णं निचितेऽपि स्यादशुद्धे चापि भेद्यवत्, मे. सङ्कीर्णं निचिते प्रोक्तमशुद्धे चापि भेद्यवत्, वि सङ्कीर्णौ निचिताशुद्धौ, हे , अ

**संकुल**—संकुल त्रिपु विस्पष्टवाचि व्याप्ते, मे. संकुलं वाच्यवद्व्याप्तेऽविस्पष्टार्थवचस्यपि, वि संकुलोऽस्पष्टवचने व्याप्ते च, हे.

**सङ्कोच**—सङ्कोचो मीनभेदे स्याद्बन्धे क्लीवन्तु कुङ्कुमे, मे सङ्कोचमपि काश्मीरे सङ्कोचो मीनबन्धयोः, वि.

**सङ्क्रम**—सङ्क्रम क्रमणे पुंसि न स्त्री स्याद्दुर्गसञ्चरे, मे सङ्क्रम क्रमणे सम्पद्वारिसञ्चारयन्त्रके, वि

**सङ्ख्य**—सङ्ख्य समिति सङ्ख्या स्यादेकत्वादिविचारयो, मे, वि सङ्ख्यमाहवे। सङ्ख्यैकादौ विचारे च, हे एकत्वादौ विचारे च सङ्ख्या क्लीबे च सयुगे, त्रि

**सङ्ख्यावत्**—सङ्ख्यावान् पण्डिते पुमान्। सङ्ख्यायुक्तेऽन्यलिङ्ग, मे सङ्ख्यावान्पण्डिते मिते, वि सङ्ख्यावान्मितसुधियो, हे

**सङ्गति**—सङ्गति सङ्गमे ज्ञाने (स्त्रियाम्), मे सङ्गतिर्ज्ञानसङ्गयो, हे सगति सङ्गमे ज्ञाने, वि

**सङ्गर**—सङ्गरो युधि चापदि। क्रियाकारे विषे चाङ्गीकारे क्लीब शमीफले, मे सङ्गरोऽङ्गीकृतौ युधि। विषापदो क्रियाकारे सङ्गर तु शमीफले, वि सङ्गरोऽङ्गीकृते युद्धे क्रियाकारे विषापदो। सङ्गरन्तु फले शम्या, हे अथ प्रतिज्ञाजिसविदापत्सु सङ्गर, अ प्रतिज्ञा सङ्गरो ज्ञेय सग्राम सङ्गरो मत, अने

**सग्रह**—सग्रहो वृहदुद्रङ्गे ग्रहसक्षेपयोरपि मे, हे सक्षेपेऽपि सग्रह स्यात, त्रि सग्रहो वृहदुद्रङ्गे मुष्टिसक्षेपयोरपि वि

**सङ्घाटिका**—सङ्घाटिका स्त्रिया युग्मे कुट्टिन्या जलकण्टके, मे सङ्घाटिका तु युग्मे स्यात्कुट्टनीघ्राणयोरपि वि सङ्घाटिका तु कुट्टिन्या घ्राणे युग्मेऽम्बुकण्टके हे सङ्घाटिका विदुर्युग्मे कुट्टन्या जलकण्टके, हा युग्मे सघाटिका कुट्टन्या च, त्रि

**सङ्घात**—सङ्घात पुंसि घात च सहतौ नरकान्तरे, मे सङ्घात सहतौ घाते सङ्घातो नरकान्तरे, वि सङ्घातो घातसङ्घयो, हे सङ्घातो नरके चये, त्रि

**सचिव**—सचिवो मन्त्रिचेटयो। सहाये, मे सचिव सहाये मन्त्रिणि स्मृत, वि सचिव सहायेऽमात्ये, हे मन्त्री सहाय सचिवौ, अ

**सज्ज**—अथ सज्ज स्यात्सनद्धे सम्भृते त्रिषु, मे सज्ज स्यात्सन्नद्धे सम्भृतेऽपि च, वि सज्जा सनद्धसम्भृतौ, ह सनद्धसम्भृतौ सज्जौ, त्रि

**सज्जन**—सज्जनन्तु भवेत्क्लीबमुपरक्षणघट्टयो। वाच्यलिङ्ग कुलीन स्यात्कल्पनायान्तु योषिति, मे सज्जनो वाच्यवत्साधौ सज्जन घट्टगुल्मके। सज्जना कल्पनायान्तु वि सज्जन घट्टगुल्मके। सज्जनन्तु कुलीने स्यात्सज्जनाऽपि च कल्पना, हे ना साधौ सज्जन क्लृप्तौ, त्रि

**सञ्चारिका**—सञ्चारिका तु युग्मे कुट्टनीघ्राणयोरपि, मे.

**सञ्ज्ञा**—सञ्ज्ञा नामनि गायत्र्या चेतनारवियोषिता। अर्थस्य सूचनायाञ्च

हस्ताद्यैरपि योपिति, मे. संज्ञा नामनि गायत्र्यां हस्ताद्यैरर्थसूचने। चेतनाऽर्क-स्त्रियोः हे. संज्ञा नामनि गायत्र्या चेतनाया रविस्त्रियाम्। अर्थसूचनिकायाञ्च हस्ताद्यैरपि कथ्यते, वि. संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना, अ सज्ञा सूर्यप्रियायाञ्च, त्रि. सज्ञा चित्तञ्च नाम च, अने संज्ञाख्ये नामचेतने, अने. सकेते चैतन्ये सूरिभि. कथ्यते तथा संज्ञा, ह

**सटा**—सटा जटाकेशरयोः, मे , वि., हे.

**सत्**—सत्साधौ धीरशस्तयो.। मान्ये सत्ये विद्यमाने त्रिपु साध्व्युमयो स्त्रियाम्, मे. सद्विद्यमाने सत्ये च प्रशस्तार्चितसाधुपु। सती पुन कात्या-यन्याञ्च साध्व्याञ्च, हे. सत्प्रशस्ते विद्यमाने सत्याभिहितसाधुपु। सती पतिव्रतागौर्योः, वि. सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्, अ साधुसत्ता-प्रशस्येपु श्रेष्ठे सदिति च ध्वनि., अने सती दाक्षायणी देवी सुचरित्राऽबला सती, अने. सती कात्यायनीसाध्व्यो', त्रि.

**सत्तम**—सत्तम' स्यात्पूज्यतमे साधीयस्युत्तमे त्रिपु, मे सत्तमश्चान्यवत्पूज्ये श्रेष्ठसाधीयसोरपि, वि सत्तमः श्रेष्ठपूज्ययो । साधिष्ठे, हे.

**सत्त्व**—सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसायासु-चित्तेप्वस्त्री तु जन्तुपु, मे सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयो । आत्मत्वे व्यवसाये च चित्ते प्राणेप् जन्तुपु, वि सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः। पिशाचादावात्मभावे बले प्राणेपु जन्तुपु, हे द्रव्यासुव्यवसायेपु सत्त्वमस्त्री तु जन्तुपु, अ प्रकृतिगुणसत्ताया स्थाम्नि भूते च सत्त्व स्यात्, ह.

**सत्य**—सत्यं कृते च शपथे तथ्ये त्रिपु य तद्वति, मे सत्यञ्च शपथे तथ्ये कृते तद्वति वाच्यवत्। तपोलोकात्पर सत्य', वि. सत्यन्तु शपथे कृते। तथ्ये तद्वति सत्यस्तु लोकभित्, हे. सत्यं शपथतथ्ययो', अ.

**सत्यम्**—सत्यं प्रश्नेऽभ्युपगमे, मे.

**सत्यवत्**—सत्यवती व्यासस्य मातरि। नारदर्चीकयो. पत्न्यां स्त्रियां पुंसि नृपान्तरे, मे.

**सत्र**—सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे, मे. सत्रमाच्छादने यज्ञे सदादाने च कैतवे, वि. सत्रमाच्छादने क्रतौ। सदादाने वने दम्भे, हे. सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च, अ. सत्र स्यात्कैतवे वने, त्रि. सत्र गृह वनं सत्रं सत्रं सच्चरित मतम्। सत्रं नामायुधं प्रोक्त सत्र दान समीरितम्, अने.

**सदन**—सदनं मन्दिरे तोये, मे. सदनं मन्दिरे जले, वि. सदनं जलसद्मनोः, हे. अङ्गसादेऽपि सदनम्, हा.

**सदागति**—सदागतिर्नाऽर्कवातनिर्वाणेषु सदीश्वरे, मे सदागति स्यात्पवने निर्वाणे च सदीश्वरे, वि सदागति सदीश्वरे। निर्वाणे पवमाने च, हे

**सदादान**—सदादानोऽभ्रमातङ्गे हेरम्बे गन्धहस्तिनि, मे, वि सदादानो गन्ध गजे हेरम्बेऽभ्रमतङ्गजे, हे

**सदाफल**—सदाफल स्कन्धफले नारिकेलेऽप्युदुम्बरे, मे, वि सदाफलमु दुम्बरे। नालिकेरे स्कन्धफले, हे

**सदृश**—सदृश समे। उचिते च, मे सदृश तूचिते समे, वि, नि

**सदेश**—सदेशोऽभ्यर्णदेश्ययो, वि

**सद्मन्**—सद्म स्यान्मन्दिरे नीरे, मे वि

**सनातन**—सनातन शाश्वतेऽजे पित्रतिथ्यन्तरे हरे मे सनातन शाश्वत कसवैरिणो। शिवे पितॄणामतिथौ सुनिश्चले, वि सनातनोऽच्युते। पितॄणामतिथौ रुद्रवेधसो शाश्वते स्थिरे, हे शाश्वताजौ सनातनौ, त्रि

**सनाभि**—सनाभिर्ज्ञातितुल्ययो मे सनाभि सदृशे ज्ञातौ, वि सनाभि र्ज्ञातिसदृशे, हे

**सनीड**—V नीड

**सन्तति**—सन्तति स्यात्पक्तौ गोत्र पारम्पर्ये पुत्रपौत्राणाम् (स्त्रियाम्), मे सन्तति पक्तिविस्तारगोत्रेषु कविभि स्मृता। परम्पराभवेऽपि स्यात्सन्तति पुत्रकन्ययो वि सन्ततिस्तु तनये दुहितर्यपि। परम्पराभवे पक्तौ गोत्रविस्तारयोरपि, हे

**सन्तान**—सन्तान सन्ततौ गोत्रे स्यादपत्ये सुरद्रुमे, वि, मे सन्तानोऽपत्यगोत्रयो। सन्ततौ देववृक्षेषु, हे सन्तान सन्ततौ देववृक्षे चापत्यगोत्रयो, त्रि

**सन्तानिका**—सन्तानिकाऽपि क्षीरादिसारे मर्कटजालके, मे, वि सन्तानिका क्षीरसारे मर्कटस्य च जालके हे सन्तानिका क्षीरसारे तथा मर्कटजालके, हा

**सन्दशिका**—सन्दशिकाऽपि सुचुटीलोहयन्त्रविशेषयो, मे, वि

**सन्धा**—सन्धा स्थितिप्रतिज्ञयो मे हे सन्धा स्थितौ प्रतिज्ञायाम्, वि सन्धा प्रतिज्ञा मर्यादा, अ सन्धा स्यादवधावपि, ह सन्धाऽवधि प्रतिज्ञयो, अने

**सन्धान**—सन्धान स्यादभिषवे तथा सङ्घट्टनेऽपि च, मे, वि सन्धानन्तु सङ्घट्टितेऽभिषवे, हे

**सन्धि**—सन्धि पुमान्सुरुङ्गाया भगे सङ्घट्टनेऽपि च। रूपकाणा मुखाद्यङ्गे सावकाशेऽपि कीर्तित, मे सन्धिर्भेद सुरङ्गाया भगे सङ्घट्टनेऽपि च, त्रि सन्धि-

योनौ सुरुङ्गायां नाट्याङ्गे श्लेष्मभेदयोः, हे. सन्धि पुमान्सुरुङ्गाया भेदेस ह्वट्टने भगे, त्रि. सन्धिः संश्लेषसन्ध्ययोः, ह.

**सन्धिनी**—सन्धिनी वृषभाक्रान्ताकालदुग्धोस्रयो. स्त्रियाम्, मे. सन्धिनी तु वृषाक्रान्ताकालदुग्धगवोः स्मृता, त्रि सन्धिनी तु गौः। वृषाक्रान्ता कालदुग्धा, हे.

**सन्धिला**—सन्धिला तु सुरुङ्गाया नदीमन्दिरयो. स्त्रियाम्, मे. सन्धिला तु सुरुङ्गायां नदीमन्दिरयोरपि, वि. सन्धिलौक.सुरङ्गयोः। नद्याम्, हे.

**सन्ध्या**—सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु, मे. सन्ध्या नदीकालभिदोश्चिन्तामर्यादयोरपि। प्रतिज्ञायां च सन्धाने सन्ध्या च कुसुमान्तरे, वि. सन्ध्या कालनदीभिदोः। चिन्ताया संस्रवे सीम्नि सन्धाने कुसुमान्तरे, हे.

**सन्नति**—सन्नतिः प्रणतौ ध्वनौ, मे., वि. सन्नतिः प्रणतिध्वन्यो., हे.

**सन्नद्ध**—सन्नद्धो वर्मिते व्यूढे, मे, हे. सन्नद्धो वर्मितव्यूढयोरपि, वि.

**सन्नय**—सन्नय समवायेऽपि पृष्ठस्थायिवले पुमान्, मे सन्नय· समवायेऽपि पृष्ठस्थायिवलेऽपि च, वि. सन्नयस्तु समवायानुसैन्ययो , हे. पश्चादवस्थायिवलं समवायश्च सन्नयौ, अ.

**सन्निधि**—सन्निधिः सन्निधानेऽपि पुमानिन्द्रियगोचरे, मे. सन्निधिः सन्निधानेऽपि भवेदिन्द्रियगोचरे, वि. सन्निधिरन्तिके। प्रत्यक्षे च, हे

**सप्तला**—अथ सप्तला। नवमालीचर्मकषागुञ्जासु पाटलौ स्त्रियाम्, मे. सप्तला पाटलौ गुञ्जानवमालिकयोरपि। भवेच्चर्मकषायाञ्च, वि. सप्तला नवमालिका। सातला पाटला गुञ्जा, हे.

**सप्तार्चिस्**—सप्तार्चिः पावके पुंसि क्रूरचक्षुषि च स्त्रियाम्, मे. सप्तार्चिः पावके प्रोक्तः सप्तार्चि. क्रूरलोचने, वि. सप्तार्चिः क्रूरनेत्रेऽग्नौ, हे

**सभा**—सभा सामाजिके गोष्ठ्या द्यूतमन्दिरयोरपि, मे सभा सामाजिकद्यूते गोष्ठीमन्दिरयोरपि, वि सभा द्यूतसमूहयोः। गोष्ठ्या सभ्येषु शालायाम्, हे. सभा संसदि सभ्ये च, अ.

**सम्**—स तु शोभनार्थसमर्थयो·। सङ्गार्थे च प्रहृष्टार्थे, मे. सं सङ्गार्थे प्रकृष्टार्थे शोभनार्थसमर्थयोः, वि. सं सङ्गार्थे प्रकृष्टार्थे शोभनार्थसमुच्चये, हे.

**सम**—समा संवत्सरे स्त्रियाम्। सर्वसाधुसमानेषु समं स्यादभिधेयवत्, मे. समं साध्वखिलं सदृक्, हे. समा वर्षे समं तुल्ये साधौ च सदृशेऽन्यवत्, त्रि.

**समज**—समजः पशुवृन्दे ना विपिने तु नपुंसकम्, मे.

**समभिहार**—भवेत्समभिहारस्तु पौन.पुन्यभृशार्थयोः, मे. समभिहारो भृशत्वे पौन.पुन्येऽपि कथ्यते, वि. समभिहारस्त्वाभीक्ष्णे भृशार्थे, हे

**समय**—समय शपथाचारसिद्धान्तेषु तथा विधि। क्रियाकारे च निर्देशे सङ्केते कालभाषयो, मे समय शपथे भाषासम्पदो कालसविदो। सिद्धान्ताचारसङ्केतनियमावसरेषु च। क्रियाकारे निर्देशे च, हे समया शपथाचारकालसिद्धान्तसविद, अ

**समया**—समयाऽन्तिकमध्ययो, मे, वि, अ समया निकषा चान्तर्निकटे, हे

**समर**—समरो युद्धसङ्घयो, अने

**समर्थ**—समर्थस्तु हिते शक्ते सम्वद्धेऽप्यन्यलिङ्गकम्, मे समर्थोऽपि हिते शक्ते सम्वद्धार्थेऽपि सम्मत, वि समर्थ शक्तिसम्पन्ने सम्वद्धार्थे हितेऽपि च, हे समर्थस्त्रिषु शक्तिस्थे सम्वद्धार्थे हितेऽपि च, अ

**समर्याद**—समर्याद समीपे ना मर्यादासहिते त्रिषु, मे समर्याद समीपे स्यान्मर्यादासहितेऽपि च, वि समर्याद मर्यादासहितेऽपि च, हे समर्यादोऽन्तिके स्थिरे, त्रि

**समाघात**—समाघातो वधे युद्धे, मे, वि समाघातस्त्वाहवे घातनेऽपि च, हे

**समादान**—समादान समीचीनग्रहणे सौगताह्निके, मे समादान समीचीनग्रहणे नित्यकर्मणि, वि, हे

**समाधि**—समाधिर्ना समर्थने। ध्याननीवाकनियमे काव्यस्य च गुणान्तरे, मे समाधिर्नियमे ध्याने नीवाके च समर्थने, वि समाधि स्यात्समर्थने। चित्तैकाग्रनियमयोर्मौने, हे स्यु समर्थननीवाकनियमाश्च समाधय, अ

**समान**—समान सत्समैकेषु त्रिषु ना नाभिमारुते, मे समान सत्समैकेषु समानो नाभिमारुते, वि समानो देहमारुते। वर्णभित्सत्समैकेषु, हे समाना सत्समैके स्यु, अ समानो देहवायौ च, त्रि

**समापन**—समापन परिच्छेदे समाप्तिवधयोरपि, मे समापनम्। परिच्छेदे समाप्तौ च समाधाने प्रमापणे, वि समापनम्। परिच्छेदे समाधाने समाप्तिवधयोरपि, हे मरणेऽपि समापनम्, त्रि

**समापन्न**—समापन्न समाप्ते स्यात्प्राप्ते क्लिष्टे वधेऽपि च, मे, वि समापन्न वधे क्लिष्टे समाप्तप्राप्तयोरपि, हे

**समाप्ति**—समाप्तिरवसाने स्यात्समर्थने (स्त्रियाम्), मे समाप्तिश्चावसाने स्यात्समाप्तिश्च समर्थने, वि

**समायोग**—समायोगस्तु सयोगे समवाये प्रयोजने, मे, वि, हे

**समास**—स्यात्समासस्तु पुलिङ्ग सक्षेपे च समर्थने, मे समासस्तु सक्षेपे च समर्थने, वि समास समर्थनाया स्यात्सक्षेपैकपद्ययो, हे

**समाहार**—समाहारस्तु सक्षेपे एकत्रकरणेऽपि च, हे

**समाहित**—समाहित समाधिस्थेऽप्युक्तसिद्धान्त आहिते। निर्विवादीकृतेऽपि स्यात्प्रतिज्ञाते च वाच्यवत्, मे समाहित प्रतिज्ञाते समाधिस्थे यतात्मनि। वाच्यवन्निहिते सिद्धे समाधाने समाहितम्, वि समाहित समाधिस्थे सश्रुते, हे

**समाह्वय**—समाह्वयस्तु पशुभि खगैर्द्यूते च सङ्गरे, मे समाह्वय स्यात्सग्रामे द्यूते च पशुपक्षिभि, वि स्यात्समाह्वय आहवे। पशुभि पक्षिभिर्द्यूते, हे सज्ञायाञ्च समाह्वय, ह

**समिति**—समिति सम्पराये स्यात्सभाया सङ्गमेऽपि च (स्त्रियाम्), मे समिति सङ्गरे साम्ये सभायामपि सङ्गमे, वि समितिर्युधि सङ्गमे। साम्ये सभायाम्, हे अथ सङ्गरे। सङ्गे सभाया समिति, अ रणे सभाया समिति, त्रि सभा समितिरित्युक्ता समिति सयुगाभिधा। समिति समयो ज्ञेय सङ्गम समितिर्मत, अने समिति सङ्गतिसभयो, ह

**समीक्षा**—समीक्षा तु स्त्रिया तत्त्वबुद्धावपि निभालने, मे समीक्षा ग्रन्थभेदे स्यात्तत्त्वबुद्धौ निभालने, वि समीक्षा तु ग्रन्थभेदे समीक्षणे, हे

**समीरण**—समीरण स्यात्पवने पथिके च फणिज्झके, मे, वि समीरण फणिज्झके। पान्थे वायौ, हे

**समुच्छ्रय**—समुच्छ्रय पुमान् विरोधोत्सेधयो, मे समुच्छ्रय समुत्सेधे विरोधेऽपि समुच्छ्रय, वि समुच्छ्रयो वैरोन्नत्यो, हे विरोधेऽपि समुच्छ्रय, अ

**समुत्थान**—समुत्थान समुद्योगे व्याधीना निर्णयेऽपि च, मे समुत्थानमुद्यमे रोगनिर्णये, वि समुत्थान निदानेऽभियोगे, हे

**समुदय**—भवेत्समुदय सङ्घे सयुगे च समुद्गमे, मे स्मृत समुदयो वृन्दे सयुगे समुपक्रमे, वि

**समुदाय**—समुदाय समूहे स्याद्युद्धे, मे समुदायो गणे युधि, वि समुदायो गणे रणे। समुदायस्तूद्गमेऽपि, हे

**समुद्धत**—समुद्धत समुत्कीर्णेऽप्यविनीते च वाच्यवत् मे समुद्धत समुद्गीर्णेऽप्यविनीते समुद्धत, वि समुद्धत। अविनीते समुद्गीर्णे, हे

**समुद्रनवनीत**—समुद्रनवनीत स्यात्क्लीव पीयूषचन्द्रयो, मे समुद्रनवनीताख्या पीयूषामृतरोचिषो, वि

**समुद्रान्ता**—समुद्रान्ता तु कार्पासीपृक्कादुरालभासु च, मे, वि समुद्रान्ता रालभा। कार्पासिका च स्पृक्का च, हे

**समुद्राए**—समुद्राए पुमान् ग्राहे सेतुवन्धे तिमिङ्गिले, मे समुद्राए स्मृतो ग्राहे सेतुवन्धे तिमिङ्गिले, वि समुद्राएग्राहभेदे सेतुवन्धे तिमिङ्गिले, हे

**समुनद्ध**—समुनद्ध समुद्धूते पण्डितमन्यगर्विते, मे समुनद्ध समुद्धूते पण्डितमन्यधृष्टयो, वि समुनद्धस्तूर्द्धवद्धे पण्डितमन्यदृप्तयो, हे समुनद्धौ पण्डित-मन्यगर्वितौ, अ

**समूढ**—समूढ पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते, मे, वि समढ पुञ्जिते सद्योजाते भुग्नेऽनुपप्लवे, हे समूढ पुञ्जिते नवे। भुग्नेऽनुपप्लुतेऽप्येष वाच्यलिङ्ग उदीर्यते, त्रि

**सम्पद्**—सम्पद्भूतौ गुणोत्कर्षे हारभेदेऽपि दृश्यते वि सम्पद्भूतौ गुणोत्कर्षे हारभेदेऽपि च स्त्रियाम मे सम्पद्वृद्धौ गुणोत्कर्षे हारे, हे

**सम्पन्न**—सम्पन्न साधितेऽपि स्यात्सम्पत्तिसहिते त्रिपु मे सम्पन्न साधित प्रोक्त सम्पत्तिसहितेऽन्यवत् वि

**सम्पराय**—सम्पराय समीक स्यादापदुत्तरकालयो, मे वि सम्परायस्तु सयुगे। आपद्युत्तरकाले च हे अथापदि युद्धायत्यो सम्पराय अ

**सम्पर्क**—सम्पर्को मेलके रतौ मे सम्पर्क सुरते पृक्तौ वि हे

**सम्पाक**—सम्पाकस्तर्कके धृष्ट त्रिपु ना चतुरङ्गुले, मे, वि v शम्पाक

**सप्रयोग**—सप्रयोगो रतेऽपि स्यादन्वितौ कार्मणेऽपि च मे सप्रयोग रते विद्यादन्वितौ कार्मणेऽपि च वि सप्रयोगो निधुवने सम्बन्धे कार्मणेऽपि च हे

***सप्रयोगिन्***—*सप्रयोगी कलाकेलौ कामुके सप्रयोजके* मे सप्रयोगी कलाकेलौ कामुके सुप्रयोजके वि सप्रयोगी तु कामुके। कलाकेलौ सुप्रयोगे, हे

**सप्रहार**—सप्रहारो गतौ युद्ध मे सप्रहारो रणे गतौ, वि सप्रहारो गतौ रणे हे

**सम्बर**—सम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे। नपुसकन्तु सलिलबौद्धव्रत विशेषयो मे मृगपर्वतदैत्येषु निकृष्टेऽपि च सम्बर, अने v शम्बर

**सम्बल**— v शम्बल

**सम्बाध**—सम्बाध सङ्कटे भगे, मे वि सम्बाध सङ्कटे योनौ हे सम्बाध सङ्कटे भगऽप्युक्त ह

**सम्बाधन**—सम्बाधन द्वा सदने शलाग्रद्वारपालयो, मे

**सम्बोध**—सम्बोधो बोधने क्षेमे, मे

**सम्भव**—सम्भवो हेतावुत्पत्तौ मेलकेऽपि च। आधारानतिरिक्तत्वेऽप्याधयस्य निगद्यते, मे सम्भव कथितो हेतावुत्पत्तौ मेलकऽपि च। आधारानतिरिक्तत्व

आधेयस्य च सम्भव:, वि. सम्भव. कारणे जनौ। आधेयस्य चाधारानतिरिक्तत्वे जिनेऽपि च, हे. आधेयधारणे सत्त्वे मेलकेऽपि च सम्भवः, त्रि.

**सम्भार**—सम्भार सम्भृतौ सङ्घे, मे. सम्भार. सम्भृतौ गणे, वि., हे.

**सम्भेद**—सम्भेदः स्फुटने सङ्गे, मे. सम्भेदः स्फुटने सिन्धुसङ्गमे, वि.

**सम्भोग**—सम्भोगस्तु पुमान्भोगे सुरते जिनशासने, मे. सम्भोगो भोगरतयो. शुण्डायाम्, हे. सम्भोगः सुरते भोगे सम्भोगो जिनशासने, वि. सम्भोगो रत-भोगयोः, त्रि. रतिभुक्त्योः सम्भोगः, ह.

**संभ्रम**—सभ्रम. साध्वसेऽपि स्यात्सवेगादरयोरपि, वि., मे. संभ्रमो भीतौ संवेगादरयोरपि, हे. संभ्रमौ साध्वसादरौ, त्रि

**सम्मति**—अथ सम्मति । अभिलापेऽप्यनुज्ञाया सवित्त्याद्यास्तु योपिति, मे. सम्मतिः स्यादनुज्ञानेऽप्यभिलापेऽपि सम्मति., वि. सम्मतिर्वाञ्छानुमत्योः, हे.

**संमूर्छन**—समूर्छनमभिव्याप्तावुच्छ्रायमोहयोरपि, मे. समूर्छनमभिव्याप्तौ संमूर्छामोहयोरपि, वि. समूर्छनमभिव्याप्तौ मोहे, हे.

**सम्यच्(ञ्च्)**—सम्यग् दृढप्रशंसयो:, मे सम्यग् वाढप्रशंसयो , वि. सम्यग्वादे स्तुतावपि, हे सम्यक् स्याद्वाच्यलिङ्गन्तु मनोज्ञे सङ्गतेऽपि च, मे. सम्यक् सम्मतहृद्ययोः, वि

**सर**—सरो दध्यग्रगत्योर्ना, मे. सरो दध्यग्रवाणयोः, वि. सरौ दध्यग्र-सायकौ, हे v शर

**सरक**—सरकोऽस्त्री सीधुपाने शीधुपात्रेक्षुसीधुनोः। अच्छिन्नाध्वगपंक्तौ च, मे. सरक. सीधुभाजने। अच्छिन्नाध्वगपक्तौ च सीधुपाने च सीधुनि, वि. सरको मदिरापात्रे मदिरापानमद्ययो., हे शीधौ च शीधुपाने च सरकोऽस्त्री, त्रि.

**सरणि**—सरणि पक्तौ मार्गे च, मे सरणि. पक्तिवर्त्मनोः, वि. सरणिः श्रेणिमार्गयो., हे

**सरण्यु**—सरण्युस्तु पुमान् वारिवाहे स्यान्मातरिश्वनि, मे. v. शरण्यु.

**सरमा**—सरमा कुक्कुरीदेवशुन्यो स्याद्राक्षसीभिदि, मे.

**सरल**—सरल. पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिपु, मे. सरलः पूतिकाष्ठे स्यादुदारावक्रयोरपि, वि सरलस्त्वृजौ। उदारे पूतिकाष्ठे च, हे ऋजौ वृक्षे च सरल:, त्रि. v. मोक्ष.

**सरस्**—सरसी विश्वकासारे सरो नीरतडागयो., मे. सरस्तोयतडागयो., वि. सरो नीरतडागयो:, त्रि.

**सरस्वत्**—सरस्वाश्च नदे चाब्धौ नान्यवद्रमिके स्त्रियाम्। वाणीस्त्री-

रत्नवाग्देवीगोनदीपु नदीभिदि। मनुपत्न्यामपि, मे सरस्वती सरिद्भेदे गोवाग्देवतयोर्गिरि। स्त्रीरत्ने चापगायाञ्च सरस्वान् सिन्धुकेऽम्बुधौ, वि सरस्वानुदधौ नदे सरस्वती सरिद्भिदि। वाच्यापगाया स्त्रीरत्ने गोवाग्देवतयोरपि, हे सरस्वन्तौ नदार्णवौ, अ अथो वच । सरस्वती सरिद् गौश्च, त्रि

**सरोजिनी**—सरोजिनी तु कमलाकरे पद्मे च योपिति, मे सरोजिनी स्यात्कासारे पद्मिनीपद्मयोस्तथा, वि सरोजिनी सरोरुहे। सरोरुहिण्या कासारे, हे

**सर्ग**—सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिपु, मे, वि सर्गस्त्यागस्वभावयो । उत्साहे निश्चयेऽध्याये मोहानुमतिसृष्टिपु, हे

**सर्जरस**—अथ सर्जरसो वाद्यभाण्डभेदे च धूणके, मे वीणाभेदे सर्जरसो धूणकेऽपि, त्रि v सर्वरस

**सर्जू**—सर्जूर्वणिजि विद्युति (स्नियाम), मे सर्जूर्वणिजि विद्युति, वि

**सर्व सह**—सर्व सह सहिष्णौ स्यात्सर्वसहा पुन क्षितौ, हे

**सर्वग**—सर्वग सलिले क्लीव सर्वग शङ्करे विभौ, मे सर्वग जले। सर्वगस्तु विभौ रुद्रे, हे सर्वग सलिले ख्यात सर्वग शङ्करे विभौ, वि

**सर्वज्ञ**—सर्वज्ञ शिवबुद्धयो, मे सर्वज्ञ शङ्करे बुद्धे, वि सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शङ्करेऽपि च, हे सर्वज्ञ शङ्करे जिने, त्रि

**सर्वतोभद्र**—सर्वतोभद्र इत्युक्त काव्यचित्रे गृहान्तरे। निम्बे ना सर्वतोभद्रा गम्भारीनटयोपितो मे सर्वतोभद्रस्त्वोकभित्काव्यचित्रयो । निम्बेऽथ सर्वतोभद्रा गम्भार्या नटयोपिति, हे सर्वतोभद्र इत्युक्त काव्यचित्रे गृहान्तरे। निम्बेऽपि सर्वतोभद्रा गम्भारीनटयोपितो, वि

**सर्वतोमुख**—सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणो पुमान्। नपुसकन्तु पानीये सुरवर्त्मन्यपि स्मृतम् मे अथ सर्वतोमुख । विधावात्मनि भद्रे च सर्वतोमुखमम्बु खम् हे सर्वतोमुखमाख्यातमन्तरिक्षे च पाथसि। विधिक्षेत्रज्ञरुद्रेपु कथित सर्वतोमुख, वि

**सर्वथा**—सर्वथा हेतुवादयो, मे, वि

**सर्वरस**—सर्वरस स्मृतो वाद्यभाण्डभेदे च धूणके, वि सर्वरसस्तु धूणके। वाद्यभदे, हे v सर्जरस

**सर्वसन्नाह**—सर्वात्मनि सर्वसन्नाह, ह

**सर्वौघ**—सर्वौघो गुरुवेगे च सर्वसनहने पुमान्, मे सर्वौघो गुरुवेगार्यसर्वसन्नहनार्थयो, वि

**सव**—सवो यज्ञे च सन्धाने, मे सव सन्धानयज्ञयो, वि

सवन—सवनन्त्वध्वरे स्नाने सोमनिर्दलनेऽपि च, मे. सवन यज्ञियस्नाने सोमनिर्दलनेऽपि च, वि. सवनं स्नानयागयोः। सोमनिर्दलने चापि, हे क्रतौ स्नाने च सवनम्, त्रि.

सव्य—सव्यं वामे प्रतीपे स्यात्, मे. सव्य तु दक्षिणे। वामे च प्रतिकूले च, हे. सव्यं वामप्रतीपयोः, वि.

सस्यक—सस्यको मणिभेदेऽसौ, मे. सस्यक. स्यान्मणौ खड्गे नारिकेलस्य चान्तरे, वि. सस्यको नालिकेरान्तःसस्याभमणिखड्गयो, हे मणौ खड्गे च सस्यकः, त्रि.

सह—सहो बले न स्त्रियां स्यात्स्त्रियान्तु नखभेषजे। दण्डोत्पलामुद्गपर्णीकुमारीपृथिवीषु च, मे. सह क्षेमे बलेऽपि च। सहोर्व्या सहदेवाया कुमार्या नखभेषजे। मुद्गपर्ण्याञ्च, हे. सहो बले सहा मुद्गपर्ण्याञ्च नखभेषजे। सहदेवाकुमार्योश्च सहः क्षान्ते सहा भुवि, वि. सह साकल्य इष्यते। विद्यमाने च सादृश्ययौगपद्यसमृद्धिषु। सम्बन्धे च, मे. सह सम्बन्धसादृश्ययौगपद्यसमृद्धिषु। साकल्ये विद्यमाने च, हे. सह साकल्यसादृश्ययौगपद्यसमृद्धिषु। विद्यमाने च सम्बन्धे सहशब्दः प्रकीर्तितः, वि.

सहचर—भवेत्सहचरो झिण्ट्यां द्वयोरनुचरे त्रिषु, मे भवेत्सहचरो झिण्ट्यां वयस्ये प्रतिबन्धके, वि सहचरः पुनर्झिण्ट्या वयस्ये प्रतिबन्धके, हे.

सहज—सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत्, मे सहजस्तु निसर्गे स्यात्सहोत्थे पुनरन्यवत्, वि. सहजः सहसम्भवे। निसर्गे च, हे. निसर्गे सहजः पुंसि सहोत्थे वाच्यलिङ्गकः, त्रि.

सहदेव—सहदेवा बलादण्डोत्पलयोः सारिवौषधौ। सहदेवी तु सर्पाक्ष्या पुंसि स्यात्पाण्डवे पुनः, मे. सहदेवा बलादण्डोत्पलासारिवभेषजे। सहदेवी तु सर्पाक्ष्यां सहदेवश्च पाण्डवे, वि. सहदेवस्तु पाण्डवे। सहदेवा बलादण्डोत्पलयोः शारिवौषधे। सहदेवी तु सर्पाक्ष्याम्, हे.

सहस्—सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः, मे. सहो बले ज्योतिषि मार्गशीर्षहेमन्तयोश्चापि सहाः प्रदिष्टः, वि. सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः, हे. सहो बलं सहा मार्गः, श्र.

सहसा—प्रायकस्मिकार्ये सहसा तत्काले च निगद्यते, ह.

सहस्रपाद—सहस्रपादः कारण्डे मार्तण्डे यज्ञपूरुषे, मे., वि. सहस्रपादो यज्ञपूरुषे। कारण्डसूर्ययोः, हे.

**सहस्रवेधिन्**—सहस्रवेधि क्लीव स्याद्रामठे नाऽम्लवेतसे, मे सहस्रवेधी स्यादम्लवेतसे रामठेऽपि च, वि सहस्रवेधी चुक्रे सहस्रवेधि तु हिङ्गौ, हे

**सह्य**—सह्य शैलान्तरे पुमान्। सोढव्ये वाच्यलिङ्ग स्यादारोग्ये तु नपुसवम् मे सह्य शैलान्तरारोग्यसोढव्येषु प्रचक्षते, वि सह्यमारोग्ये सोढव्ये शैले, हे ना शैले सह्यमारोग्यम्, त्रि

**साक्षात्**—साक्षात्प्रत्यक्षतुल्ययो, मे, वि, हे, अ प्रत्यक्षसदृशो साक्षात्, ह

**साति**—सातिर्दानेऽवसाने स्त्री, मे सातिर्दानेऽवसाने च, वि साति-र्दानावसानयो, हे, अ

**सादिन्**—सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते, मे सादी तुरङ्गमारोहे निपादिरथिनोरपि, हे अथ सादिनौ द्वौ सारथिहयारोहौ, अ सादी तुरङ्ग-मातङ्गरथारोहेषु कथ्यते, वि

**साधन**—साधन मृतसस्कारे सैन्ये सिद्धे वधे गतौ। निर्वर्तनोपायमेढ्रे दापनेऽनुगमे धने, मे साधन निर्वृतौ मेढ्रे सैन्ये सिद्धे वधे गतौ। उपाये मृतसस्कारे दापनेऽनुगमे धने, वि साधन सिद्धिसैन्ययो। उपायेऽनुगमे मेढ्रे निवृत्तौ कारके वधे। दापने मृतसस्कारे प्रमाणे गमने धने, हे मारणे मृतसस्कारे गतौ द्रव्ये-ऽर्थदापने। निर्वर्तनोपकरणानुव्रज्यासु च साधनम्, अ साधन सिद्धमेढ्रयो, त्रि उपकरणे करणे च द्रविणे लिङ्गे च यातनायाञ्च। सेनाङ्गे सरिद्धौ साधनशब्द प्रयोग स्यात्, ह

**साधिष्ठ**—साधिष्ठोऽतिदृढार्थयो, मे, वि अथ साधिष्ठोऽत्यार्ये दृढतमेऽपि च, हे

**साधीयस्**—साधीयानतिवाढे स्यादतिसाधौ च वाच्यवत्, मे साधीयानति वाढे स्यादतिसाधौ तु वाच्यवत्, वि साधीयानतिशोभने। अतिवाढे, हे (अतिशये) साधीयान् साधुवाढयो, अ

**साधु**—साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत, मे, वि साधुर्जिने मुनौ वार्धुषिके सज्जनरम्ययो, हे साध रम्येऽपि च त्रिषु, अ त्रिषु साधुर्धनिन्यपि, त्रि

**साध्य**—साध्यो योगान्तरे स्मरे। गणदेवविशेषे च साधनीये तु वाच्यवत मे साध्याभिख्या साधनीये गणदैवतयोगयो, वि साध्यो योगे साधनीये गण-दैवतभिद्यपि, हे साध्या देवा फले साध्यम्, त्रि

**सानु**—सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रकोविदे, मे सानु शृङ्गे बुधे मार्गे वात्याया पल्लवे वने, वि

**सान्त्व**—सान्त्व दाक्षिण्यसामनो, मे सान्त्व सामनि दाक्षिण्ये, वि, हे

**सान्द्र**—सान्द्र वने घने मृदौ, मे सान्द्रो घनकाननयोर्मृदौ, वि

**सामज**—सामजस्तु गजे पुसि सामोत्थे पुनरन्यवत्, मे सामजस्तु गजे प्रोक्त सामोत्थे पुनरन्यवत्, वि सामजस्तु सामोत्थे कुञ्जरेऽपि च, हे सामज कुञ्जरो ज्ञेय सामज सामजो मत, अने

**सामन्**—साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च, मे

**सामयोनि**—सामयोनिस्तु सामोत्थे ब्रह्मकुञ्जरयोरपि, मे सामयोनिस्तु सामोत्थे सामयोनिर्गजे विधौ, वि सामयोनिस्तु सामोत्थे द्रुहिणे गजे, हे

**सामर्थ्य**—सामर्थ्य योग्यताया स्याच्छक्तावपि नपुसकम्, मे सामर्थ्य *योग्यताशक्तौ*, वि *सामर्थ्य योग्यताशक्त्यो* हे

**सामि**—सामि निन्दार्धयोर्मतम्, मे, वि सामि त्वर्धे जुगुप्सिते, अ

**सामिधेनी**—सामिधेनी तु धाय्याया समिध्यपि च योषिति, मे सामिधेनी ऋचि प्रोक्ता सामिधेनी समिध्यपि, वि सामिधेनी समिदृचो, हे

**सामुद्र**—सामुद्र देहलक्षणे। समुद्रजेऽन्यलिङ्ग मे सामुद्र देहलक्षणे। सामुद्रञ्च समुद्रीयलवणादिषु भेद्यवत्, वि सामुद्र लवणान्तरे। लक्षणे च शरीरस्य, हे

**साम्प्रतम्**—साम्प्रतञ्चाधुनार्थे स्यादुचितार्थे च दृश्यते, मे साम्प्रतञ्चाधुनार्थे स्याद्युक्तार्थेऽपि च साम्प्रतम्, वि साम्प्रत तच्चितेऽधुना, हे युक्तार्थे साधनार्थे च साम्प्रत तद्विदो विदु, त्रि वर्तमाने च युक्ते च साम्प्रत सप्रचक्षते, ह

**साय**—साय काण्डे दिनान्ते च, मे साय काण्डापराह्णयो, वि साय शरेऽपराह्णे च, हे

**सायक**—सायक शरखड्गयो, मे, वि सायक खड्गवाणयो, हे शरे खड्गे च सायक, अ सायकौ वाणमार्गणौ, अने

**सार**—सारो बले स्थिराशे च मज्ज्ञि पुसि जले घने। न्याय्ये क्लीव त्रिपु वरे, मे सारो बले मज्जनि च स्थिराशे न्याय्ये च नीरे च धने च सारम्। वरेऽन्यवत्सारमुदाहरन्ति, वि सारो मज्जास्थिराशयो। बले श्रेष्ठे च सारस्तु द्रविणन्याय्यवारिषु, हे सारो बले स्थिराशे च न्याय्ये क्लीव वरे त्रिपु, अ श्रेष्ठे स्वाम्नि धने शुक्रे मज्ज्ञि सार उदाहृत, ह

**सारङ्ग**—सारङ्ग पुसि हरिणे चातके च मतङ्गजे। शबले त्रिपु, मे सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे। पक्षिभेदे च सारङ्ग सारङ्ग शबलेऽन्यवत्, वि सारङ्गो विहगान्तरे। चातके चञ्चरीके च द्विपेणशबलेषु च, हे चातके

हरिणे पुंसि सारङ्ग शवले त्रिषु, अ सारङ्गश्चातके स्यात सारङ्ग कुञ्जरो मत । सारङ्गो भ्रमरो ज्ञेय सारङ्गो हरिणो मत , अने

**सारण**—सारणो राक्षसान्तरे। रुग्भेदे ना प्रसारण्या स्वल्पनद्याञ्च सारणी, मे सारणी स्वल्पसरिति प्रसारण्याञ्च सारणी। सारण स्यादतीसारे सचिवे रावणस्य च, वि सारण स्यादतीसारे दशकन्धरमन्त्रिणि, हे

**सारस**—सारस पक्षिभेदेन्द्वो क्लीवन्तु सरसीरुहे, मे सारस पक्षिभेदे स्यात्सारस सरसीरुहे, वि सारस सरसीरुहि। सारस पुष्कराख्येन्द्वो , हे अथ सारसम्। पद्मे ना पक्षिणीन्दौ च, त्रि

**सारसन**—सारसनमप्युरस्त्रे तनुत्रिणा मेखलायाञ्च, मे सारसन मेखलाया-मुरस्त्रे च तनुत्रिणाम्, वि सारसनमुरश्छदे। काञ्च्याञ्च, हे

**सार्थ**—सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके, मे , वि सार्थो वणिग्गणे वृन्दे धनेन सहितेऽपि च, हे

**सार्वभौम**—सार्वभौमन्तु दिङ्नागे सर्वपृथ्वीपतावपि, मे , वि सार्वभौमन्तु दिग्गजे चक्रवर्तिनि, हे सार्वभौमो गजे राज्ञि, त्रि

**साल**—साल पादपमात्रे स्यात्प्राकारे सर्जपादपे, मे साल पादपमात्रे स्यात्प्राकारे सङ्कुतद्रुमे, वि साल सर्जतरौ वृक्षमात्रप्राकारयोरपि, हे सालो वरणसर्जयो , त्रि साल प्राकारवृक्षयो अने

स्युः सिकताऽप्यामयान्तरे। सिकतान्वितदेशे च शर्करायाञ्च कीर्तिता, वि सिकताः स्युर्वालुकाया सिकता सैकते रुजि, हे सिकता स्युर्वालुकापि, अ

**सिक्थ**—सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्, मे, त्रि सिक्थ नील्या मधूच्छिष्टे सिक्थं भक्तपुलाकके, हे सिक्थ नील्यां मधूच्छिष्टे सिक्थ ओदनसम्भवे, वि.

**सित**—सितमवसिते च बद्धे धवले त्रिपु शर्कराया स्त्री, मे. सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा, हे सित. समाप्ते धवले निबद्धज्ञातयोरपि, वि बद्धार्जुनौ सितौ, अ. शर्करापि सिता, त्रि सितो बद्ध सित शुक्ल सित रजतमुच्यते। सायकोऽपि सितो ज्ञेय. सितो दैत्यपुरोहित , अने.

**सिद्ध**—सिद्धो ना व्यासादौ भेदे योगस्य देवयोनेश्च। त्रिपु निष्पन्ने, मे. सिद्धो व्याड्यादिपु स्यातः सिद्धा स्युर्देवयोनिपु। नित्ये प्रसिद्धे निष्पन्ने, वि सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः। नित्ये प्रसिद्धे, हे. सिद्धस्तु नित्यनिष्पन्दनादिपु, त्रि.

**सिद्धरस**—सिद्धरसो रसे पुंसि व्याडिप्रभृतिपु त्रिपु, मे. सिद्धरसो रसे व्याडिप्रभृतिपु च दृश्यते, वि.

**सिद्धार्थ**—सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्पपे, मे. सिद्धार्थ शाक्यसिंहे स्यात्सिद्धार्थः सितसर्पपे, वि. सिद्धार्थः सर्पपे शाक्यसिंहेऽपि जिननप्तरि, हे सिद्धार्थः सर्पपे वृद्धे, त्रि.

**सिद्धि**—सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिपु, मे. सिद्धिर्निष्पत्तियोगयोः, वि. सिद्धिस्तु मोक्षे निष्पत्तियोगयोः, हे.

**सिध्मल**—सिध्मला मत्स्यविकृतौ वाच्यवत् किलासिनि, मे सिध्मल किलासी सिध्मला मत्स्यचूर्णके, हे. सिध्मला मत्स्यचूर्णे स्यात्सिध्मलश्च किलासिनि, वि. सिध्मला शुष्कमीने स्त्री त्रिलिङ्गयान्तु किलासिनि, त्रि.

**सिनीवाली**—सिनीवाली तु दृष्टेन्दुकलामादुर्गयो. स्त्रियाम्, मे.

**सिन्दूर**—सिन्दूरस्तरुभेदे स्यात्सिन्दूर रक्तचूर्णके। सिन्दूरी रोचनीरक्तचेलिकाधातकीपु च, मे, वि. सिन्दूरं नागसम्भवे। सिन्दूरस्तु वृक्षभेदे सिन्दूरी रक्तचेलिका। रोचनी धातकी, हे.

**सिन्दूरतिलक**—सिन्दूरतिलक उक्तो मतङ्गजे स्त्री तु कामिन्याम्, मे. सिन्दूरतिलको नागे सिन्दूरतिलका स्त्रियाम्, वि. सिन्दूरतिलको हस्ती सिन्दूरतिलकाङ्गना, हे.

**सिन्धु**—सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्, मे. सिन्धुः समुद्रे

नद्याञ्च नदे देशोभदानयो, वि सिन्धुर्नद्या गजमदेऽब्धौ देशनदभेदयो, हे देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्, अ सरित्समुद्रयो सिन्धु, अने सिन्धु समुद्रनदयो, ह

**सिप्र**—सिप्रो निदाघसलिले सिप्रा तु सरिदन्तरे, मे सिप्र स्वेदे सिप्रा नद्याम् हे

**सिर**—सिरा नाड्यम्बुवाहिनी। सिरस्तु पिप्पलीमूलम्, हे v शिर

**सीता**—सीता लाङ्गलपद्धतिर्वैदेहीस्वर्गगङ्गासु मे सीता जनकजागङ्गा-भेदयोर्हलपद्धतौ, हे सीता रामकलत्रे स्यात्तथा लाङ्गलपद्धतौ। नभोनद्याञ्च, वि सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी, त्रि सीता लक्ष्मीरुमा सीता सीता सस्याधिदेवता। सीता सीरध्वजापत्य सीता मन्दाकिनी मता अने

**सीमन्**—सीमा घाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्, मे सीमा वाटे स्थितौ क्षेत्रे त्रि

**सीमा**—सीमा घाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम्, मे सीमा घाटे स्थितौ क्षेत्रे मर्यादावेलयोरपि वि सीमा घाटे स्थितौ क्षेत्रे, हे

**सीर**—सीरोऽर्कहलयो पुंसि मे सीरस्तिग्मकरे हले, वि सीर स्यादंशु-मालिनि। लाङ्गल हे हलतिग्मकरौ सीरौ त्रि

**सु**—सु पूजाया भृशार्थानुमतिकृच्छ्रसमृद्धिषु वि, मे

**सुकर्मन्**—सुकर्मा तु पुमान्योगभेदे स्याद्देवशिल्पिनि, मे सुकर्मा ग्रहयोगे स्यात्सुकर्मा देवशिल्पिनि, वि सुकर्मा योगभेदे स्यात्सुक्रिये देवशिल्पिनि, हे

**सुकुमार**—सुकुमारो मृदौ त्रिषु। पुंसि पुण्ड्राभिधानेक्षौ, मे सुकुमारश्च पुण्ड्रक्षौ कोमले स्वभिधेयवत् वि सुकुमारश्च कोमले। पुण्ड्रेक्षौ, हे

**सुकृत**—सुकृतन्तु शुभे पुण्ये क्लीव सुविहिते त्रिषु, मे सुकृतन्तु शुभे पुण्ये सुविधाने च वाच्यवत, वि सुकृतन्तु शुभे पुण्ये सुविधाने, हे

**सुख**—सुख शर्मणि नाके च सुखा पुर्या प्रचेतस, मे, वि सुख त्रिदिवशर्मणो। सुखा प्रचेतस पुर्याम्, हे

**सुखाश**—सुखाशो वरुणे राजतिनिशे सुखभोजने, मे सुखाशो राजतिनिशे शाभनाशप्रचेतसो, वि सुखाशस्तु प्रचेतसि। शुभाशे राजतिनिशे, हे

**सुगन्धि**—सुगन्धि स्यादिष्टगन्धे त्रिषु क्लीवन्तु वालुके, मे सुगन्धि स्यादिष्ट-गन्धे सुगन्धि हरिवालुके, वि

सुगम—सुगमः कोमले काव्ये, अने.

सुग्रीव—सुग्रीवो वासुदेवस्य हये शाखामृगेश्वरे, मे. सुग्रीव. शोभनग्रीवे सुग्रीवो वानराधिपे, वि.

सुत—सुतस्तु पार्थिवे पुत्रे स्त्र्यपत्ये तु सुता स्मृता, मे. सुत· पार्थिवपुत्रयो·, वि. सुतः पुत्रे नृपे, हे. पार्थिवे तनये सुत·, अ.

सुतल—सुतलोऽट्टालिकाबन्धनागलोकप्रभेदयो , मे. सुतलप्रतलौ चेति पाताल-भुवनद्वये। स्यातामट्टालिकाबन्धे तताङ्गुलिकरे क्रमात्, वि सुतलोऽट्टालिकाबन्धे पातालभुवनान्तरे, हे.

सुदर्शन—सुदर्शनो हरेश्चक्रे मेरुजम्बूद्रुमे पुमान्। न द्वयो. शक्रनगरे आज्ञौ-षधिभिदोः स्त्रियाम्, मे सुदर्शनो हरेश्चक्रेऽमरावत्या सुदर्शना। आज्ञायामोषधी-भेदे मेरुजम्ब्वा सुदर्शना, वि सुदर्शन·। विष्णोश्चक्रे सुदर्शन्यमरावत्या सुदर्शना। आज्ञायामौषधीभेदे मेरुजम्ब्वा सुराभिदि, हे.

सुदामन्—सुदामा तु पुमान् वारिधरपर्वतभेदयो , मे. सुदामा भूधरे मेघे, वि. सुदामा पर्वते मेघे, हे

सुधन्वन्—सुधन्वा प्रौढधानुष्के त्रिपु ना विश्वकर्मणि, मे सुधन्वा प्रौढधानुष्के सुधन्वा विश्वकर्मणि, वि. सुधन्वा त्वष्टृधन्विनो , हे.

सुधा—सुधा स्त्री लेपने मूर्वास्नुहीगङ्गेष्टिकामृते, मे. सुधाऽमृते स्नुहीमूर्वालेप-गाङ्गेष्टिकासु च, वि. सुधा गङ्गेष्टिकास्नुह्योर्मूर्वलिपामृतेपु च, हे सुधा लेपोऽमृत स्नुही, अ. सुधा प्रासादभाग्द्रव्यं सुधा विद्युत्सुधाऽमृतम्। सुधैकभोजन ज्ञेय सुधा धात्री सुधा स्नुही, अने.

सुधासूति—सुधासूति. पुमान् मखे। चन्द्रे, मे सुधासूतिर्मखे विधौ, वि.

सुनन्दा—सुनन्दा रोचनोमयोः, मे. सुनन्दा रोचनानार्योः, वि. सुनन्दा रोचनाऽङ्गना। जननीबाहुबलिनोः, हे.

सुनार—सुनारस्तु शुनीस्तन्ये सर्पाण्डकलविङ्कयो', मे., वि. सुनारस्तु शुनीस्तन्ये सर्पाण्डे चटकेऽपि च, हे.

सुनीति—सुनीतिः शोभननये ध्रुवमातरि योषिति, मे. सुनीति. शोभननये सुनीतिर्ध्रुवमातरि, वि. सुनीतिर्ध्रुवमाता स्यात्सुनयोऽपि, हे.

सुन्दर—सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत्, मे. सुन्दरी स्त्रीतरु-भिदोः, वि. सुन्दर्यङ्गनायां द्रुमान्तरे, हे.

सुपर्ण—सुपर्णः स्वर्णचूडे च गरुडे कृतमालके। सुपर्णा कमलिन्याञ्च वैनतेयस्य मातरि, मे. सुपर्णस्ताम्रचूडे स्याद् गरुडे कृतमालके। सुपर्णा कमलिन्याञ्च

सुपर्णा तार्क्ष्यमातरि, वि सुपर्ण कृतमालके। गरुडे स्वर्णचूडे च सुपर्णा विनताऽञ्जिनी, हे

**सुपर्वन्**—सुपर्वा ना शरे वशे पर्वधूमसुरेषु च, मे सुपर्वा त्रिदशे वंशे शरे धूमेऽपि पर्वणि, वि सुपर्वा पर्वणि शरे त्रिदशे वंशधूमयो, हे धूमवंशशराऽमर्त्या सुपर्वाण प्रकीर्तिता, त्रि

**सुप्ति**—सुप्ति स्पर्शाज्ञतानिद्राविश्रम्भे शयने स्त्रियाम्, मे सुप्ति स्पर्शाज्ञतायाञ्च स्वापे विश्रम्भघातिनि, वि सुप्ति स्वापे स्पर्शाज्ञतारुजि, हे

**सुप्रतीक**—सुप्रतीक शोभनाङ्गे भवेदीशानदिग्गजे, मे, वि सुप्रतीक स्यादीशानदिग्गजे शोभनाङ्गके, हे

**सुभाषित**—सुभाषितो बुद्धे पुमान् सूक्ते नपुसकम्, मे

**सुमनस्**—सुमना पुष्पमालत्यो स्त्रिया ना धीरदेवयो, मे, त्रि सुमना पुष्पमालत्योस्त्रिदशे कोविदेऽपि च, वि सुमना प्राज्ञदेवयो। जात्या पुष्पे, हे ज्ञेया सुमनसो देवा कुसुमानि च सज्जना, अने

**सुमुख**—सुमुखस्तार्क्ष्यतनये सूरिनागप्रभेदयो, मे सुमुखस्तार्क्ष्यतनये फणिभेदे च पण्डिते, वि सुमुखो गरुडात्मजे। पण्डिते फणिभेदे स्यात्, हे सुमुखस्तार्क्ष्यपुत्रे, त्रि

**सुमेधस्**—सुमेधास्तु स्त्रिया ज्योतिष्मत्या त्रिषु सुबुद्धिनि, मे सुमेधास्तु सुबुद्धौ स्याज्ज्योतिष्मत्यामपीष्यते, वि सुमेधास्तु ज्योतिष्मत्या विदुष्यपि, हे

**सुयामुन**—सुयामुनो वत्सराजे प्रासादेऽद्रयन्तरेऽच्युते, मे, वि सुयामुनो जनार्दने। वत्सराजे प्रासादेऽद्रिभेदे, हे

**सुर**—सुरा चपकमद्ययो। पुलिङ्गस्त्रिदिवेशे स्यात्, मे सुरो देवे सुरा मद्ये चपकेऽपि सुरा क्वचित्, वि सुरो देवे सुरा चपकमद्ययो, हे

**सुरत**—सुरत स्यान्निधुवने देवत्वे सुरता स्मृता, मे सुरत स्यान्निधुवने देवत्वे सुरता मता, वि

**सुरततालो**—भवेत्सुरततालो तु दूतिकाया शिर स्रजि, मे, वि सुरततालो शिर स्रग्दूत्यो, हे

**सुरभि**—सुरभि शल्लकीमातृभिन्मुरागोषु योषिति। चम्पके च वसन्ते च तथा जातीफले पुमान्। स्वर्णे गन्धोपले क्लीव सुगन्धिकान्तयास्त्रिषु। विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्, मे सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयो। गन्धोपले सौरभेय्या शल्लकीमातृभेदयो। सुगन्धे च मनोज्ञे च वाच्यवत्सुरभि स्मृत, वि सुरभिर्हेम्नि चम्पके। जातीफले मातृभेदे रम्ये चैत्रवसन्तयो।

सुगन्धौ गवि शल्लक्याम् हे सुरभिर्गवि च स्त्रियाम्, अ सुरभि स्याद्वसन्तेऽपि सभाद्यतालयेऽपि च, त्रि श्रेष्ठेऽपि निगद्यते सुरभि, ह

सुरस—सुरसस्तु त्रिषु स्वादौ पर्णास तु नपुसकम। स्त्रीरास्नानागमात्रोश्च म सुरस स्यात्सुमधुरे पर्णासे सुरसाऽपि च वि सुरस स्वादौ पर्णासे, ह

सुरूप—सुरूपस्तु बुधे रम्ये प्राप्तरूपाभिरूपवत् हे v प्राप्तरूप

सुवर्ण—सुवर्णो ना स्वर्णकर्षे सुवर्णालुमखान्तरे। स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने, मे सुवर्ण स्वर्णमात्र स्यात्सुवर्ण कर्षविस्तयो। सुवर्णश्च सुवर्णालुकृष्णागुरुमखान्तर, वि सुवर्ण काञ्चने कर्षे सुवर्णालौ मखान्तरे। कृष्णागुरुणि विस्ते च, हे सुवर्ण मानभदेऽपि, त्रि

सुवसन्तक—सुवसन्तक उद्दिष्टो वासन्त्या मदनोत्सवे मे सुवसन्तक इत्येप वासन्त्या मदनोत्सवे, वि

सुवह—सुवहा शल्लक्येलापर्णीगोधापदीषु वीणायाम। रास्नाशफालिक्यो स्त्री सुखवाह्येऽन्यलिङ्ग स्यात् म सुवहा सल्लकीगोधापदीशफालिकासु च। एलापर्ण्यां च सुवहा वल्लकीरास्नयोरपि। सम्यग्वाहे तु सुवहो वाच्यवत्समुदाहृत, वि सुवहस्तु सम्यग्वह सुवहा शल्लकीद्रुमे। रास्नाशफालिकागोधापद्येलापर्णिकासु च, हे

सुवेल—सुवेल प्रणते शान्ते त्रिषु ना पर्वतान्तरे, मे सुवेल प्रणत शान्ते सुवेल पर्वतान्तरे वि सुवेल प्रणते शान्ते गिरिभेदे, ह

सुव्रत—सुव्रता सुखसन्दोह्या शोभनव्रतयोरपि, मे सुव्रता सुखसन्दोह्यसुरम्या शुभजव्रते। वाच्यवत, वि सुव्रता। सुखदाह्यसौरभेय्या सुव्रतोऽर्हति सद्व्रते हे सुदोह्यो गौश्च सुव्रता, त्रि

सुषम—सुषमाऽऽनन्तशोभाया स्त्री चारौ च समे त्रिषु मे सुषम चारसमयो सुषमा परमद्युतौ, वि सुषम रुचिरे समे। सुषमा तु स्यात्परमशोभाया काल भिद्यपि, हे

सुषवी—सुषवी कारवेल्ले स्यात्कृष्णजीरकजीरयो, मे, वि सुषवी कृष्णजीरके। जीरके कारवेल्ले च, हे

सुषीम—सुषीम शीतले चारौ त्रिषु ना पन्नगान्तरे, मे सुषीम शिशिरे चारौ सुषीम पन्नगान्तरे वि सुषीम शिशिरे रम्ये, ह

सुषेण—सुषेण करमर्दे स्याद्विष्णुसुग्रीववैद्ययो, मे सुषेण करमर्देऽपि विष्णुसुग्रीववैद्ययो, वि सुषेणो विष्णुसुग्रीववैद्यया करमर्दके, हे विष्णौ सुषेण करमर्दके। कपिवैद्ये च, त्रि

**सुष्ठु**—सुष्ठु प्रशसनेऽपि स्यादत्यर्थे च निगद्यते, मे सुष्ठु प्रशसनेऽपि स्याद त्यर्थेपि च कथ्यते, वि सुष्ठ्वत्यर्थप्रशसयो , नि

**सूक**—सूक इत्यपि। वाणवातोत्पले, मे सूका वाणोत्पलवाता , हे सूको वाणानिलोत्पले, वि

**सूक्ष्म**—सूक्ष्म स्यात्कतकेऽध्यात्मे पुस्यणौ त्रिपु चाल्पके, मे सूक्ष्म स्यात्कतके ऽध्यात्मेऽप्यणौ सूक्ष्मोऽल्पकेऽन्यवत्, वि सूक्ष्मोऽणौ सूक्ष्ममल्पके। अध्यात्मे कतके, हे सूक्ष्ममध्यात्ममपि, अ

**सूचक**—सूचक सीवनद्रव्ये बोधके पिशुने शुनि। ओतौ काके, मे सूचक सीवनद्रव्ये बोधके वृपदशके। पिशुने शुनि काके च, वि सूचक शुनि दुर्जने। कथके सीवनद्रव्ये मार्जारे वायसेऽपि च, हे सूचकौ खलकुक्कुरौ, त्रि

**सूचना**—सूचना व्यधने दृष्टौ गन्धनऽभिनयेऽपि च, मे , वि सूचना स्यादभिनये गन्धने व्यधने दृशि, हे

**सूची**—सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे, मे सूची कराद्यभिनये नारीणा करणान्तरे। सूची च सीवनद्रव्ये, वि सूच्यभिनये व्यधने करणे स्त्रियाम हे सूची नृत्यप्रभेदे च व्यधनीशिखयोरपि, त्रि

**सूत**—सूतस्तु सारथौ तक्षिण क्षत्रियाद्ब्राह्मणीसुते। वन्दिपारदयो पुसि प्रसूते प्रेरिते त्रिपु मे सूत पारदसारथ्यो प्रसूतेरितवन्दिपु। ब्राह्मण्या क्षत्रिया ज्जाते तक्षिण हे सूतस्तु सारथौ तक्षिण प्रसूते प्ररितेऽपि च। क्षत्रियाद्ब्राह्मणीजेऽपि सूत पारदवन्दिनो वि सूतस्त्वष्टरि सारथौ, अ भूतो वन्दिनि पारदे, त्रि सूतो भास्कर इत्युक्त सूत सारथिरुच्यते अने

**सूतक**—सूतकोऽस्त्री पारदे न द्वयोर्जनौ, मे सूतक रसजन्मनो , वि सूतक जन्मनि रसे, हे, अथ जन्मनि। सूतक पारदेऽप्यस्त्री, त्रि

**सूत्र**—सूत्र तन्तुव्यवस्थयो । शास्त्रादिसूचनाग्रन्थे, मे सूत्रन्तु रचनाया स्यात्सूत्र तन्तुव्यवस्थयो वि सूत्रन्तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयो , हे तन्त्वाद्य ग्रन्थयो सूत्र कारणेऽपि च, त्रि

**सूत्रकण्ठ**—सूत्रकण्ठ पुमान् विप्रे खञ्जरीटकपोतयो मे सूत्रकण्ठो द्विजे प्रोक्त खञ्जरीटकपोतयो , वि सूत्रकण्ठ खञ्जरीटे द्विजन्मनि कपोतके, हे सूत्रकण्ठो द्विजेऽपि च, हा सूत्रकण्ठो द्विजन्मनि। कपोतविहगेऽपि स्यात्, त्रि

**सूत्रधार**—सूत्रधार शचीपतौ। नान्द्यन्तरमुसञ्चारिपात्रशिल्पिप्रभेदया मे सूत्रधार शचीपतौ। नान्द्यनन्तरसञ्चारिपात्रशिल्पिप्रभेदयो , वि सूत्रधारस्तु शिल्पिभेदे नटेन्द्रयो , हे

सूद—सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे, मे. सूदस्तु सूपवत्सूपकारे च व्यञ्जनेऽपि च, वि. सूदः सूपकारे व्यञ्जनेऽपि च सूपवत्, हे सूद स्याद्व्यञ्जनेऽपि च, अ. व्यञ्जने सूपकारे च सूद सूपवदिष्यते, त्रि. सूद स्यात्सूपकारश्च सूदो ज्ञेय. कुटुम्बिक., अने.

सून—सूनं प्रसवपुष्पयोः। सूना पुत्र्या वधस्थानगलशुण्डिकयो स्त्रियाम्, मे. सूनं वाच्यवदुच्छूने सूनं प्रसवपुष्पयो। सूना पुत्र्यां वधस्थानगलशुण्डिकयोरपि, वि. सूनं पुष्पे सूना पुनः सुता। अधोजिह्वा वधस्थानम्, हे. सूनाऽधोजिह्विकाऽपि च, अ. सून पुष्पे फलेऽपि च, त्रि.

सूनु—सूनुः पुत्रेऽनुजेऽर्के ना, मे. सूनुः पुत्रेऽनुजे रवौ, वि, हे. पुत्रे रवौ च सूनुः स्याद्भ्रातर्यपि कनीयसि, त्रि. सूनु. पुत्रे तथाऽनुजे, अने.

सूनृत—सूनृतं मङ्गलेऽपि स्यात्प्रियसत्ये वचस्यपि, मे. सूनृत मङ्गले सत्यप्रियवाचि च सूनृतम्, वि. सूनृत. शिक्षितो मर्त्य. सूनृत सत्यवद्वच, अने. सूनृतम्। मङ्गले प्रियसत्योक्तौ, हे. सूनृतं कुशले सत्ये, त्रि.

सूप—सूपो व्यञ्जनसूदयोः, मे. सूपो व्यञ्जनभेदे स्यात्सूपकारे च कीर्तितः, वि. *v*. सूद.

सूम—सूमं क्षीरे च नभसि, मे. सूमं क्षीरे नभस्यपि, वि

सूर—सूरः सूर्यनरेश्वरौ, अने. *v*. शूर.

सूर्य—सूर्योऽर्कपर्णे तपने स्त्री तद्भार्यौ षधीभिदोः, मे. सूर्यः सूरे तत्प्रियाया सूर्या स्यादोपधावपि, वि.

सूर्यभक्त—सूर्यभक्तस्तु बन्धूके पुंसि त्रिष्वर्कपूजके, मे. सूर्यभक्तो बन्धुजीवे तथा भास्करपूजके, वि. सूर्यभक्तो बन्धुजीवे भास्करस्य च पूजके, हे.

सृति—सृतिः स्त्री गमने मार्गे, मे. सृतिर्गतौ पथि, हे सृतिर्गमनमार्गयो, वि.

सृदाकु—सृदाकुर्नाऽनिले वज्रे ज्वलने प्रतिसूर्यके, मे सृदाकुरनिले वज्रे दावाग्नौ प्रतिसूर्यके, वि. सृदाकुर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे, हे.

सृष्ट—सृष्टस्तु निर्मिते। युक्तनिश्चितयो. प्राज्ये त्रिषु, मे. सृष्टं निश्चितयुक्तयोः। प्रचुरे निर्मिते च, हे. सृष्टन्तु निर्मिते। युक्तनिश्चितयो· प्राज्ये, वि. सृष्टं निश्चिते बहुनि त्रिषु, अ.

सृष्टि—सृष्टिस्तु निर्मितौ। स्वभावे चापि वर्धिता, मे. सृष्टिः स्वभावे निर्माणे, वि., हे.

सेचक—सेचकः स्यात्पुमान् मेघे वाच्यलिङ्गस्तु सेक्तरि, मे. सेचकः सेक्तृमेघयोः, हे., वि.

**सेचन**—सेचन रक्षणे सेके नौकाया. सेकभाजने, मे सेचन रक्षणे सेके नौकासेचनभाजने, वि.

**सेतु**—सेतुर्नालौ कुमारके, मे सेतुस्तु सञ्चरे। नदीसङ्क्रमे, हे सेतुरालौ च वरुणे, वि

**सेनानी**—सेनानी स्यात्पुमान् कार्तिकेये सेनापतावपि, मे सेनानी कार्तिकेये स्यात्तथा सेनापतावपि, वि सेनानी सैन्यपे गुहे, हे

**सेनापति**—सेनापति कार्तिकेयेऽप्यनीकाधिपतौ पुमान्, मे सेनापति कार्तिकेयेऽप्यनीकाधिकृतेऽपि च, वि

**सेवक**—सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि, मे सेवकस्तु प्रसेवे स्यादनुजीविनि चान्यवत्, वि सेवकोऽनुगे प्रसेवे, हे

**सेवन**—सेवन सीवनोपास्त्यो , मे , वि , त्रि , हे

**सेव्य**—सेव्य क्लीवमुशीरे स्यात्सेवार्हे पुनरन्यवत्, मे सेव्य प्रोक्तमुशीरे च सेवार्हे पुनरन्यवत्, वि सेव्यमुशीरे सेवार्हे, हे

**सैकतिक**—अथ सैकतिक मातृयात्रामङ्गलसूत्रके। ना सन्न्यस्ते क्षपणके त्रिषु सन्देहजीविनि, मे भवेत्सैकतिक मातृयात्रामङ्गलसूत्रयो । तथा सन्न्यस्तसन्देहजीवक्षपणकेष्वपि, वि सैकतिक पुनर्मातृयात्रामङ्गलसूत्रयो । सैकतिक क्षपणके सन्न्यस्ते भ्रान्तिजीविनि, हे

**सैनिक**—सैनिक सैन्यरक्षे च स्यात्सेनासमवेतके, मे

**सैन्धव**—सैन्धवोऽस्त्री माणिमन्थे नाऽश्वे सिन्धुभवे त्रिषु, मे सैन्धवो माणिमन्थेऽपि सिन्धुदेशोद्भवाश्वयो , वि सैन्धव सिन्धुदेशजे। सिन्धूत्थे स्यात्, हे सैन्धवो लवणाश्वयो , त्रि

**सैन्य**—सैन्य क्लीव बले सेनासमवेते तु वाच्यवत्, मे सैन्य सैनिकसैन्ययो , हे

**सैरिन्ध्री**—सैरिन्ध्री परवेश्मस्थाशिल्पकृत्स्ववशस्त्रियाम् । वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोरपि, मे , वि , हे

**सोढृ**—सोढा मर्पणशक्तयो , वि , हे सोढा तितिक्षासयुक्ते शक्ते चाप्यभिधेयवत्, मे

**सोम**—सोमस्तु हिमदीधितौ। वानरे च कुवेरे च पितृदेवे समीरणे। वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ, मे सोम कुवेरे पितृदेवतायां वसुप्रभेदे च सुधाकरे च। दिव्यौषधीसोमलतासमीरकर्पूरनीरेषु च वानरे च, वि सोमस्त्वोषधीनद्धेन्दुषु। दिव्यौषध्या घनसारे समीरे पितृदैवते। वसुप्रभेदे सलिले वानरे किन्नरेश्वरे, हे

**सोमवल्क**—सोमवल्कस्तु धवलखदिरे कट्फलेऽपि च, मे, वि सोमवल्क कट्फले स्याद्धलक्षखदिरद्रुमे, हे अथ कट्फले। सिते च खदिरे सोमवल्क स्यात्, अ

**सौकर्य**—सौकर्य स्यादनायासे क्रियाया सूकरस्य च वि

**सौगन्धिक**—सौगन्धिकन्तु कह्लारे पद्मरागेऽपि कत्तृणे। पुलिङ्गो गन्धपाषाणे सुगन्धव्यवहारिणि, मे सौगन्धिको गन्धवणिक् सौगन्धिकन्तु कत्तृणे। गन्धोपले पद्मरागे कह्लारे, हे सौगन्धिकन्तु कह्लारे पद्मरागे च कत्तृणे। गन्धोपले गान्धिके च सौगन्धिक इति ध्वनि, वि

**सौदाम(मि)नी**—सौदामन्यप्सरोभेदे तडित्तद्भेदयो स्त्रियाम्, मे सौदामिन्यप्सरोभेदे तडित्तद्भेदयोरपि, वि सौदामिनी तडिद्भेदतडितोरप्सरोभिदि, हे

**सौभाग्य**—सौभाग्य सुभगत्वे स्याद्योगभेदे नपुसकम् मे

**सौम्य**—सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते मे सौम्यो बुधे मनोज्ञे स्यादनुग्रे सोमदैवते। इल्वलासु च सौम्या स्युर्नीचे वोध्ये च वाच्यवत, वि सौम्य सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते। सौम्या पुनर्मृगशिर शिरस्था पञ्च तारका, हे सौम्यस्तु सुन्दरे सोमदैवते, अ

**सौरभ्य**—सौरभ्यन्तु मनोज्ञत्वे सौगन्ध्ये गुणगौरवे, मे सौरभ्यमाहु सौगन्ध्ये चारुत्वे गुणगौरवे, वि सौरभ्य चारुताऽपि च, त्रि

**सौवर्चल**—अथ सौवर्चल सर्जक्षारे च लवणान्तरे, मे

**सौवर्चस्**—सौवर्चो भक्तरक्तयो, अने

**सौवीर**—सौवीर काञ्जिके स्रोतोऽञ्जने च वदरीफले, मे सौवीर वदरे स्रोतोऽञ्जने देशे च काञ्जिके, वि सौवीर काञ्जिकस्रोतोऽञ्जनयोर्बदरीफले, हे स्रोतोऽञ्जने च सौवीर काञ्जिके वदरेऽपि च, त्रि सौवीरोऽश्वविशेष स्यात्सौवीर काञ्जिक मतम्, अने

**स्कन्ध**—स्कन्ध स्यान्नृपतावसे सम्परायसमूहयो। काये तरुप्रकाण्डे च भद्रादौ छदसो भिदि, मे स्कन्ध प्रकाण्डे सैन्याशे वाहुमूलसमूहयो। समीहानृपयोश्चापि, वि स्कन्ध प्रकाण्डे कायाशे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च, हे स्कन्ध समुदयेऽपि च, अ स्कन्ध सन्धेऽपि, त्रि (सघातेऽपि) स्कन्ध करिनरतुरङ्गाणाम्, ह

**स्खलित**—स्खलित छलिते भ्रंशे, हे, वि, मे

**स्तनन**—स्तनन ध्वनिमात्रे स्यान्मेघशब्दे च कुन्थिते, मे स्तनन ध्वनिमात्रे स्यात्कुन्थने घनगर्जिते, वि स्तनन कुन्थने मेघगर्जितध्वनिमात्रयो, हे

**स्तनयित्नु**—स्तनयित्नु पुमान् वारिधरेऽपि स्तनितेऽपि च, मे स्तनयित्नु पयोवाहे तद्ध्नौ मृत्युरोगयो , वि स्तनयित्नु पयोमुचि। मृतौ स्तनिते रोगे च, हे

**स्तम्ब**—स्तम्बोऽप्रकाण्डद्रुमगुच्छयो , मे स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च, वि स्तम्ब आलानगुल्मयो । व्रीह्यादीना प्रकाण्डे च, हे

**स्तम्भ**—स्तम्भ स्थूणाजडत्वयो , मे, वि स्तम्भोऽङ्गजाड्ये स्थूणायाम हे स्तम्भौ स्थूणाजडीभावौ, अ स्थूणास्तब्धत्वयो स्तम्भ , ह

**स्तवक**—स्तवक शुभ्रगुच्छयो वि

**स्तिमित**—स्तिमितोऽचञ्चलार्द्रयो मे स्तिमितोऽचञ्चले क्लिन्ने, वि स्तिमितौ क्लिन्ननिश्चलौ, हे त्रि

**स्तोक**—स्तोकस्त्रिष्वल्पे चातके पुमान मे स्तोक स्याच्चातकाल्पयो, हे स्तोकोऽल्पे चातके, वि चातकाल्पयो स्तोकम्, अने

**स्तोभ**—स्तोभ स्यात्सामविच्छेदे हेलने स्तम्भनेऽपि च, हे

**स्तोम**—स्तोम स्तोत्रेऽध्वरे वृन्दे अ

**स्त्यान**—स्त्यान स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि, मे वि स्त्यान स्यात्स्निग्ध आलस्ये प्रतिध्वानघनत्वयो हे

**स्थपति**—स्थपति कञ्चुकिन्यपि। जीवेष्टियाजके शिल्पिभेदे ना सत्तमे निपु, मे स्थपति शिल्पिभेदेऽपि कञ्चुकिन्यपि। जीवेष्टियाजके सूते, वि स्थपति सौविदेऽधीशे बृहस्पतीष्टियज्वनो । कारुके च हे स्थपति कारुभेदेऽपि, अ स्थपति कञ्चुकी कारुभेदो गीष्पतियागकृत् त्रि

**स्थाणु**—स्थाणु कीले हरे पुमान्। अस्त्री ध्रुवे, मे स्थाणु कीले स्थिरे हरे, वि स्थाणु कीले हरे हे स्थाणु शर्वोऽपि, अ स्थाणू शकुशिवौ, त्रि स्थाणु कीलेऽपि, ह

**स्थान**—स्थान सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे, मे स्थान स्थितौ च सादृश्ये सन्निवेशावकाशयो । युक्तार्थे कारणार्थे च स्थाने स्यादव्यय पुन , वि स्थान स्थित्यवकाशयो । सादृश्ये सन्निवेशे च, हे अवकाशे स्थितौ स्थानम् अ

**स्थाने**—स्थाने तु कारणार्थे स्याद्युक्तसादृश्ययोरपि, मे स्थाने तु कारणे। युक्ते साम्येऽपि, हे स्थाने तु कारणार्थे च युक्तसादृश्ययोरपि, वि

**स्थापन**—स्थापन रोपणे पुसवने पाठोपधौ स्त्रियाम्, मे स्थापन स्यात्पुसवने समाधौ रोपणेऽपि च, वि स्थापनन्तु निवेशने। पुसवने समाधौ च, हे

**स्थापित**—स्थापित निश्चिते न्यस्ते, मे , हे स्थापित निश्चिते न्यस्ते च, वि

**स्थाल**—स्थाल भाजनभेदेऽपि स्थाली स्यात्पाटलोखयो, मे, वि स्थाल भाजनभेदे स्यात्स्थाली तु पाटलोखयो, हे

**स्थासक**—स्थासक पुसि चार्चिक्ये जलादेरपि बुद्बुदे, मे स्थासकाख्या च चार्चिक्ये जलादेरपि बुद्बुदे, वि स्थासको हस्तविम्बे स्यात्सरकादेश्च बुद्बुदे हे

**स्थित**—स्थित ऊर्ध्वे सप्रतिज्ञे, हे स्थित प्रतिज्ञातवति चोर्ध्वनिश्चलयोस्त्रिषु, मे स्थित भवेद् गत्यभावे सुप्रतिज्ञे सुनिश्चिते, वि अधोर्ध्वे सप्रतिज्ञेऽपि च स्थित, त्रि

**स्थिति**—स्थिति स्त्रियामवस्थाने मर्यादायाञ्च सीमनि, मे स्थिति स्थाने च सीम्नि च, हे मर्यादायामपि स्थिति, त्रि स्थिति स्थानव्यवस्थयो, ह

**स्थिर**—स्थिरा भूशालपर्ण्योर्ना शनौ मोक्षे चले त्रिपु मे स्थिरा भूमौ शालपर्ण्या स्थिरो निश्चलमोक्षयो, वि स्थिरो मोक्षे निश्चले च स्थिरा भू शालपर्ण्यपि, हे स्थिरा महीशालपर्ण्यो, त्रि

**स्थिरदष्ट्र**—स्थिरदष्ट्रो भुजङ्गमे। वराहाकृतिविष्णौ च, मे, वि

**स्थूणा**—अथ स्थूणा स्यात्सूर्म्या स्तम्भे गृहस्य च, मे स्थूणायस स्मृता। प्रतिमाया गृहस्तम्भे, वि स्थूणा सूर्म्या रुगन्तरे, हे स्थूणा स्तम्भेऽपि वेश्मन, अ स्थूणा सूर्मी च दारु च, त्रि

**स्थूल**—स्थूल कूटेऽथ निष्प्रज्ञे पीवरेऽप्यन्यलिङ्गक, मे स्थूल स्यात्पीवरे कूटे निष्प्रज्ञे पुनरन्यवत, वि स्थूल पीने जडे, हे त्रिपु स्थूल जडेऽपि च, अ

**स्थूलोच्चय**—स्थलोच्चयो वरण्डके। गजाना मध्यमगते गण्डाश्माकात्स्न्ययोरपि, हे स्थूलोच्चयो गण्डोपलेऽपि च। गजाना मध्यमगतेऽप्यसाकल्यवरण्डयो मे स्थूलोच्चयस्त्वसाकल्ये गण्डोपलवरण्डयो। गजाना मध्यमगतौ स्थलोच्चय उदाहृत, वि

**स्थेय**—स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते, मे स्थेयो विवादस्य पदनिर्णेतरि पुरोहिते वि स्थेयोऽक्षदृक्पुरोधसो, हे स्थेयौ नेतृपुरोहितौ, त्रि

**स्नान**—स्नान स्नानीयेऽभिषवे, मे स्नान स्नानीय आप्लवे, हे

**स्निग्ध**—स्निग्ध स्नेहयुते चिक्कणेऽपि स्यात् मे

**स्नेह**—स्नेह स्यात्पुसि तैलादिरसद्रव्ये च सौहृदे, मे स्नेहस्तैलादिकरसद्रव्ये स्यात्सौहृदेऽपि च, वि स्नेह प्रेम्णि घृतादिके, हे सौहृदे घृततैलादौ स्यात्स्नेह, त्रि

**स्पर्धा**—स्पर्धा सहर्षणेऽपि स्यात्साम्ये क्रमसमुन्नतौ, मे स्पर्धा सहर्षणे साम्ये स्पर्धा क्रमसमुन्नतौ, वि

**स्पर्श**—स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेऽपि च, मे , वि स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि, हे दाने रोगेऽपि च स्पर्शः , त्रि

**स्पर्शन**—स्पर्शनो मारुते पुंसि दाने स्पर्शे नपुंसकम्, मे स्पर्शनो मारुते स्पर्शदानयोः स्पर्शनं मतम्, वि स्पर्शनं हृषीके दाने स्पर्शे च स्पर्शनोऽनिले, हे अथ स्पर्शदानयोः । स्पर्शनं स्पर्शनो वातः , नि

**स्पश**—स्पशः स्यात्सम्पराये च प्रणिधावपि पुंस्ययम्, मे स्पशः प्रणिधि-युद्धयोः , वि स्पशो हेरिकयुद्धयोः , हे द्वौ चराभिमर्शौ स्पशौ, अ रणे स्पशः , ह

**स्फार**—स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे, मे स्फारः स्याद्विकटे स्फारः सरकादेश्च बुद्बुदे वि स्फारस्तु सरकादीनां बुद्बुदे विपुलेऽपि च, हे

**स्फुट**—स्फुटो व्यक्तप्रफुल्लयोः । व्याप्ते त्रिषु, मे स्फुटो व्यक्तप्रफुल्लयोः । सिते व्याप्ते, हे स्फुटो व्यक्ते प्रफुल्ले च व्याप्ते च कलितेऽन्यवत्, वि

**स्फुटि**—स्फुटिर्योषित्पादस्फोटामयेऽपि च । निर्भिन्नकर्कटीशस्येऽपि स्यात् मे स्फुटिस्त्वङ्घ्रिस्फोटे निर्भिन्नचिर्भिटे हे निर्भिन्नकर्कटीसस्ये पादस्फोटे स्फुटिर्मता वि स्फुटि स्फोटे च कर्कटयाम त्रि

**स्म**—स्मातीते पादपूरणे । स्यान्मङ्गल परकृतौ मे स्म पादपूरणेऽतीते, वि स्मातीते पादपूर्तौ, हे स्म स्यात्समरणादिषु ह

**स्मय**—स्मयो नाऽद्भुतगर्वयो मे स्मयो गर्वेऽद्भुते, वि

**स्मृति**—स्मृतिर्धर्मशास्त्रस्मरणयो स्त्रियाम, मे स्मृतिरिच्छाधियोर्धर्म-संहितायामपि स्मृति वि स्मृति स्मरणधीच्छासु शास्त्रे, हे स्मृति स्याद्धर्म शास्त्रेऽपि त्रि

**स्यन्दन**—स्यन्दनन्तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्, मे स्यन्दनन्तु स्रुतौ नीरे स्यन्दनस्तिनिशे रथे, वि स्यन्दन स्रवणे तोये स्यन्दनस्तिनिशे रथे हे स्यन्दन स्रवणे ना तु रथे तिनिशपादपे, त्रि स्यन्दनाख्या द्रुमे स्रावे स्यन्दनो रथ उच्यते, अने ४ मोक्ष

**स्यमीक**—स्यमीका नीलिकाया स्त्री स्यमीको नाकुवृक्षयो , मे स्यमीक पादपे नाकौ स्यात्स्यमीका तु नीलिका, हे स्यमीका नीलिकायाञ्च स्यमीको नाकुवृक्षयो , वि

**स्यूत**—स्यूत प्रसेवके । ना त्रिपूते, मे स्यूतमूतप्रसेवयो , वि

**स्यूति**—स्यूति सीवनसन्तत्यो स्त्रियाम्, मे स्यूति सीवनसन्तत्यो , वि

**स्यून**—स्यून किरणसूर्ययो , मे , वि

